# उपसर्गार्थचन्द्रिका

(A THESAURUS
OF
SANSKRIT PREPOSITIONAL VERBS)

सेयं

वाक्यपदीयस्य सँस्कर्त्रा श्रीगान्धिचरिताऽनुवादकला-प्रस्ताव-
तरङ्गिणी-शब्दापशब्दविवेक-वाक्यमुक्तावली-व्याकरण-
चन्द्रोदय-वाग्व्यवहारादर्श-श्रीमद्भागवतभाषा-
परिच्छेदादीनामनेकेषां ग्रन्थानां
निर्मात्रा व्याकरणमहाभाष्यस्य विवरीत्रा
श्रीरामकृष्णतनुजनुषा
डा० श्रीचारुदेवशास्त्रिणा प्रणीता

तत्रायं पञ्चमोऽपचिश्मः खण्डः

परि—उप

स एष

ग्रन्थकारेण प्रकाशकनिरपेक्षेण स्वेनैव व्ययेन प्राकाश्यं नीतः ।

# निवेदना

अयमिदानीं चिरोदीक्षितः पञ्चमः खण्डः प्राकाश्यं याति ग्रन्थश्च समाप्तिमेति । परो मे परितोषः सप्ताशीतितमं वर्षं वयसोऽनुभवतो यत्करुणावरुणालयेन भगवता परमेश्वरेणानुगृहीतो गुरुभिश्चानुध्यातस्तैस्तै विदुरैश्च प्रतिनन्दितो ऽहमद्य समापिपं यदितः षष्ठे संवत्सरे प्रावीवृतम् । विंशति र्वा द्वाविंशति र्वा संस्कृते प्रादय उपान्ता उपसर्गाः । तदर्थंयोगान् व्याकुर्वाणो ऽयं सङ्ग्रहो द्वादश शतानि पत्रपार्श्वानि व्यश्नुत इति तत्तद्ग्रन्थोद्धारानुक्रमणे कामपि पर्याप्तिमलं व्यक्तयतीति नापेक्षते वचः । के च ते ग्रन्था इहोद्धृता इति सङ्केतिकात एव तावच्छक्यं निशामयितुं ततः कृतेरस्या आदित आन्तं विलोकनेन चाञ्जसाऽनुभवितुम् ।

अवसितेऽस्मिन्ग्रन्थे मन्दायमाने च मुद्रणे मदधीतेरविरामाच्च तत्तदुपसर्गार्थंयोगविचये भूयः प्रावृतं समग्रहीषं च भूयसीरौपयिकीरुदाहृतीः । ता इमाः प्रादिक्रमेण पुनरप्यन्वक्रमिषम्, मा स्म मेऽङ्गे जरन्नितीमा इहैव पुस्तकेऽन्तेऽनुबन्धरूपेण न्यास्थम् । सोऽयमनुबन्धो द्वासप्तत्युत्तरं शतं पत्रपार्श्वानि व्याप्नोति महान्तमादेयमर्थौघं च स्वस्मिन् समावेशयति । पर्यवसितेऽनुबन्धे परिशिष्टे च सङ्गृहीतेऽर्थंजातेऽनुबन्धान्तरमासङ्क्तुमैषिषम् । इदं चातिरिक्तप्रयासप्रसाध्यम्, उत्तमश्च मे शरीरसाद इति कांश्चिदेवोपसर्गंयोगानु पसंगृह्य व्यरंसिषम् ।

अयमत्र मे प्रणयो विद्वत्सु—अहमेकको ऽसहायः सर्वमपीदं समपीपदम् । तेन यदि क्वचिद् उद्धृतग्रन्थप्रदेशविशेषनिर्देशेऽन्यथात्वमुपलभ्येत, अक्षरयोजककृताः प्रमादाश्च केचनानवहिताः प्रादुःष्युस्तत्क्षमन्तां मे सानुक्रोशा गुणगृह्या विपश्चितः ।

अविश्रान्तेन कृतेरस्या अध्ययनेन वेद्यं विदित्वा ऽलब्धं च लब्ध्वा समर्धिष्यन्ति प्रसत्स्यन्ति च समे समम् अध्यापका अध्यायकाश्च । यद्येवं स्यात्स्यान्मे यत्नः फलेग्रहिरिति मन्वानो विरमाम्यहं विदां विधेयः

चारुदेवः शास्त्री ।

# PREFACE

The long-awaited Fifth Fasciculus now sees the light of the day. With this the present work comes to an end. It gives me an old man of about 87 years, not a little satisfaction that blessed by all-merciful Almighty God, looked upon with favour by my teachers and cheered up by the learned I have finished this day what I started (writing) six years ago. There are in Sanskrit 20 or 22 UPASARGAS ( verbal prefixes). In an attempt to elucidate their varied meanings this collection covers as many as 1200 pages in print. This shows how copious the extracts from the original works are. Which of the works have been drawn upon can be seen first by having a look at the SAMKETIKA and then more exactly by going through the entire work, from the beginning to the end.

When the compilation of the main work was concluded but the press moved very slow and my pursuit of studies continued, I proceeded in my quest of the various uses of the prepositions and collected a very large number of apt illustrations. I arranged them in the order of PRA, PARA, APA, etc. and put them in the form of an appendix at the end of the book, lest they should wearout within me. This appendix covers 172 pages in print and contains very useful (additional) information. When this appendix was finished I thought of compiling another one. But this required additonal labour and my physique was very much reduced, I therefore contented myself with embodying some of the quotations only as addenda and stopped.

It is my humble request to the learned—since I have worked all along single-handed, there may be some lapses in respect of the recording of references and skipping over some of the misprints—that they may excuse me, for they are kind-hearted merit-loving scholars.

I hope that all the teachers and students alike would profit by a sustained study of this work and feel happy by coming across fresh gain. If they do, I shall deem my labour fruitful.

Surabhi, 3/54, Roop Nagar, Delhi-110007
7th August, 1982.

# सङ्केतिका

प्रथमखण्डोपक्रमे कृतनिर्देशेभ्योऽतिरिक्ता ग्रन्था इह सङ्केत्यन्ते ।

| संक्षिप्तं नाम | संक्षेप्यं नाम | संक्षिप्तं नाम | संक्षेप्यं नाम |
|---|---|---|---|
| अभिषेक० | अभिषेकनाटकम् | त्रिपुर० | त्रिपुरदाहः |
| आग्निवेश्य० | आग्निवेश्यगृह्यसूत्रम् | धर्मशर्म्मा० | धर्मशर्म्माभ्युदयः |
| आर्य० | आर्यभटीयम् | ध्वन्या० | ध्वन्यालोकः |
| उप० सा० | उपदेशसाहस्री | नल० | नलचम्पूः |
| उभया० | उभयाभिसारिका | नाट्य० | नाट्यशास्त्रम् |
| ऋक्० | ऋक्तन्त्रम् | नारा० | नारायणीयम् |
| ऋक् प्रा० | ऋक्प्रातिशाख्यम् | निघण्टुः | निघण्टुः |
| काण्व० | काण्वसंहिता | न्या० वा० | न्यायवार्तिक- |
| कात्यायन० | कात्यायनस्मृतिः | त० टी० | तात्पर्यटीका |
| काव्या० | काव्यानुशासनम् (हेम०) | पद्म० | पद्मपुराणम् |
| | | पारस्कर० | पारस्करगृह्यसूत्रम् |
| कुतूहल० | कुतूहलवृत्तिः | पारिजात० | पारिजातहरणम् |
| कुवलया० | कुवलयानन्दम् | प्रताप० | प्रतापरुद्रीयम् |
| कूर्म० | कूर्मपुराणम् | प्रदीपो० | प्रदीपोद्द्योतः |
| कृष्णामृतम् | कृष्णामृतम् | बृ० क० को० | बृहत्कथाकोशः |
| केन० | केनोपनिषद् | बृ० क० म० | बृहत्कथामञ्जरी |
| गरुड० | गरुडपुराणम् | बोप० | बोपदेवः |
| चम्पूभा० | चम्पूभारतम् | बौ० कर्मा० | बौधायनीयकर्मान्त-सूत्रम् |
| चम्पूरा० | चम्पूरामायणम् | | |
| जै० उ० | जैमिनीयब्राह्मणोपनिषत् | ब्रह्माण्ड० | ब्रह्माण्डपुराणम् |
| जै० कु० | जैनकुमारसंभवम् | भाट्ट० | भाट्टदीपिका |
| तत्त्व० | तत्त्वसङ्ग्रहः | भामहा० | भामहालङ्कारः |
| तै० प्रा० | तैत्तिरीयप्रातिशाख्यम् | भाष्य० | भाष्यदीपिका |

| संक्षिप्तं नाम | संक्षेप्यं नाम | संक्षिप्तं नाम | संक्षेप्यं नाम |
|---|---|---|---|
| महिम्नः | महिम्नः स्तोत्रम् | शु० य० प्रा० | शुक्लयजुः प्राति-शाख्यम् |
| मात्स्य० | मात्स्यपुराणम् | श्वेताश्व० | श्वेताश्वतरोपनिषद् |
| मानवगृ० | मानवगृह्यसूत्रम् | सत्याषाढ० | सत्याषाढश्रौत-सूत्रम् |
| यम० | यमस्मृतिः | समुद्र० | समुद्रमथनम् |
| रुक्मिणी० | रुक्मिणीहरणम् | सरस्वती० | सरस्वतीकण्ठा-भरणम् |
| रुद्रट० | रुद्रटकाव्यालङ्कारः | साम० | सामवेदः |
| लिङ्ग० | लिङ्गपुराणम् | सावित्री० | सावित्र्युपाख्यानम् |
| व० बृ० सं० | वराहमिहिर-बृहत्संहिता | स० द० | साहित्यदर्पणः |
| वाग्भटः | वाग्भटः | स्कन्द० | स्कन्दपुराणम् |
| विक्रमाङ्क० | विक्रमाङ्कदेव-चरितम् | स्याद्वाद० | स्याद्वादरत्नाकरः (हैम) |
| विष्णु० | विष्णुधर्मोत्तरम् | हनुमत्० | हनुमन्नाटकम् |
| वीर० | वीरलित्रोदयः | हलायुधः | हलायुधः |
| वृद्धपरा० | वृद्धपराशरसंहिता | हारा० | हारावली |
| वैजयन्ती० | वैजयन्तीकोषः | हास्य० | हास्य डमरुकम् |
| व्यक्ति० | व्यक्ति विवेकः | हि० गृ० सू० | हिरण्यकेशिगृह्य-सूत्रम् |
| शङ्करदि० | शङ्करदिग्विजयः | | |
| शब्देन्दु० | शब्देन्दुशेखरः | | |
| शिवपु० | शिवपुराणम् | | |
| शिष्य० | शिष्यहितान्यासः | | |

# समर्पणम्

शब्दब्रह्मणि निष्ठिता मुनिवराः श्रद्धान्विता यत्कृतिं
शब्दानामनुशासनं ह्यविशयं मानं परं मन्वते।
गाम्भीर्यं विशदार्थतां च महतीं सूक्ष्मां च दृष्टिं सतीं
वृत्त्यादेः प्रथिताः प्रणेतृपरमा यत्रोपलभ्यारताः ॥ १ ॥

तां लोकप्रमदप्रकर्षजननीं भव्यां कृतिं शाश्वतीं
कृत्याः पूर्वतरैः कृताः सुकृतिभिः प्रत्यादिशन्तीं शुभाम् ।
आचार्याय विधानतः कृतवते दाक्षीसुतायार्हिताम्
एतां मत्कृतिमुत्तमां भगवते श्राद्धः स्मरन्नर्पये ॥ २ ॥ (युग्मम्)

ओं नमः परमात्मने ।

नमो भगवते पाणिनये ।

नमः शिष्टेभ्यः । नमः पूर्वेभ्यः पथिकृद्भ्यः ।

उपसर्गा निषिञ्चन्ति वाच्यपूर्वां मनोज्ञताम् ।
इत्युपसर्गवाल्लभ्यमृषीणां सम्प्रसिध्यति ॥ १ ॥

अतो वाचो विवेक्तारो वक्तारो वाग्मिनः किल ।
धातूपसर्गयोगेण तं तमर्थं प्रचक्षते ॥ २ ॥

संहितासु सभाष्यासु निषत्सूपनिषत्सु च ।
भारते चादिकाव्ये च कल्पेषु स्मरणेषु च ॥ ३ ॥

यः प्रायो ह्युपसर्गाणां काव्यनाटकयोस्तु सः ।
गद्ये समासभूयिष्ठेऽथो विमृग्यक्रिये कुतः ॥ ४ ॥

आसंहितं समाहारं समाहारमुदाहृतीः ।
आकाव्यनाटकं चायमुपसर्गार्थसङ्ग्रहः ॥ ५ ॥

प्राक्तनान्नूतनाच्चापि वाङ्मयात्सम्प्रणीयते ।
शिष्टप्रयुक्तिपद्याया: प्रव्यक्तं प्रतिपत्तये ॥ ६ ॥

उपसर्गा द्योतकाः केचिद्वाचकाश्चाप्यमी स्मृताः ।
अनर्थकाश्च लक्ष्यन्ते केचिद् वस्तुस्वभावतः ॥ ७ ॥

धातूपसर्गयोरैक्यं वादिनः केचिदास्थिताः ।
सम्भूयाप्यर्थवाचित्वं ते नः सूक्ष्मदृशो मताः ॥ ८ ॥

इतीदं पक्षनानात्वं सम्प्रधार्यावधारितम् ।
संख्यया पश्चिमः पक्षो गुणैरेष ह्यपश्चिमः ॥ ९ ॥

कृत्यामास्वादमास्वादमेतस्यां वर्तनीं नवाम् ।
नवार्थस्यातिसन्तृप्ताः सम्प्रेष्यन्ते विपश्चितः ॥ १० ॥

अनिशं भासमानां ते चकोराः शब्दवित्तमाः ।
प्रत्यग्रां चन्द्रिकां चेमां निपेष्यन्ते समुत्सुकाः ॥ ११ ॥

**पर्याप्तचन्द्रेव** शरत्त्रियामा (कु० ७।२६) **पर्याप्तचन्द्रा पूर्णचन्द्रा**। यस्य त्रैवर्षिकं धान्यं पर्याप्तं भृत्यवृत्तये (मनु० ११।७)। **पर्याप्तमलम्**। नामृतस्येव पर्याप्तिर्ममास्ति ब्रुवति त्वयि (भा० शां० १२९।१)। **पर्याप्तिः परितोषः**। सन्तुष्टस्यापि जनस्य न त्वमृते पर्याप्तिरस्ति (पद्मप्रा० पृ० १६)। **पर्याप्तिरलंबुद्धिः**। अमात्यभूरिवसोरात्मजेत्यपर्याप्तिर्बहुमानस्य (मालती० १)। **अपर्याप्तिरपरिपूर्णता**। **पर्याप्तिः स्यात् परित्राणम् इत्यमरः**। धातुरद्भुतनिर्माणपर्याप्तिमिव रूपिणीम् (कथा० २६।४७)। **पर्याप्तिः सामर्थ्यम्**। पर्याप्तिः परिमाणं च गतिश्चन्द्रार्कयोस्तथा (मात्स्य पु० ११३।२)। न वा इमाम् (भूमिम्) अश्वरथो न वाश्वतरीरथः सद्यः पर्याप्तुमर्हति ( )। **पर्याप्तुमन्तं प्राप्तुम्**। अकार्याण्यपि पर्याप्य कृत्वापि वृजिनार्जनम् (राज० ४।३८३)। **पर्याप्य समाप्य**। इमां परीप्सुर्दुर्जाते पराभिभवकातराम् (माल० ५।११)। **परीप्सुस्त्रातुमिच्छुः**। हेतुं तदभ्यागमने परीप्सुः (कि० ३।४)। **परीप्सुर्जिज्ञासुः**। योगशास्त्रपरा भूत्वा तमात्मानं परीप्सवः (भा० शां० २५३।१३)। **परीप्सवो जिज्ञासवः**। अपादाने परीप्सायाम् (पा० ३।४।५२)। **परीप्सा त्वरा**।

**—आस् (आस उपवेशने)**। पवित्रवन्तः परि वाचमासते (ऋ० ९।७३।३)। **पर्यासते परित आसते**। परि त्वासते निधिभिः सखायः (ऋ० १०।१७९।२)। इन्दवो मदिन्तमासः परि कोशमासते (ऋ० ९।८६।१)। **कोशं द्रोणकलशम्**। **उक्तोऽर्थः**। प्रप्रान्ये यन्ति पर्यन्य आसते (ऋ० ३।९।३)। **पर्यासते ऽलसा अव्यापारा अनुद्युक्तास्तिष्ठन्ति**। युवो ररावा परि सख्यमासते (ऋ० १०।४०।७)। **पर्यासते प्रार्थयन्ते कामयन्तेऽभीच्छन्ति**। **आत्मनं सख्यात्परिहरन्ति व्यावर्तयन्तीति तु संस्कृतशार्मण्यकोषः**। किमन्ये पर्यासतेऽस्मत्स्तोमेभिरश्विना (ऋ० ८।८।८)। **पर्यासते पर्यवस्थाय आसते तिष्ठन्ति। प्रतिरुन्धन्ति, वारयन्तीत्यर्थः**। कण्डूं चोपजनयन्तो गदमुखं पर्यासते (चरक० विमान० ७।१३)। **पर्यासते परिवार्यासते**।

**—इ (इण् गतौ)**। कस्मात्सत्याद् गायत्री कनिष्ठा छन्दसां सती यज्ञमुखं परीयाय (तै० सं० ६।१।६।४२)। **परीयाय प्राप**। आसामहं राज्यं परीयाम् (तै० सं० ७।५।८।३)। **परीयाम् प्राप्नुयाम् अधिगच्छेयम्**। अग्रं देवतानां परीयाय (तै० ब्रा० ३।१।५।८)। **श्रैष्ठ्यम् प्रापेत्यर्थः**। एतस्याग्नेरन्तं न पर्येत् (श० ब्रा० ६।२।१।७)। **उक्तोऽर्थः**। यद्वा एतैरत्र सर्वैः प्रजापतिरयक्ष्यत तदेवाग्नेरन्तं पर्यैष्यत् (श० ब्रा० ६।२।१।१३)। **उदितचर एवार्थः**। सर्वेषां भूतानां श्रैष्ठ्यं···पर्येति (शां० ब्रा० २६।३)। **पर्येति प्राप्नोति**। न स पुनरग्रं पर्येति (पञ्च० ब्रा० १९।१२।९)। वसूनामेव तावदाधिपत्यं स्वाराज्यं

पर्येता (छां० उ० ३।६।४) । **लुटि रूपम् । अर्थस्तु निर्विशेषः ।** तत् परीयाच्चिकीर्षितम् (का० नी० सा० १२।३६) । **परीयाद् गच्छेत् । कर्तुमिति शेषः ।** परि द्यावा पृथिवी सद्य आयम् (अथर्व० २।१।४) । **परितः प्राप्तवानस्मि, परिक्रम्यायम्, पर्यक्राम्यम् ।** त्वं तृतं त्वं पर्येष्युत्सम् (अथर्व० १७।१।१५) । जरा वली च मां तात पलितानि च पर्यगुः (भा० आदि० ८४।२७) । **पर्यगुः अभिव्यापन् ।** अन्तर्बहिश्च लोकांस्त्रीन् पर्येम्यस्कन्दितव्रतः (भा० पु० १।६।३२) । **पर्येमि व्यश्नुवे व्याप्नोमि ।** ये त्रिषप्ताः परियन्ति विश्वा रूपाणि बिभ्रतः (अथर्व० १।१।१) । **प्रतिकल्पं प्रतिवत्सरं प्रतिदिनं प्रतिशरीरं पर्यावर्तन्त इत्यर्थ इति सायणः ।** दन्द्रम्यमाणाः परियन्ति मूढाः (कठोप० १।२।५) । **परियन्ति परिभ्रमन्ति ।** स (मेध्योऽश्वः) पर्येतु (पृथिवीं सागराम्बराम्) यशो दीप्तं तव पार्थिव दर्शयन् (भा० आश्व० ७२।६) । **पर्येतु विचरतु ।** क्षीण पुण्येव वसुधां पर्येमि विमलानन (हरि० २।४१।१८) । **पर्येमि पर्यटामि ।** परि वां सप्त स्रवतो रथो गात् (ऋ० ७।६७।८) । **परिगात् पर्यगात् पर्यक्रामत् ।** स तेनाभिद्रुतः काकस्त्रींल्लोकान्पर्यगात्ततः (रा० २।९६।४५) । **पर्यगात् पर्याटीत् ।** सुखं दान्तः प्रस्वपिति सुखं च प्रतिबुध्यते । सुखं पर्येति लोकांश्च··· (भा० शां० १६०।१२) । **पर्येति विचरति पर्यटति ।** यम् (रथम्) आरूढः स भगवान् पर्येति सकलं जगत् (मात्स्य पु० १७४।७) । **उक्तोऽर्थः ।** अहमुत्तरतः पर्येष्यामि (श० ब्रा० १।२।४।११) । **पर्येष्यामि परिक्षेप्स्यामि परिवेष्टयिष्यामि ।** यथा यथा च पर्येति लोकतन्त्रमसारवत् (भा० शां० १७४।४) । **पर्येति पर्यालोचयति ।** मनसा सप्त पर्येति क्रमशो विषयानिमान् (भा० वन० १०१।२०) । **पर्येति परिचिन्तयति सम्यग् जानाति ।** अनर्थं सानुबन्धं यो विदित्वा सर्वकर्मसु । अर्थमर्थानुबन्धं च पर्येष्यति स पण्डितः (रा० ५।८१।४) ॥ **पर्येष्यति विज्ञास्यति ।** अथ क्षमामेव निरस्तविक्रमश्चिराय पर्येषि सुखस्य साधनम् (कि० १।४४) । **पर्येषि=अवगच्छसि ।** परि त्वेषस्य दुर्मतिर्मही गात् (ऋ० २।३३।१४) । **परिगात् अपक्रामेत्, निवर्तताम्, अस्मानतिहाय गच्छेत् ।** यत् किंच वदामि तन्मे मा परिगात (ऐ० ब्रा०६।३३) । **मा परिगात निन्दां मा स्म कुरुतेति सायणः । सोऽयमर्थः शब्दमर्यादया दुर्लभः । नात्र गायतिधातुः । परिपूर्व एतिरिह परिवर्जनेऽनाकर्णनलक्षणे वर्तत इति संस्कृतशार्मण्यकोषः ।** जिष्णुं त्रैगर्तकाः परीताः पर्यवारयन् । (भा० १४।२१६७) । **परीता इत्यत्र कर्तरि क्तः ।** परितो गता इत्यर्थः । ते परीताः कुरुश्रेष्ठ नश्यन्तः स्म ह्युपेक्षिताः (भा० आश्व० ५३।२२) । **इहापि पूर्ववत् कर्तरि निष्ठा । परितः प्राप्ता इत्यर्थः ।** परीतं बहुभिर्वृक्षैः श्यामं सिद्धोपसेवितम् । (रा० २।५५।६) ।

**परीतं परिक्षिप्तम्। कर्मणि क्तः।** धूमेनापि परीताङ्गीं दीप्तामग्निशिखामिव (रा० १।४९।१६)। धृतिपरीतमिवात्मानं दर्शितवान् (पञ्चत०)। परीत-कालः पुरुषो यत् कर्म प्रतिपद्यते (रा० ३।५७।१८)। **परीतकालो तीतकालः क्षीणायुः।** परीतसत्त्वाः सहसा निपेतुः (भा० भी० ५९।१२१)। **परीत-सत्त्वा गतप्राणाः। परासवो व्यसवः।** अपि वोद्वन्धनादीनि परीतानि व्य-वस्यति (भा० आश्व० १७।१३)। **परीतानि विपरीतानि।** परीतस्तव पुत्रोऽयं धृतराष्ट्र सुमन्दधीः (भा० उ० ८८।१९)। **परीतः, विपरीतः. प्रतीपः।** परीत्य लोकान्...प्रदिशो दिशश्च (वा० सं० ३२।११)। **मनसा परिक्रम्य।** परीत्येशानं त्रिः (कि० १८।४५)। **परीत्य प्रदक्षिणीकृत्य।** प्रदक्षिणं परीत्याग्निं चरेद्भैक्षं यथाविधि (मनु० २।४८)। **परीत्य परिक्रम्य।** ततः श्रेष्ठी समं तेन त्रिः परीत्य जिनालयम् (बृ० क० को० ७०।७८)। **उक्तोऽर्थः।** परीत्य कृत्स्नं मनसा नृलो-कम् (अवदा० जा० २।४)। **परीत्य पर्यटच विचर्य।** यस्यामितानि वीर्या न राधः पर्येतवे (ऋ० ८।२४।२१)। **पर्येतवे परिमातुं शक्यम्।** तान् (असुरान् देवाः) समन्तं पर्यायं प्राणुदन्त (पञ्च० ब्रा० ९।१।३) **पर्यायं परीत्य। णमुलन्तम्।** मा भूत् कालस्य पर्ययः (रा० १।७३।३)। **पर्ययोऽत्ययः।** यथर्तुलिङ्गान्यृतवः स्वयमेवर्तुपर्यये (मनु० १।३०)। **ऋतुपर्यये स्वकायविसरे।** पश्य कालस्य पर्ययम् (भा० वि० १९।४२, आश्रम० ११।१२)। पर्ययो **विपर्ययः, वैपरीत्यम्, प्रातिकूल्यम्।** कालपर्यायमाज्ञाय मा स्म शोके मनः कृथाः (भा० भीष्म० २।५)। वहेदमित्रं स्कन्धेन यावत्कालस्य पर्ययः। ततः प्रत्यागते काले भिन्द्याद् घटमिवाश्मनि (भा० आदि० १४०।२१-२२)॥ **उक्तोऽर्थः।** नोत्सीदेम (वयं मृगाः) महाराज क्रियतां वासपर्ययः (भा० वन० २५८।५)। **पर्ययः परिवर्तः। वासान्तरं नः कल्प्यतामित्याह।** पक्षिणोपि. निपातेन येषां स्या-त्स्कन्धपर्ययः (भा० शां० १५।२६)। पर्ययो विगमो विनाशः। ऋतुपर्याय-शिथिलैर्वृत्तनृत्यसमुज्झितैः (हरि० २।१६।२५)। **पर्यायोऽपगमो व्यपायः।** आङ्गरिष्ठोऽथ पप्रच्छ कृत्वा समयपर्ययम् (भा० शां० १२३।१२)। **समयपर्ययो मर्यादाभङ्गः।** अदृश्यन्तोष्णपर्याये मेघानामिव वागुराः (भा० द्रोण० ९८।३२)। **पर्यायः पर्ययोत्यय.।** कालपर्याययोगेण राजा मित्रसहोऽभवत् (रा० ७।६५।१७)। **उक्तोऽर्थः।** पर्यायकाले धर्मस्य प्राप्ते कलिरजायत (भा० उ० ७४।१२)। पर्यायोऽन्तः। पर्यायपीतस्य सुरैर्हिमांशोः कलाक्षयः श्लाघ्यतरो हि वृद्धेः (रघु० ५।१६)। **पर्यायः क्रमः परिपाटी।** पर्यायेण क्रियायामेवं दोषः। तन्त्रेण तु क्रियायां भवति क्वचित्संभवः (मी० ६।२।२ सूत्रे शा० भा०)। पर्यायेण हि दृश्यन्ते स्वप्नाः कामं शुभाशुभाः

(वेणी० २।१४)। **पर्यायेण कादाचित्कतया**। मत्सदृशं किमपि पुंरूपं मां च पर्यायेण निर्वर्णयन्ती (दशकु० ५)। लोकपर्यायवृत्तान्तं प्राज्ञो जानाति नेतरः (भा० शां० १७४।३०)। **लोकपर्यायो लोकनिर्माणम् इति नीलकण्ठः**। कोषं च प्रमाणमुद्धरति—पर्यायस्तु प्रकारे स्यान्निर्माणेऽवसरे क्रमे इति विश्वः। न पर्यायोऽस्ति मत्साम्यं त्वयि कुर्याद्विशाम्पते (भा० उ० ७३।७)। **पर्याय उपायः**। पर्यायो निधनस्यायं निर्धनत्वं शरीरिणाम् (पञ्चत० २।९९)। **पर्यायो नामान्तरम्**। न पर्यायोऽस्ति यद्राजन् श्रियं निष्केवलामहम्। तैः सहेमामुपाश्नीयाम् ······(भा० उ० ८८।१२)॥ **पर्यायः प्रकारान्तरम् इति नीलकण्ठः**। अम्लानमालान्वितसुन्दरीणां पर्याय एषोऽस्ति च हर्षितानाम् (मात्स्य-पु० १३९।४०)। **पर्यायः प्रकारः, विधिः, आचारः**। अस्त्राणामपि पर्यायं कर्तुमिच्छन्ति मानवाः (भा० शल्य० ३२।३०)। **पर्यायः परिवर्तनमस्त्रान्तर-ग्रहणम्**। पर्याये तात कस्मिंश्चित् ब्राह्मण्यमिह विन्दति (भा० अनु० २९।१२)। **पर्याये कालपर्यये सति**। यथर्तुष्वृतुलिङ्गानि नानारूपाणि पर्यये। दृश्यन्ते तानि तान्येव······(वि० पु० १।५।६५)॥ **पर्यये पुनः पुनरागमे**। चतुर्युगान्त-पर्याये लोकानां यद् भयं भवेत् (हरि० १।४२।१६, मात्स्य पु० १।७२।१७)। **अन्तपर्याये चरमेऽवान्तरप्रलये**। पर्यायार्थे ददुश्चापि रत्नानि सुबहून्यथ (हरि० २।९३।४)। **पर्यायार्थे वेषधारणार्थमिति नीलकण्ठः**। पर्यायं नाध्यवस्यन्ति देवमानुपयोर्जना: (भा० उ० ७७।४)। **पर्यायं बलाबलनिर्णयम्**। नैनं घ्नन्ति पर्यायिणः (अथर्व० ६।७६।४)। **पर्यायिणः परित आगन्तारः**।

—**इष्** (**इष गतौ, इष इच्छायाम्**)। स होवाच भगवन्तं वा अहमेभिः सर्वैरार्त्विज्यैः पर्यैषिषम् (छां० उ० १।११।२)। **पर्यैषिषममार्गयम्**। दोषं ह्येषां नाध्यगच्छं परीच्छन् (भा० उ० २२।४)। **परीच्छन् अन्विष्यन्, परीक्षमाणः**। श्रूयतां यः प्रयत्नो मे सीतापर्येषणे कृतः (भा० वन० २८२।१७)। **पर्येषणमन्वेषणं विचयः**। ब्राह्मणेष्वेव मेधावी बुद्धिपर्येषणं चरेत् (भा० वन० २९।१८)। **बुद्धिपर्येषणं बुद्धेः साकल्येन सङ्ग्रहणम्**। बाधनाऽनिवृत्तेर्वेदयतः पर्येषणदोषादप्रतिषेधः (न्याय० ४।१।५७)। **पर्येषणं प्रार्थना**। **परेरिच्छार्थस्य इषेर्ल्युटि रूपम्**। हीयमानेन वै सन्धिः पर्येष्टव्यः समेन वा (भा० शल्य० ४।४३)। **पर्येष्टव्य एष्टव्यः**।

—**ईक्ष्** (**ईक्ष दर्शने**)। अथ सर्वाणि भूतानि पर्यैक्षत (श० ब्रा० १०।४।२।२१)। **इतस्ततोऽवालोकयदित्यर्थः**। अर्थनित्यः परीक्षेत केनचिद् वृत्तिसामान्येन (नि० २।१) **परीक्षेत परिच्छिन्द्यात्, विविञ्चीत**। दूरादेव परीक्षेत ब्राह्मणं वेदपारगम् (मनु० ३।१३०)। **परीक्षेत लक्षयेत् विभावयेत्**।

**दूरात् पितृपितामहाद्यभिजनशुद्धिनिरूपणेनेति कुल्लूकः।** ततो वासं परीक्षेत धर्मनित्येषु साधुषु (भा० शां० २८७।३६)। **परीक्षेत इच्छेत्।** परीक्षमाण-स्तत्राथ मार्गमाणश्च जानकीम् (रा० ५।१७।१)। **परीक्षमाण इतस्ततो विलोकमानः।** तुलामानं प्रतीमानं सर्वं च स्यात्सुलक्षितम्। षट्सु षट्सु च मासेषु पुनरेव परीक्षयेत् (मनु० ८।४०३)॥ **परीक्षां कारयेत्।** अदेव-मातृकान् ग्रामान् परीक्ष्य विविधाः क्षितीः। संविभेजे विभक्तेन नादेयेन वारिणा (रघु० ५।१०६)॥ **परीक्ष्य सम्यग् विभाव्य।**

—ईश् (ईश ऐश्वर्ये)। स्रष्टापि नापमार्ष्टुं तत् परीष्टे स्वकृतां कृतिम् (स्कन्द पु० का० ४।१६।५०)। **परीष्टे ईष्टे प्रभवति। नार्थः परिणा।**

—**उक्ष् (उक्ष सेचने)**। त्रिः (अग्नीन्) पर्युक्षति (गो० ब्रा० पू० १।१४)। **पर्युक्षति परित उक्षति अभिषिञ्चति।** तद्रुधिरपर्युक्षितं निजाश्रमा-ङ्गनं दृष्ट्वा (महावीर०)। **पर्युक्षितमभिषिक्तम्। शोणिताप्लुतम्।** आहवनीयं पर्युक्ष्य (का० श्रौ० ४।१३।१६)। **उक्तोऽर्थः।**

—ऊह् (ऊह वितर्के)। त्वा····· पर्यूहामि शतशारदाय (तै० सं०)। **परिवहामि, प्रतिगृह्णामीत्यर्थः।** (यूपं) पुरीषेण पर्यूहति (भा०श्रौ० ७।८।१३)। **मृच्चयेन परिष्टभ्नाति।** हनू हैवास्यैतेऽअथ पर्यूहति (श० ब्रा० ३।५।४।२२)। **मृदा प्रच्छादयतीत्यर्थः।** विशैवैनं पशुभिर्ब्रह्मवर्चसेन पर्यूहति (तै० आ० ५-३)। **पर्यूहति परिक्षिपति। वेष्टयति।** देवपुरा एवैतास्तनुपानीः पर्यूहते (तै० सं० ५।७।३।१०)। **पर्यूहते प्रतिष्ठापयति।** दक्षिणतो वज्रं पर्यौहत् (तै० सं० ५।३।६।२६)। **पर्यौहत् अधारयत्।** ते देवाः प्रतिबुध्य मित्रावरुणौ दक्षिणतः पर्यौहन् (ऐ० ब्रा० ६।४)। **रक्षकत्वेनावस्थापितवन्त इति सायणः।** ते वायुमवस्तात् पर्यौहन् (जै० ब्रा० २।६)। **अधारयन्नित्यर्थः।** अस्मै यजमानाय पर्यूह (तै० सं० १।१।७)। **परितः सेवमानान् कुर्वित्यर्थः।** कुम्भी···साम्ना पर्यूढा (अथर्व० ११।३।१५)। **पर्यूढा परिवेष्टिता।** प्रदक्षिणं पांसुभिः पर्यूह्य (आप० श्रौ० ७।३।१०।१२)। **पर्यूह्य वेष्टयित्वा। पर्युह्येति तु पाणिनीया इच्छन्ति।**

—**ऋ (ऋ गतौ)।** प्रत्येव तिष्ठति पर्यारिणी भवति (तै० सं० २।१।४।७)। **पर्यारिणी प्रसवकालमतीत्य कृतप्रसवेति भट्टभास्करः।** पर्यारिणीति परिहासूर्भवति (सत्या० श्रौ० २२।१।८)। **या गौर्गर्भिणी सती प्राप्तं प्रसवकालं परित्यज्य चिरं गर्भं धृत्वा पश्चात्प्रसूयते सा पर्यारिणी।**

—**ऋष् (ऋष गतौ)।** अथ पर्यृषति।······समम्भूमिपर्यृषणं करोति

(श० ब्रा० ३।६।१।१८)। मृदं निपीडयतीत्यर्थः। परि यत्काव्या कविर्नृम्णा वसानो अर्षति (ऋ० ९।७।४)। पर्यर्षति परिगच्छति परिक्रामन्नधिगच्छति। तान्सर्कैः स्तोमैरवस्तात् पर्यार्षन् (ऐ० ब्रा० ४।१९)। पर्यार्षन् परितो गताः, रक्षणार्थं परितो वेष्टनं कृतवन्त इत्यर्थ इति सायणः।

—एष् (एषृ गतौ)। जग्मुः सिद्धसंकल्पाः पर्येषन्तो विभावसुम् (भा० अनु० ८५।१९)। पर्येषन्तो विचिन्वन्तः।

—कथ् (कथ वाक्यप्रबन्धे)। यतः काव्यस्य प्रभेदा मुक्तकं…पर्यायबन्धः परिकथा…इत्येवमादयः (ध्वन्या० ३।७ व्याख्यायाम्)। धर्मादिपुरुषार्थान्यतमाधिकरणकः कथासङ्ग्रहः परिकथा।

—कल् (कल गतौ संख्याने च)। स्त्रीलोकः परिकलयाञ्चकार तुल्यं पल्लवैर्विगलितहारचारुभिः स्वैः (शिशु० ८।९)। परिकलयाञ्चकार मेने जग्राह।

—काङ्क्ष् (काक्षि काङ्क्षायाम्)। परिकाङ्क्षितः परित्यक्तैषणो यतिर्भवति।

—कास् (कासृ शब्दकुत्सायाम्)। परिकासनं पुनः पुनः कासनं भवति। तथा चापस्तम्बगृह्ये (३।३।२) प्रयोगः— अर्थप्राब्वस्य परिक्षवे परिकासने चाप उपस्पृश्य।

—कुप् (कुप क्रोधे)। सुदर्शनं परिकुपितं निशम्य ते (भा० आदि० १९।२९)। परिकुपितम् अतिकुपितम्।

—कूज् (कूज अव्यक्ते शब्दे)। पर्यकूजि सरुजेव तरुण्यास्तारलोलवलयेन करेण (मा० ८०)। पर्यकूजि परितो गुञ्जितम्, सर्वतो विरुतम्।

—कृ (डुकृञ् करणे)। वासो यथा परिकृतं मदिरामदान्धः (भा० पु० ११।१३।३६)। परिकृतं परिहितं परिकीर्णं परिक्षिप्तम्। नालीढया परिकृतं भक्षयीत कदाचन (भा० अनु० १०४।९०)। परिकृतं संस्कृतं सम्पादितम्। आलीढा रजस्वला। नालीढं नापरिहितमिति पाठान्तरम्। तत्रालीढं गवाद्याघ्रातम्। अपरिहितं परिषेचनहीनम्। वैसर्पदाहज्वरयोरेवं चोक्ता परिक्रिया (का० सं० चिकित्सा० मदात्यय० श्लो० ५१)। परिक्रिया शोधनम्। कुटीकञ्चुकनेपथ्यमण्डपादेः परिक्रियाम् (शुक्र० २।१५५)। उक्तोऽर्थः। तद्वशीकारात् परिपूर्णयोगिनश्चित्तं न पुनरभ्यासकृतं परिकर्मापेक्षते (यो० सू०

१।३९ सूत्रभाष्ये) । **परिकर्म संस्कारः, शोधनम्** । प्रसादं कुरु तन्वङ्गि क्रियतां परिकर्म ते । भजस्व माम्...(भा० वन० २८१।८) ।। **परिकर्म प्रसाधनम्** । **परिकर्माङ्गसंस्कार इत्यमरः** । मैत्र्यादिचित्तपरिकर्मवित् (शिशु० ४।५५) । **चित्तपरिकर्म चित्तपरिशुद्धिः** । अनग्निकाः सोदकाश्च खले स्युः परिकर्म्मिणः ( ) । **परिकर्म्मिणः अङ्गपरिमार्जाः, शोधकाः, अलङ्कारकाश्च** । ममाप्येष स्तोत्रे हर निरपवादः परिकरः (महिम्नः स्तोत्रे १) । **परिकरः कटिः, परिकरबन्धः**, ...यत्कृत परिकरो मया । तत् साधय त्वमपि...(कथा० २६।२०२) । **उक्तोऽर्थः** । परिकर्ता स याजको भवति यः परिवेत्तृविवाहविधिं निर्वर्तयति स च पतितो भवतीति हारीतः ।

—**कृत्** (कृती छेदने) । ऋश्यस्येव परिशासं परिकृत्य परि त्वचः (अथर्व० ५।१४।३) । **परिकृत्य परितः कर्तित्वा, परिच्छिद्य** । गणान्नं गणिकान्नं च लोकेभ्यः परिकृन्तति (मनु० ४।२१९) । **परिकृन्तति पृथक्करोति । व्यावर्तयतीत्यर्थः** । अङ्गानि मा परिकर्तीः (शां० ब्रा०१०।४) । **अङ्गभङ्गं मा कार्षीः, विशसनं मा स्म करोः** । आटोपशूलौ परिकर्तिका च (सुश्रुत० उत्तर० अ० ५५) । **परिकर्तिका कर्तनवत् पीडा** ।

—**कृत्** (**कृती वेष्टने**) । आस्तां जाल्म उदरं श्रंसयित्वा कोश इवाबन्धः परिकृत्यमानः (अथर्व० ४।१६।७) । **परिकृत्यमानो वेष्टचमानः** ।

—**कृष्** (**कृष विलेखने** । श्वापदाः परिकर्षन्तु नरांश्च निहतान्मया (रा० २।९६।३०) । **परिकर्षन्तु परितः कर्षन्तु** । इतश्चेतश्चैनं कृतान्तः परिकर्षति (रा०) । रागाभिभूतः पुरुषः कामेन परिकृष्यते (भा० वन० ) । **उक्तोऽर्थः** । यो ऽसौ शतसहस्राणि सहस्रं परिकर्षति (रा० ६।२।२८) । **परिकर्षति नयति, सेनानीर्भवति** । स्थाने ऽस्मिन् (स्वर्गे) वस राजेन्द्र कर्मभिर्निर्जितैः शुभैः । किं त्वं मानुष्यकं स्नेहमद्यापि परिकर्षसि (भा० महाप्रस्था० ३।३३) । **परिकर्षसि वहसि, सततं चिन्तयसि इति भावः** । अनावृष्टचा तथा राजा स तदा परिकर्षितः (रा० १।८।१३) । **परिकर्षितः कदर्थितः परिक्लिष्टः** । नाविन्दतार्ति परिकर्षितापि (भा० पु० ४।२३।२०) । **कृच्छ्रगताऽपीत्यर्थः** ।

—**कॄ** (**कॄ विक्षेपे**) । सोमक्रयण्याः पदं जघनेन गार्हपत्यं परिकिरति (श० ब्रा० ३।६।३।४) । **परिकिरति विकिरति** । यदा परिकरिष्यन्ति ऐणेयानि तन्तुना (भा० उ० ६३।७) । **परिकरिष्यन्ति वेष्टयिष्यन्ति** । प्रभिन्नमिव मातङ्गं परिकीर्णं करेणुभिः (भा० वि० १९।२९, रा० ५।१८।२८) । **परिकीर्णमाकीर्णं**

**परिगतम् परिक्षिप्तम्**। दिवसं परिकीर्णानामाहारार्थं पतत्त्रिणाम् (रा० २।११६।४)। **परिकीर्णानां परितः संचरितवताम्**। भ्रमरैः कुसुमानुसारिभिः परिकीर्णा परिवादिनी मुनेः (रघु० ८।३५)। **उक्तोऽर्थः**। महीं महेच्छः परिकीर्य सूनौ (रघु० १८।३३)। **परिकीर्य परिदाय समर्प्य**। धृष्टिभ्यां भस्मना परिकीर्याङ्गारैश्च (का० श्रौ० २६।३।६)। **परिकीर्य आकीर्य**।

—**कृत्** (**कृत संशब्दने**। न दत्त्वा परिकीर्तयेत् (मनु० ४।२३६)। **न परिकीर्तयेत् न परस्य कथयेत्, नोच्चैर्घोषयेत्**।

—**क्लृप्** (**कृपू सामर्थ्ये**)। श्रेयसे शाश्वतो देवो वराहः परिकल्पताम् (उत्तर० ५।२७)। **परिकल्पतां परिकल्पयताम् प्रदिशतु वितरतु**। गौर्मूल्यं परिकल्प्यताम् (भा० अनु० ५१।२२)। गौः क्रयसाधनं द्रव्यमुत्तम विज्ञायताम् इत्यर्थः। उभे सन्ध्ये शयानस्य यत्पापं परिकल्प्यते (रा० २।७५।४४)। **परि-कल्प्यते (शास्त्रेण) विधीयते**। दशावरा वा परिषद् यं धर्मं परिकल्पयेत् (मनु० १२।११०)। **परिकल्पयेत् विनिगमयेत्, व्यवस्येद्, व्यवस्थापयेत्**। सर्वागमानामाचारः प्रथमः परिकल्प्यते (भा० अनु० १४९।३७)। परिकल्प्यते **परिगण्यते**। सन्धिं च विग्रहं यानमासनं संश्रयं तथा। द्वैधीभावं गुणानेतान्यथावत् परि-कल्पयेत् (याज्ञ० १।३४७)॥ **यथावत् परिकल्पयेत् सम्यक् प्रयुञ्जीत**। आर्य-पुत्रायमेकाकी नूपुरो न विराजते। अनुरूपस्तदेवास्य द्वितीयः परिकल्प्यताम् (कथा० २५।१७३)॥ परिकल्प्यतां निर्माप्यताम्। अन्यत्र वासं परिकल्पयन्तु (व० वृ० सं० ५९।११)। वासं गृहं निर्मान्त्वित्यर्थः। न त्वेनं वणिजं तात श्राद्धे च परिकल्पयेत् (भा० अनु० २३।२५)। **परिकल्पयेत् केतयेत्, निमन्त्र-येत**। श्यामान् वारणपुष्पांश्च तथाष्टपदिका लताः। तत्र तत्र परिक्लृप्ता ददर्श स महीपतिः (भा० अनु० ५४।६)॥ **परिक्लृप्ता** विद्यमानाः। परिकल्पित-सान्निध्या काले काले च वन्दिषु (रघु० ४।६)। परिकल्पितं कृतं साधितम्। चित्रे निवेश्य परिकल्पितसत्त्वयोगा (शा० २।१०)। **उक्तोऽर्थः**। मिथुनं परिकल्पितं त्वया सहकारः फलिनी च नन्विमौ (रघु० ८।६१)। **परिकल्पितं प्रणीतं रचितं योजितम्**। निश्चिते गमनेऽन्येद्युर्लग्ने च परिकल्पिते (कथा० १५।१२७)। परिकल्पिते नियते। यं सर्वशैलाः परिकल्प्य वत्सम् (कु० १।२)। परिकल्प्य, विधाय, वत्सत्वमारोप्य।

—क्रम् (क्रमु पादविक्षेपे)। परि वाजपतिः कविरग्निर्हव्यान्यक्रमीत् (ऋ० ४।१६।३)। पर्यक्रमीत् परितो गतवान्, पर्यरभतेत्यर्थः। तामन्वेष्टुं स नृपतिः परिचक्राम सर्वतः (भा० आदि० १७१।४३)। परिचक्राम परिबभ्राम पर्याट। अक्षौहिणीपरिवृतः परिचक्राम मेदिनीम् (रा० १।५१।२१)।

**उक्तोऽर्थः**। मृत्युमेव तत् पर्यक्रामत् (ऐ० ब्रा० ३।१४)। पर्यक्रामत्=अत्यक्रामत्, उदलङ्घत। यथाविधि यथान्यायं परिक्रामन्ति शास्त्रतः (रा० १।१४।३)। शास्त्रोक्तस्वस्वक्रियाक्रममविस्मृत्य प्रवर्तन्त इत्याहेति कतक.। पर्यक्रामंश्च विधिवत् स्वे स्वे कर्मणि याजकाः (रा० १।१४।३)। इति पाठान्तरम्। प्राकारं परितः शरासनधरैः क्षिप्रं परिक्रम्यताम् (मुद्रा० २।१३)। **धानुष्काश्चङ्क्रम्यन्तामित्याह**। परिक्रान्ता मही सर्वा सत्त्ववन्तश्च सूदिताः (रा० १।४०।७)। परिक्रान्ता भ्रान्ता। परिक्रान्तेषु लघुषु अध्वर्युपुरुषेषु च (मात्स्य० पु० १४३।८)। छायामिव प्रतान्त्सूर्यः परिक्रामन्ननीनशत् (अथर्व० ८।६।८)। **उक्तोऽर्थः**। परिक्रामति संसारे चक्रवत् (भा० वन०)। **परिवर्तमाने**। इदं चोदात्तदन्तानां कुञ्जराणां तरस्विनाम्। शैलपार्श्वे परिक्रान्तम्··· (रा० २।१००।१०)॥ परिक्रान्तं परिक्रमणस्थानम्। अधिकरणे क्तः। स समीक्ष्य परिक्रान्तं सीताया राक्षसस्य च (रा० ३।६४।३६)। **परिक्रान्तं परिक्रमम्**। पादन्यासमिति यावत्। नपुंसके भावे क्तः। ऊरुवेगेन महता भीमेन परिकर्पिणा। उत्सहेऽहं परिक्रान्तुं (=परिक्रमितुम्) सर्वानाकाशगोचरान् (रा० ५।३।४२)। **परिक्रमितुमासादयितुमत्यासादयितुमिति वा**। सेयं सर्वज्ञस्य ज्ञेया व्यवस्थाऽनुपदं न शक्या परिक्रमितुम् (३।१।३ न्यायसूत्रे भा०)। परिक्रमितुं परावर्तयितुम्, प्रत्याख्यातुम्। परिक्रम्यावलोक्य च (नाटकेषु कविवाक्यम्)। परिक्रम्य चङ्क्रमणं कृत्वा।

—क्री (डुक्रीञ् द्रव्यविनिमये)। य एवास्य मृत्यौ पादस्तमेव तेन परिक्रीणाति (श० ब्रा० ११।३।३।५)। क्रीणातीत्येवार्थः। पवस्तैस्त्वा (हे ओषधे) पर्यक्रीणन् (अथर्व० ४।७।६) पर्यक्रीणन् विन्यमयन्त। **विनिमयेनागृह्णन्नित्यर्थः**। ब्राह्मणं सुरापं परिक्रीणीयात् (शां० श्रौ० १५।१५।१४)। **परिक्रीणीयात् परिक्रीणीत अवक्रीणीत भाटकेन गृह्णीयात्**। कृतेनोपकृतं वायोः परिक्रीणानमुत्थितम् (मैनाकमद्रिम्) (भट्टि० ८।८)। **कृतेन प्रत्युपकारेण कृतमुपकारं प्रतिददानम्**। संभोगाय परिक्रीतः कर्तास्मि तव नाप्रियम् (भट्टि० ८।७८)। **परिक्रीतः क्रीतः**। शतेन शताय वा परिक्रीतः (दासः) (सि० कौ०)। **नियतकालभृत्यतया स्वीकृत इत्यर्थः**। अन्तेवासी वा जुहुयाद् ब्रह्मणा स परिक्रीतः। क्षीरहोता वा जुहुयाद् धनेन स परिक्रीतः (न्या० भा० ४।१।६०)। ऋत्विजः शवद्रव्यं दक्षिण्यं प्रतिष्ठाप्य तत्परिक्रीतास्त्यागं कुर्वन्ति (मी० शा० भा० १०।२।१७।४७)। भक्त्यै मुक्तिः परिक्रीता सद्भिर्विष्णोरुषादिभिः (बोप० ५।१८)। **भक्त्यै भक्त्या। करणेऽर्थे सम्प्रदानं वा। अत्र क्रयणम् एवार्थः, न तु परिक्रयणम्। भक्तिरत्र भृतिरित्युपचर्यते। नियतकाला मुक्तिः स्वीक्रियत इति**

भक्तिपरा न सहन्ते । परिक्रयणे सम्प्रदानमन्यतरस्याम् (पा० १।४।४४)। परिशब्दः सामीप्यं द्योतयति । क्रयो नामात्यन्तिकं स्वीकरणम् । नियतकालं तु तत्समीपमेवेति परिशब्दस्यार्थ इति पदमञ्जरी । परितः क्रयणं परिक्रयणमिति व्युत्पत्तिस्तु न साध्वी । विपरीतार्थाख्यानप्रसक्तेः । दीक्षितोपि शब्दकौस्तुभे हरदत्तमेवानुविधत्ते । कोशांशेनाथ कुप्येन सर्वकोशेन वा पुनः । शेषप्रकृतिरक्षार्थं परिक्रय उदाहृतः (का० नी० सा० ९।१८) ।। परिक्रयः सन्धिविशेष एतल्लक्षणः ।

—क्रीड् (क्रीडृ विहारे) । यैः परिक्रीडसे सीते विश्वस्तैर्मृगपोतकैः (रा० ३।६१।५) । परिक्रीडसे परितः क्रीडसि । मरुतस्तमभितः परिचिक्रीडुः (श० ब्रा० २।५।२।२०) । परिक्रीडस्व सानुषु (भट्टि० ८।१०) ।

—क्रुश् (क्रुश आह्वाने रोदने च) । भीममार्तस्वरं कृत्वा हाहेति परिचुक्रुशुः (भा० आदि० ११९।४२) । परिचुक्रुशुः परितश्चक्रन्दुः । परिक्रुष्टं च (आप० ध० १।१८।१७) । भोक्तुकामा आगच्छत इत्येवं परिक्रुश्य सर्वत आहूय यद् दीयते तत् परिक्रुष्टमुच्यते ।

—क्लम् (क्लमु ग्लानौ) । सन्तप्तवक्षाः सोऽत्यर्थं···परिक्लाम्यति (सुश्रुत० २।४४७।७) । परिक्लाम्यति अत्यन्तं ग्लायति ।

—क्लिद् (क्लिदू आर्द्रीभावे) । तीर्थोदकपरिक्लिन्नं दीप्यमानमिवानलम् (मुनिम्) (रा० १।४८।२४) । परिक्लिन्नम् अभिषिक्तम् ।

—क्लिश् (क्लिशू विबाधने) । परिक्लिश्यमाने च (पा० ३।४।५५) । परिक्लेशः सर्वतो बाधनम् इति काशिका । उरःप्रतिपेषं युध्यन्त इत्युदाहरणम् । कृत्स्नमुरः पीडयन्तो युध्यन्त इति तदर्थः ।

—क्षर् (क्षर संचलने) । ऊर्मिर्यः पवित्रे पर्यक्षरत् (ऋ० ९।६४।११) । पर्यक्षरत् परितोऽस्यन्दत । परि णः क्षरा सहस्रिणीरिषः (ऋ० ९।६१।३) । परिक्षर प्रवाहय ।

—क्षि (क्षि क्षये) । अनादेयं नाददीत परिक्षीणोपि पार्थिवः (मनु० ८।१७०) । परिक्षीणः कृशकोषः । परिक्षयोऽप्यधिकं रमणीयः (मृच्छ० १) । परिक्षयो विभवापकर्षः । व्रजद्भिरार्द्रेन्धनवत् परिक्षयम् (कि० १६।५७) ।

—क्षि (क्षि निवासगत्योः) । अग्निं हीमाः प्रजाः परिक्षियन्ति (ऐ० ब्रा० ६।३२) । परिक्षियन्ति परिगृह्य वसन्ति । उपसर्गवशात् सकर्मकत्वम् ।

**—क्षिप् (क्षिप प्रेरणे)**।...ततः सर्वान् परिचिक्षेप पार्थिवान् (भा० द्रोण० २६।४६)। गवां सहस्रमप्येकं न च विश्राणितं मया। परिक्षिपसि दण्डेन यावत्तावदवाप्स्यसे (रा० २।३२।३६)। **परिक्षिपसि उपरिक्षिपसि इति संस्कृतशार्मण्यकोषः। तन्न विचारसहम्। परिशब्दो न क्वचिदुपर्यर्थमाह। दण्डक्षेपेण यावद् वेष्टयसीत्येवार्थोऽक्लेशेन लभ्यः। दण्डेन परिक्षेपः परिग्रहः पदार्थजातस्य विवक्षितः।** पित्तजे रक्तजे वापि सकृदेव परिक्षिपेत् (सुश्रुत० सूत्र० १८। २७)। **परिक्षिपेत् व्रणं पट्टेन परिवेष्टयेत्।** प्रणयाच्चाभिमानाच्च परिचिक्षेप राघवम् (रा० २।३०।२)। **परिचिक्षेप सोपहासवचनमुक्तवतीति टीकाकृद्रामः। विनिनिन्देत्यर्थः। संस्कृतशार्मण्यकोषकारौ तु आश्लिश्लेष, उपजुगुहे, दोर्भ्यां परिरेभे इत्यर्थं इत्याचक्षाते। स न शक्यो ऽभ्युपैतुम्। तत्र व्यवहारादर्शनात्। परिपूर्वस्य क्षिपेर्वेष्टनमर्थः प्रसिध्यति। कामं परिरम्भो नाम वेष्टनप्रकारो भवति, तथापि तत्रार्थे परिक्षिपेर्व्यवहारो नास्ति। प्रकरणविरोधाच्च। इहैवानन्तरे श्लोके सीताकृतो रामक्षेपः श्रूयते—किं त्वाऽमन्यत वैदेहः पिता मे मिथिलाधिपः। राम जामातरं प्राप्य स्त्रियं पुरुषविग्रहम् इति। अभिमानादिति हेतुवचनाच्च निन्दापरमेव वाक्यमिति व्यवसीयते।** समन्ततः परिक्षिप्ता माताऽभून्मे दवाग्निना (भा० आश्रम० ३८।१८)। **परिक्षिप्ता परीताऽऽलीढा।** अन्त्रेण पृथिवी दृष्टा परिक्षिप्ता जनार्दन (भा० उ० १४३)। **परिक्षिप्ता वेष्टिता।** कालधर्मपरिक्षिप्तः पाशैरिव महागजः (रा० २।७२।३७)। **परिक्षिप्तः सन्दानितः, बद्धः संयतः।** दुःसहा हि परिक्षिप्ताः क्वणद्भिरलिगाथकैः (भट्टि० ६।८४)। **उक्तोऽर्थः।** त्रिलोचनाक्षिविक्षेपपरिक्षिप्तमहैनसि (स्कन्द० पु० का० ४।७५।४८)। **पराशब्दस्य स्थाने परिशब्दो व्यवहारभेदाय कल्पते। दूरं क्षिप्तानि महान्त्येनांसि यस्य तस्मिन्।** कोष्ठकीकृत्य चाप्येनं परिक्षिप्य च सर्वशः (भा० शल्य० २३।८७)। **परिक्षिप्य, परिवेष्ट्य परीत्य।** महार्णवपरिक्षेपं लङ्कायाः (रघु० १२।६६)। **परिक्षेपः परिवेषः।** असतां च परिक्षेपः सतां च परिगूहनम् (का० नी० सा० १४।५१)। **परिक्षेपो दानमानाभ्यां व्यपरोपणम् इति मङ्गला। परित्याग इत्युपाध्यायनिरपेक्षा।** चतुष्पथगदायुद्धे (भा० आदि० ६८।१२)। चत्वारः प्रक्षेपविक्षेपपरिक्षेपाभिक्षेपाख्याश्चत्वारः पन्थानोऽस्येति चतुष्पथम्। **परिक्षेपो बहुषु समन्तात् परिभ्रमणेन शत्रूणां क्षेप इति नीलकण्ठः।**

**—क्षु (क्षु शब्दे)।** अनुहवं परिवादं परिक्षवम् (अथर्व० १६।८।४)। **परितः क्षवः परिक्षवः क्षुत्। परिरिह वर्जने वा। वर्जिते प्रदेशे क्षवः परिक्षवः।**

**—खन् (खनु अवदारणे)।** परितः खन्यते (खायते) इति **परिखा।**

**—ख्या (ख्या प्रकथने, चक्षिङ आदेशः ख्याञिति वा)**। दिवो धर्तारं उर्विया परिख्यन् (ऋ० १०।१०।२) ।**परितः पश्यन्तीत्यर्थः**। अथ योऽयं भात्रोऽप्सु परि-ख्यायते यश्चायमादर्शे (छां० उ० ८।७।४) । **परिख्यायते** दृश्यत उपलभ्यते। मा नो ···मरुतः परि ख्यन् (ऋ० १।१६२।१) । **मा परिख्यन् मोपेक्षिषत, माऽवजीगणन्**। मेन्द्रो नो विष्णुर्मरुतः परिख्यन् (ऋ० ७।६३।८) । **उक्तोऽर्थः**। अञ्जनेति परिख्याता पत्नी केसरिणः कपेः (रा० ५।२।१४) । **परिख्याताऽऽ-ख्याता कीर्तिता। (५।१२)** । सूतपुत्र यथा भार्गवस्य महात्मनः । च्यवनत्वं परिख्यातं तन्ममाचक्ष्व पृच्छतः (भा० आदि० ५।१२) । **परिख्यातं विज्ञातं मतम्**।

**—खिद् (खिद दैन्ये)**। लोकसंस्थानविज्ञान आत्मनः परिखिद्यतः (भा० पु० ३।६।२८) । **खिद्यतः=खिद्यमानस्य, दुर्मनायमानस्य, उद्विजमानस्य**। उत्सङ्गेऽस्य शिरः कृत्वा सुष्वाप परिखिन्नवत् (भा० आदि० ४७।१५) । **परिखिन्नवत् परिश्रान्तवत्**। क्षुधिताश्च परिश्रान्ताः परिखिन्नाः पिपासिताः (रा० ४।५१।२) । **परिखिन्नाः परिद्यूना दूनमनस्काः**। कान्तावियोगपरि-खेदितचित्तवृत्तिः (ऋतु० ६।२६) । **विरहातुरः, वियोगविक्लवः**।

**—गण् (गण संख्याने)**। अपरिगणितगुणगण ईश्वरे (भा० पु० ६।६।३५) । **परिगणनं कात्स्न्र्येन गणनं कलनं संख्यानम्**। इत्यपरिगणयन्गुह्यकस्तं ययाचे (मेघ० ५) । **अपरिगणयन् अचिन्तयन्, अविमृशन्**।

**—गम् (गम्लृ गतौ)** ···चन्द्ररश्मयः। पर्यगच्छञ्छनैः सर्वा दिशः खं च क्षितिं तथा (भा० द्रोण० १८४।५१) ॥ **व्याप्नुवन्नित्यर्थः**। इति सीताञ्जलिं कृत्वा पर्यगच्छन्मनस्विनी (न्यग्रोधम्) (रा० २।५५।२५) । **पर्यगच्छत् पर्यक्रामत्, प्रदक्षिणमकरोत्**। ताः (प्रजाः) अग्निना पर्यगच्छत् (ऐ० ब्रा० ३।३६) । **पर्यगच्छत् पर्यवेष्टयत्। अग्निं प्राकारमकरोदित्यर्थः**। तानि रथो भूत्वा पर्यगच्छत् तानि परिगत्यात्मन्नधत्त (श० ब्रा० ६।४।१।२) । **पर्यगच्छत् आसादयत्**। यथा हि मेरुः सूर्येण नित्यशः परिगम्यते (भा० वन० १०४।३) । **परिगम्यते परिक्रम्यते प्रदक्षिणीक्रियते**। परि द्यामिव सूर्योऽहीनां जनिमागमम् (अथर्व० ६।१२।१) । **पर्यागमम् पर्यटम्**। तावाश्रमनदीश्चैव वनानि च सरांसि च। तस्यां निशि विचिन्वन्तौ दम्पती परिजग्मतुः (भा० आदि० ७६१८) । **उक्तोऽर्थः**। वृषलत्वं परिगता ब्राह्मणानामदर्शनात् (भा० अनु० ३३।२१) । **परिगताः प्राप्ताः**। सर्वलोको ह्ययं मन्ये बुद्ध्या परिगत-स्त्वया (भा० शां० २२७।१०७)। प्रथमपरिगतार्थस्तं रघुः सन्निवृत्तं विजयिनम-

भिनन्द्य (रघु० ७।८१) । **परिगतार्थो विदितवृत्तान्तः ।** परिगतशरच्चन्द्रकिरणास्त्रियामाः (भर्तृ० ३।७६) । **परिगताः प्रसृता व्याप्ताः ।** सर्वे परिगता देशा यज्ञियं न लभे पशुम् (रा० १।६१।१४) । **परिगता आसादिता विचिताः ।** सर्वे परिगताः शैलाः (रा० ४।३७।३६) । **उक्तोऽर्थः ।** वयं येभ्यो जाताश्चिरपरिगता एव खलु ते (भर्तृ० ३।३८) । **परिगताः परित्यज्य गताः प्रेताः ।** परिप्राप्ते परिगतं प्रज्ञाते परिवेष्टिते इति **वैजयन्ती ।** ह्रीपरिगतो बुद्ध्या परित्यज्यते (हितोप०) । **ह्रियाऽऽविष्ट इत्यर्थः ।** तेनाष्टौ परिगमिताः समाः कथंचित् । **परिगमिताः क्षपिता नीताः ।** ममापि च क्षपयतु नीललोहितः पुनर्भवं परिगतशक्तिरात्मभूः (शा० ७।३५) **परितो गता शक्तिर्यस्य, व्याप्तसामर्थ्यः ।** परीक्ष्य तत्त्वं परिगन्तुमर्हसि (भा० शां० २२८।६६) ।

**—गर्ह् (गर्ह कुत्सायाम्)** । किं चान्यन्मयि दुर्वृत्तं येन मां परिगर्हसे (भा० उ० ४६।३०) । **परिगर्हसे भृशं कुत्सयसि बलवन्निन्दसि अवगायसितराम् ।** धर्माधर्मं च प्राकृतं परिगर्हयन् (भा० शा० ३१६।६८) । **उक्तोऽर्थः ।**

**—गल् ( गल भ्रंशने लौकिकः )** । महाद्रयः परिगलिताग्रसानवः (भा० आदि० १६।२६) । **परिगलिता भ्रष्टा अधःपतिताः ।** पङ्क-परिगलितचरणभङ्गं कृत्वा (पञ्चत०) । **परिगलितो निमग्नः ।**

**—गुप् (गुपू रक्षणे)** । प्रजा औरसवद् धर्मावेक्षमाणः पर्यगोपायत् (भा० पु० ५।२।१) । **परितोऽरक्षदित्यर्थः ।** अनार्या ये न जानन्ति समयं मन्दचेतसः । तेभ्यः परिजुगुप्सेथाः (भा० शां० ८३।११) । **आत्मानं रिरक्षिषेरित्यर्थः । इह निन्दायां सन्न ।**

**—गुह् (गुहू संवरणे)** । असतां च परिक्षेपः सतां च परिगूहनम् (भा० नी० सा० १४।५१) । **परिगूहनं पूजया स्वीकरणम् इति मङ्गला । संवरणमित्युपाध्यायनिरपेक्षा ।**

**—गै (गै शब्दे)** । अथैनं सामभिः परिगायति (श० ब्रा० ६।१।२।३३) । **इममभितः सामानि गायतीत्यर्थः ।** नृत्यन्ति परिगायन्ति वेदयन्तो महद् भयम् (भा० भीष्म० ३।७) । **परिगायन्ति चङ्क्रम्यमाणा गायन्तीत्यर्थः ।** एतैः कर्मगुणैर्लोके नामाग्नेः परिगीयते (भा० अनु० ८५।७८) । **परिगीयते सर्वत्र कीर्त्यते ।** चितावाहितमुद्गाता त्रिर्यामेन परिगायन् (का० श्रौ० २२।६।१५) । **उक्तोऽर्थः ।** यानि नामानि गौणानि विख्यातानि महात्मनः । ऋषिभिः परिगीतानि··· (भा० अनु० १४६।१३) ॥

—**ग्रह्‌** (ग्रह उपादाने) । मय्यहं तं परिगृह्णामि देवम्‌ (अग्निम्‌) (अथर्व० १२।२।३३) । **परिगृह्णामि = अन्तर्दधामि, परिवेष्टयामि** । द्यावापृथिवीभ्यां वा एतं जातं देवाः पर्यगृह्णन्‌ (ऐ० ब्रा० १।१६) । **उक्तोऽर्थः** । बाहुना परिजग्राह दक्षिणेन शिरोधराम्‌ (वृकोदरः) (भा० आदि० १६३।२६) । **बाहुना कन्धरां परिजग्राह परितो गृहीतवान्‌ । तं राक्षसमगलहस्तयतेत्यर्थः** । भुजाभ्यां परिजग्राह भीमसेनं महाबलम्‌ (भा० आदि० १६३।२१ । **आददे वेष्टयामास** । भुजाभ्यां पर्यगृह्णीतां महाकायौ महाबलौ (भा० द्रोण० १७८।२९) । ते प्राञ्चं विष्णुं निपाद्य छन्दोभिरभितः पर्यगृह्णन्‌ (श० ब्रा० १।२।५।६) । परिमण्डलाभ्यामिण्ड्वाभ्यामुखां परिगृह्णाति (का० श्रौ० १६।५।३) । अहमिद्धि पितुष्परि मेधामृतस्य जग्रभ (ऋ० ८।६।१०) । **वशेऽकार्षमित्याह** । शुष्णस्य चित्परि माया अगृभ्णाः । (ऋ० ५।३१।७) । **पर्यगृह्णीथाः पर्यवेष्टयः, वशेऽकरोः, आत्मसादकरोः** । अथ पशुकामः सायं पशुषु समेतेषु अग्निहोत्रं जुहुयात्‌ । ब्रह्म वा अग्निहोत्रम्‌ । ब्रह्मणैवैतत्‌ पशून्परिगृह्णाति (जै० ब्रा० १।५) । **परिगृह्णाति अवरुणद्धि** । भूयिष्ठानहं पशून्यजमाने पर्यग्रहीषम्‌ (ऐ० ब्रा० ६।२४) । पर्यग्रहीषमस्थापयम्‌ । तथैव परिजग्राह वन्येन हविषा तदा (भा० आदि० १७५।८) । **परिजग्राह निमन्त्रयाञ्चक्रे** । पाद्यं परिगृहाणेदमासनं च (द्रौप० ४।१३) । **परिगृहाण आदत्स्व, प्रतीच्छ, स्वीकुरु** । परिगृहाण गते सहकारतां त्वमतिमुक्तलताचरितं मयि (माल० ४।१३) । **स्वीकुर्वित्येवार्थः** । परिगृह्णातु तां कन्याम्‌ (पञ्चत० ५।८४) । **दारकर्मणा स्वीकुर्वित्यर्थः** । तं दनुश्च दनायूश्च मातेव पितेव च परिजगृहतुः (श० ब्रा० १।६।३।९) । **प्रत्युत्थानाभिवादाभ्यां सच्चक्रतुरित्याह** । मातापितृभ्यामुत्सृष्टं··· यं पुत्रं परिगृह्णीयात्‌ (मनु० ९।१७१) । **पुत्रकृतकं स्वीकुर्यादित्यर्थः** । स्थलयोदकं परिगृह्णन्ति (तै० सं० १।६।१०।५) । **कूलेन जलं निरुन्धन्तीति वाक्यार्थः** । वेदिं च परिगृह्णाति (तै० सं० १।६।९) । **परितो रेखा आलिखतीत्यर्थः** । बहुत्वं परिगृह्णीयात्साक्षिद्वैधे नराधिपः (मनु० ८।७३) । **परिगृह्णीयात्‌ प्रमाणत्वेनाङ्गी कुर्यादित्यर्थः । संवादिनो बहून्‌ साक्षिणोऽनुसृत्य विवादं निर्णयेदिति तात्पर्यम्‌** । भ्रातरं भरतं रामः परिजग्राह पाणिना (रा० २।१००।२) । **इह परिणा नार्थः । पाणौ जग्राहेत्येवार्थः** । नैनमूर्ध्वं न तिर्यञ्चं न मध्ये परिजग्रभत्‌ (वा० सं० ३२।२) । **परिच्छिनत्ति परिवृणोति । ग्रहेर्जुहोत्यादित्वमूरीकृत्य शतरि रूपम्‌** । स्वर्गः परिगृहीतश्च स्वधर्मं परिरक्षता (रा० ४।२४।१०) । **परिगृहीतो वशे स्थापितः** । परिगृहीतो वा एतस्य यज्ञः परिगृहीता देवताः (ऐ० ब्रा० १।३) । **उक्तचर एवार्थः** । ब्रह्मणा परिगृहीता

(कुम्भी) (अथर्व० ११।३।१५)। अथ यत्सुवर्णरजताभ्यां कुशीभ्यां परिगृहीतः (चत्वालः) आसीत् (तै० ब्रा० १।५।१०।२)। **परिगृहीतः परितोऽवलम्बितः।** देवेन च परिगृहीतः (माल० १) **आत्मीयः कृत इत्यर्थः।** राक्षसमतिपरिगृहीतः (मुद्रा० १)। **अमात्यराक्षसबुद्धचा कृतसाहाय्यः।** अधिगच्छति महिमानं चन्द्रोऽपि निशापरिगृहीतः (माल० १।१३)। **निशापरिगृहीतः=निशया कृतसाहचर्य्यः, तयाऽवष्टब्धः।** येनेदं भूतं भुवनं भविष्यत् परिगृहीतममृतेन सर्वम् (वा० सं० ३४।४)। **परिगृहीतं परिगतं वेष्टितम्।** अनृतं सत्येन परिगृहीतम् (श० ब्रा० १४।८।६।२)। इमामद्भिः परिगृहीताम् (छां० उ० ३।११।६)। **इमां पृथिवीं समुद्रैः परिवेष्टितां परिहितामित्यर्थः।** प्रवृत्तहिंसानामपरिगृहीतानाम् (कौ० अ० २।२६।३)। **अपरिगृहीतानां (वनानाम्) अकृतवेष्टनानामनिर्मितवृतीनाम्।** ते ह्यपरिगृहीतमभिनीय विक्रीणीरन् (कौ० अ० ५।२।२५)। **अपरिगृहीतमस्वभूतम्, अपरिग्रहम्।** अन्यच्चापरिगृहीतम् (आप० ध० २।१०।६)। **उक्तोऽर्थः।** इदमुपनतमेवं रूपमक्लिष्टकान्ति प्रथमपरिगृहीतं स्यान् न वेति व्यवस्यन् (शा० ५।१९)। **परिगृहीतं परिग्रहः कलत्रमिति स्वीकृतम्।** प्रचुरतृणकाष्ठो रक्ष्यमाणः परिगृहीतो भूप्रदेशो विवीत इति **मिताक्षरा। परिगृहीतः कृतवेष्टः। वृतियुक्तः।** परिश्रिते स्तुवन्ति ब्रह्मणः परिगृहीत्यै (पञ्च० ब्रा० ४।९।११)। **परिगृहीत्यै परितो ग्रहणाय। बहिर्गमनाभावायेत्यर्थः।** जगामैव तदा कुन्ती गान्धारीं परिगृह्य ह (भा० आश्रम० १६।९)। **परिगृह्य सहादाय, तां सहचरीं कृत्वा।** देवादिशरीरं परिगृह्य (सां० का० ४२ इत्यत्र टीका)। **परिगृह्य आस्थाय, आधाय।** कार्ष्णायसमलङ्कारं परिगृह्य च नित्यशः (भा० अनु० २५९४)। **परिगृह्य परिधाय धृत्वा।** अक्षान्स कक्षे परिगृह्य वाससा (भा० वि० ७।१)। परिगृह्य परिवेष्टय, आच्छाद्य। न्यविशन्त ततः सर्वे परिगृह्य सरस्वतीम् (भा०)। **उक्तोऽर्थः। उत्तीर्येति तु कश्चित्। तन्न। अत्रार्थेऽन्यत्र व्यवहारादर्शनात्।** स्कन्नमात्रं च तुच्छुकं स्रुवेण परिगृह्य सः (भा० अनु० ८५।१०१)। **परिगृह्य आदाय, संगृह्य, उद्गृह्य, उच्चित्य।** पुत्रका इति होवाच ज्ञानेन परिगृह्य तान् (मनु० २। १५१)। **ज्ञानेन परिगृह्य शिष्यान् कृत्वेत्यर्थ इति कुल्लूकः। परिगृह्य अतिशय्येति संस्कृतशार्मण्यकोषः। सोऽयमर्थः शब्दमर्यादया न लभ्यः। परिपूर्वो ग्रहिर्नातिशायने दृष्टः।** हस्तेन हस्तं परिगृह्य वध्वाः (रघु० ७।२१)। **गृहीत्वेत्येवार्थः।** कुशान् सव्येन परिगृह्य (याज्ञ० १।२८३)। **परिगृह्य आदाय।** परिगृह्य च वैदेहीं वामेनाङ्केन रावणः (रा० ३।५१।३७)। **परिगृह्य परितो**

**गृहीत्वा ।** शिनेः पौत्रस्य तु रथं परिगृह्य महाद्विपः । अभिचिक्षेप वेगेन (भा० द्रोण० २६।४३)॥ **परिगृह्य रुद्ध्वाऽऽस्कद्य वा । संपरिष्वज्य वैदेहीं वामेनाङ्केन रावण इति पाठान्तरम् ।** इति देवी (कैकेयी) महेष्वासं परिगृह्याभिशस्य च (रा० २।११।१७) । **परिगृह्य नियम्य । परिवर्तनान्निवर्त्येत्यर्थः ।** कुञ्जरस्येव सङ्ग्रामे परिगृह्याङ्कुशग्रहम् । ब्राह्मणैर्विप्रहीणस्य क्षत्रस्य क्षीयते बलम् (भा० वन० २६।१५) ॥ **परिगृह्य वर्जयित्वा । परिर्वर्जने इति नीलकण्ठः । अङ्कुशेन गृह्णाति निगृह्णातीति अङ्कुशग्रहः । संस्कृतशार्मण्यकोषे त्वन्यथा** व्याख्या**तम् ।** ततस्तु सीतामुपलभ्य रावणः सुसम्प्रहृष्टः परिगृह्य मैथिलीम् (रा० ३।५४।३०) । **परिग्रहत्वेन (पत्नीत्वेन) विभाव्येति कतकः ।** परिगृह्य देवा यज्ञमायन् (वा० सं० १७।५६) । **परिगृह्य परिशासाभ्यां परितो गृहीत्वा ।** स्नुषा इव स धर्मात्मा भगिनीरिव चानुजाः । यथा दुहितरश्चैव परिगृह्य ययौ कुरून् (भा० आदि० १०२।५६-५७) ॥ **परिगृह्य मत्वा विभाव्य ।** ततः प्राग्ज्योतिषो राजा परिगृह्य महागजम् । प्रेषयामास सहसा युयुधानरथं प्रति (भा० द्रोण० २६।४२।४३) ॥ **परिगृह्योपच्छन्द्येत्यर्थमभ्यूहतः संस्कृतशार्मण्यकोषकारौ ।** आसनरज्जुपरिग्रहे (रघु० ६।४६) । **परिग्रहो ग्रहणमवलम्बनम् ।** मानपरिग्रहः (अमरु० ६७) । **मानाश्रयणम् ।** सीमिति परिग्रहार्थीयो वा पदपूरणो वा (नि० १।७) । **परिः सर्वतोभावे वर्तते । परिग्रहोन्तर्भावः** समावेशः । बहुवचनमनुक्ततद्धितपरिग्रहार्थम् (पा० ४।१।७६ सूत्रे वृत्तिः) । **परिग्रहः सङ्ग्रहः ।** परिग्रहेण तानि चतुर्विंशतिः (शां० श्रौ० १५।५) । **सम्पिण्डीकरणेन, सङ्कलनेनेत्यर्थः ।** आसनपरिग्रहं करोतु देवः (उत्तर० ३) । **आसनग्रहणमित्येवार्थः ।** अर्घ्यपरिग्रहान्ते (रघु० १३।७०) । **परिग्रहः स्वीकारः ।** नवे दारपरिग्रहे (उत्तर० १।१६) । **दारपरिग्रहो दारकर्म, परिणयो विवाहः ।** प्रयतपरिग्रहद्वितीयः (रघु० १।६५) । **परिग्रहः पत्नी ।** असंशयं क्षत्रपरिग्रहक्षमा (शा० १।२२) । **उक्तोऽर्थः ।** प्रमदानां सहस्राणि तव राजन् परिग्रहः (रा० ३।३८।३०) । **परिग्रहः पत्न्यः कलत्राणि । जात्यभिप्रायेणैकवचनम् । क्वचिद् राजन्यपरिग्रहे इति सप्तम्यन्तः पाठः । तत्र परिग्रहस्थानमन्तःपुरमुच्यते ।** बह्वीनामुत्तमस्त्रीणां मम योऽसौ परिग्रहः (रा० ३।५५।१७) । **परिग्रहः पत्नीसङ्घातोऽवरोधः ।** उत्पपात महाभागा मार्गमाणा परिग्रहम् (रा० १।४५।२३) । **परिग्रहं पतिम् । परिग्रहीत्रर्थे परिग्रहशब्दः । अयं च कतकानुसारी पाठः ।** त्यक्तसर्वपरिग्रहः (गीता ४।२१) । **परिग्रहः स्वम्, ऋक्थम् ।** मया निसृष्टं पापं हि परिग्रहमभीप्सता (भा० शां० ७।४१) । **परिग्रहोऽर्थसङ्ग्रहः ।** त्रिदिवे मम यः स्यात्परिग्रहः (हरि० ७२६४) । **परिग्रहोऽधिकारः ।** न हि शूद्रस्य यज्ञेषु

कश्चिदस्ति परिग्रहः (मनु० ११।१३)। **परिग्रहः सम्बन्धः संसर्ग इति कुल्लूकः।** अटवी पर्वताश्चैव नद्यस्तीर्थानि यानि च। सर्वाण्यस्वामिकान्याहु र्नहि तत्र परिग्रहः (भा० अनु० ६६।३५-३६)॥ **परिग्रहः स्वामित्वम्।** किमर्थं च त्वया विद्धो वराहो मत्परिग्रहः (भा० वन० ३९।१९)। **परिग्रहः स्वम्।** मा तात साहसं कार्षीर्मम पूर्वपरिग्रहः (भा० वन० ३१२।१२)। **परिग्रहो नियम इति नीलकण्ठः। यो मत्प्रश्नान्वदेत् स एव पयः पिबेदित्येवंरूपः।** अत्रार्थे पूर्वशब्दो गडुभूतो भवन् न समर्थयते **निरुक्तमर्थम्। नियमेऽर्थेऽ प्रसिद्धश्च परिग्रहः। स्वमित्यर्थस्तु मम भाति। अहमस्य सरसः स्वायत्तीकरणे पूर्व इत्यभिप्रायोऽनुमीयते। अयमेवार्थोऽन्यत्रापि भारते श्रितो ऽसंशयम्। तद्यथा**—स तु मामब्रवीद् राजन् मम पूर्वपरिग्रहः (वन० १६७।२३)। (द्विजातयः)यज्ञाध्ययननित्याश्च विरताश्च परिग्रहात्- (रा० १।६।६४)। **परिग्रहः प्रतिग्रहः।** राज्ञः परिग्रहोऽयम् (शा० १)। **परिग्रह उपायनम् प्राभृतकम्।** अतिमात्रभासुरत्वं पुष्यति भानुः परिग्रहादह्नः (माल० १।१३)। **परिग्रहः साहाय्यम्।** निर्गुणेनापि चापेन शक्रस्य गगने पदम्। अवाप्यताविवेकस्य नृपस्येव परिग्रहे (वि० पु० ५।६)॥ **परिग्रहोऽनुग्रहः, पक्षपातः।** धन्या स्मो वः परिग्रहात् (उत्तर० ७।११)। **उक्तोऽर्थः।** पाशः सलिलराजस्य भ्रातुस्तव परिग्रहे (दुर्गा० ५।५१)। **परिग्रहः परिजनः। परिजनविषये वर्तत इत्यर्थः।** भद्र, किमयमागन्तुक आहोस्विदिहैव कस्य चित्परिग्रहः (मुद्रा० ५)। **परिग्रहो भृतकः परिचारकः। पठति चामरः परिजनेर्थे परिग्रहम्**—पत्नीपरिजनादानमूलशापाः परिग्रहा इति। परिग्रहेण सर्वेण कोषेण च महीयसा (शि० भा० ८।४०)। **परिग्रहः परिजनः परिवारः।** परिग्रहाच्च साधूनां पृथिव्याश्चैव तेजसा। अतीव पुण्यभागास्ते··· (भा० अनु० १०८।१८)॥ **परिग्रह आतिथ्यम्, सत्कारः।** भगवन् परमनुगृहीतोस्म्यनेन शिष्यजनसामान्येन निदेशेन कृतपरिग्रहमिवात्मानमवैमि (हर्षचरिते भैरवाचार्यं प्रति राज्ञ उक्तिः)। **कृतपरिग्रहः सत्कृतः।** धनक्षयं नाप्स्यसि मत्परिग्रहात् (अवदा० जातके ५, ३३)। **परिग्रहात् सत्कारकरणात्।** परिग्रहे ब्राह्मणानामश्वत्थामानमुक्तवान् (भा० सभा० ३५।५)। **परिग्रह आतिथ्यम्।** परिग्रहेण ब्राह्मेण परिगृह्य महाद्युतिः (भा० आदि० १९५।१)। **उक्तोऽर्थः।** सर्वथा धर्ममूलोऽर्थो धर्मश्चार्थ-परिग्रहः (भा० द्रोण० ३३।२९)। **अर्थपरिग्रहोऽर्थमूलकः। अर्थाभावे यज्ञादेरसम्पत्तेः। नीलकण्ठस्त्वर्थार्थमेवालम्बनीय इति तात्पर्यमित्याह। तन्नातिरुच्यम्। एवकारोक्तमवधारणं च प्रकर्षत्यरुचिम्।** बन्धून् प्रियानश्रुमुखान् विहाय परिग्रहान्सौख्यपरिग्रहांश्च (अवदा० जा० ७।९)। **सौख्यपरिग्रहान् परिग्रहान् सौख्यमूलानि धनानि।** स्ववीर्यविजये युक्ता नैते परपरिग्रहाः (भा० द्रोण० १४४।२२)।

**परिग्रहाः परायत्ताः परवन्तः ।** कुम्भयोनिरलङ्कारं तस्मै दिव्यपरिग्रहम् (रघु० १५।५५) । **परिग्रहः परिधानीयम् ।** आलस्यात्संचयः संचयात्परिग्रहः (चरक० विमान० ३।२८) । **परिग्रहो ममत्वम् आसङ्गः, अभिष्वङ्गः ।** प्रज्ञापनीयेन धर्मेण धर्मिणो विशिष्टस्य परिग्रहवचनं प्रतिज्ञा (न्याय भा० १।१।३३) । **परिग्रहवचनं परिग्राहकं वचनमिति वाचस्पतिमिश्राः ।** एतेन शिष्टाः परिग्रहा अपि व्याख्याताः (ब्र० सू० २।१।१२) । **परिग्रहा अभ्युपगमाः ।** शक्तिं चावेक्ष्य दाक्ष्यं च भृत्यानां च परिग्रहम् (मनु० १०।१२४) । **भृत्यानां परिग्रहम् पुत्रदारादिभर्तव्यपरिमाणमिति कुल्लूकः ।** (असुरान्) निनाय निशितैर्बाणैः प्रेताधिपपरिग्रहम् (हरि० २।९७।२०) । **प्रेतपतिवासमित्यर्थः ।** मुक्तोऽयं स्यान्नवेति स्याद् धर्षितो मत्परिग्रहः (भा० शां० ३२०।५५) । **परिग्रहः पराभवः ।** आश्रयन्त्याः स्वभावेन मम पूर्वपरिग्रहम् (भा० शां० ३२०।५७) । **परिग्रहः शरीरम् ।** तस्माद् धर्मार्थकामेषु तथा राज्यपरिग्रहे (भा० शां० ३२०।५१) । **राज्यपरिग्रहे राष्ट्ररक्षणे राजकार्यनिर्वहणे ।** पूर्वं परिग्राहं परिगृह्णाति दक्षिणतः (का० श्रौ० २।६।१८) । **वेदेरियत्तां निश्चेतुं दक्षिणादिदिक्त्रये स्पयेन रेखाकरणं पूर्वः परिग्राहः ।** ब्रह्मन्नुत्तरं परिग्राहं परिग्रहीष्यामि (आप० श्रौ० २।१।३।६) । **उक्तोऽर्थः ।** परिग्राह इत्यत्र परौ यज्ञे (पा० ३।३।४७) इत्यनेन घञ् । परिभूः परिग्रहीता व्यापक इति (अथर्व० ४।३३।६) इत्यत्र सायणः । तामद्य सम्प्रेष्य परिग्रहीतुः (शा० ४।२२) । **परिग्रहीता पतिः ।**

**— ग्लै (ग्लै हर्षक्षये)** । 'पर्यादयो ग्लानाद्यर्थे चतुर्थ्या' इति वार्तिके परिग्लानोऽध्ययनाय पर्यध्ययन इत्युदाहरणं स्थितम् । **अध्ययनेऽनभिरुचिरनुत्सुकोऽसमर्थ इत्यर्थः ।**

**—घट् (घट चेष्टायाम्)** । विटजनपरिघाटितेव वीणा (मृच्छ०        ) **परिघाटिता स्पृष्टा, आमृष्टा, आहता । विटजननखघट्टितेति पाठान्तरम् ।**

**—घट्ट् (घट्ट चलने)** । तव सा कथासु परिघट्टयति श्रवणं यदङ्गुलिमुखेन मुहुः (शिशु० ९।६४) । **परिघट्टयति स्फालयति ।**

**—घूर्ण् (घुण घूर्ण भ्रमणे)** परिघूर्णामि···हृदयं मे विदीर्यते (भा० आदि० ५३।२१-२२ । **परिघूर्णामि परिभ्रमामि । घूर्णतीव च मे मनः···हृदयं दीर्यतीव चेति पाठान्तरम् ।**

**—चक्ष् (चक्षिङ् व्यक्तायां वाचि)** । श्रद्धाविरहितं यज्ञं तामसं परिचक्षते (गीता १७।१३) । **परिचक्षते प्रचक्षते व्याहरन्ति निर्दिशन्ति ।** वेदप्रदानादा-

चार्यं पितरं परिचक्षते (मनु० २।१७१) । **परिचक्षते अभिदधति, अभिलपन्ति, व्यपदिशन्ति** । इतिहासमिमं विप्राः पुराणाः परिचक्षते (भा० आदि० १३।६)। **परिचक्षते कथयन्ति वाचयन्ति वर्णयन्ति वर्तयन्ति** । अप्रजस्य महाभागा द्वारं न परिचक्षते । स्वर्गे··· (भा० आदि० १२०।१५।१६) ।। **न परिचक्षते न कथयन्ति, न ब्रुवते** । यो न्वेवं मानुषं ब्राह्मणं हन्ति तं न्वेव परिचक्षतेऽथ किं य एतम् (श० ब्रा० ३।६।४।१७) । **परिचक्षते ऽपराद्धं घोषयन्ति** । तस्मादिह कृतप्रज्ञास्त्यागं न परिचक्षते (भा० शां० १०।१८) । **संन्यासं न प्रशंसन्तीत्यर्थः** । अन्नं न परिचक्षीत तद्व्रतम् (तै० उ० ३।८।११) । **न परिचक्षीत न निराकुर्यात्** । अन्नं पात्रे समुपनतमवरमपि न प्रत्यादिशेदित्यर्थः । तदु पुनः परिचक्षते (ऐ० ब्रा० ८।७) । **पूर्वोक्तं मतं नाद्रियन्तेऽन्ये ऽभिज्ञा इत्यर्थः** । को वैनं परिचक्षीत (भा० पु० ४।१४।३३) । **परिचक्षीत अवगणयेत्, अवधीरयेत्** । विद्युति चाभ्यग्रायां स्तनयित्नावप्रायत्ये प्रेतान्ने नीहारे च मानसं परिचक्षते (आप० ध० १।११।२१) । **परिचक्षते वर्जयन्ति** । श्वभिरपपात्रैश्च श्राद्धस्य दर्शनं परिचक्षते (आप० ध० २।७।१७।२०) । श्वभिरपपात्रैश्च श्राद्धस्पर्शनं परिचक्षते (सत्या० श्रौ० २७।५।४८) । **परिचक्षते प्रतिषेधन्ति गर्हन्ते** । यच्चान्यत् परिचक्षते (आप० १।१७।२७) । नैताः (अपः) परिचक्षीत वहन्त्यो ऽथवा स्थिताः (कृत्य० तरु० द्वितीये खण्डे ३५२ पृष्ठे) । **परिचक्षीत परिवदेत्** । विश्वन्तरो ह सौषद्मनः श्यापर्णान् परिचक्षाणो विश्यापर्णं यज्ञमाजह्ले (ऐ० ब्रा० ७।२७) । **परिचक्षाण: परिहरन्, निराकुर्वन्** । प्रद्विषन्ति परिख्यातं राजानमतिखादिनम् (भा० शां० ८७।१६) । किमित्ते विष्णो परिचक्ष्यं भूत् प्र यद् ववक्षे शिपिविष्टो अस्मि (ऋ० ७।१००।६) । **परिचक्ष्यं प्रख्यापनीयमप्राख्यापनीयमिति वा** (नि० ५।८।१) । मा वो वचांसि परिचक्ष्याणि वोचम् (ऋ० ६।५२।१४) । **परिचक्ष्याणि वर्जनीयानि** । न वाऽवसाने ह्रास्योभयतोरात्रं हुतं भवति नो काञ्चन परिचक्षां कुरुते (जै० ब्रा० १।६१) । **परिचक्षाऽनादरः** । एवमेवानु विवक्षेत् तस्यैतस्य परिचक्षेति (श० ब्रा० १।३।५।१४) । **उक्तोऽर्थः** ।

—**चर् (चर गतिभक्षणयोः)** । भूम्या अन्तं पर्येके चरन्ति (ऋ० १०।११४।१०) । **परिचरन्ति परिभ्रमन्ति** । पर्येका चरति वर्तनिं गौः (ऋ० ३।७।२) । त्रिधातवः परमा अस्य गावो दिवश्चरन्ति परि सद्यो अन्तान् (ऋ० ५।४७।४) । **दिवो ऽन्तान्परिचरन्तीत्यन्वयः** । ययातिरपि रूपेण पूरोः पर्यचरन्महीम् (हरि० १।३०।३४) । **पर्यचरत् पर्यटत्, व्यचरत्** । आकर्णपलितः श्यामो वयसाऽशीतिपञ्चकः । रणे पर्यचरद् द्रोणो वृद्धः षोडशवर्षवत् (भा० द्रोण० १९४।४३) ।। **उक्तोऽर्थः** । विचिन्त्यैवं नलो राजा सभां पर्यचरत्तदा (भा०

वन० ६२।१७) । **पर्यचरत् पर्यक्रमीत्** । आम्रं छित्त्वा कुठारेण निम्बं परिचरेत्तु कः (रा० २।३५।१६) । **परिचरेत् सेवेत, पुष्येत्, संवर्धयेत्** । कथो नु ते परि चराणि विद्वान् वीर्या मघवन्या चकर्थ (ऋ० ५।२९।१३) । **परिचराणि परिचर्यां (ते)करवाणीत्यर्थः** । गुणोदारान्दारान् परिचरामः सविनयम् (भर्तृ० ३।४०) । **परिचरामः सेवामहे, उपास्महे, अन्वास्महे, उपतिष्ठामः** । अनुत्पन्नं ज्ञानं यदि यदि वा सन्देहविधुरं विपर्यस्तं वा स्यात् परिचर वसिष्ठस्य चरणौ (महावीर० ३।३६) । **परिचर सेवस्व भजस्व, अर्चय** । आभिर्मत्प्रत्ताभिः परिचारयस्व (कठोप० १।१।२५) । **परिचारयस्व सेवयस्व । आत्मानमिति शेषः । इत्थम्भूते परिचारयतेः प्रयोगे कर्मभूत आत्मशब्दस्त्यज्यत इति व्यवहारः** । तेऽभितः परिचरन्त ऐत् (आयन्) पशुमेव निरान्त्रं शयानम् (ऐ० ब्रा० २।१३) । **परिचरन्तः पर्यटन्तः** । स आजगाम जैवलिं प्रवाहणं परिचारयमाणम् (श० ब्रा० १४।९।१।१) । **परिजनेनात्मानं सेवयमानम्** । अनुगुप्ता अप आहरेत् परिचरणीयाः (गो० गृ० १।१।२४) । **परिचरणीयाः सेव्याः । परिचर्यन्ते निर्वाह्यन्त आचमनादीनि याभिरिति । बाहुलकात्करणेऽनीयर् इति कश्चित्** । एष तस्यापि ते मार्गः परिचार्यस्य मालव (भा० उ० १०९।२१) । **परिचार्यः सेव्यः** । कौसल्या तं हयं तत्र परिचर्य समन्ततः (रा० १।१४।३३) । **परिचर्य परिक्रम्य, प्रदक्षिणीकृत्य** । परिचर्यां स्वकां तस्मै यथावत् प्रत्यवेदयत् (भा० वन० ७७।५) । **परिचर्या=अटाट्या** । आचचक्षे यथान्यायं परिचर्यां च भारत (भा० शां० १२६।७) । **उक्तोऽर्थः** । परिच्छदेन क्षेत्रेण वेश्मना परिचर्यया । परीक्षेत कुलं राजन्... (भा० उ० ३९।४४) ॥ **परिचर्यया आचारेण** । यस्या मापः परिचराः समानीरहोरात्रे अप्रमदं क्षरन्ति (अथर्व० १२।१।९) । **परिचराः स्रवन्त्यः, अस्थावराः** । परिधिस्थः परिचरः (अमरः) । **परिधौ सेनान्ते तिष्ठति परिधिस्थः । परि समान्तात् चरति रक्षितुमिति परिचरः । आरक्षः** । परिचारेषु तीर्थेषु विविधेष्वाकरेषु च । (भा० वि० २६।१०) । **परि आगत्य चरन्त्येषु परिचारा राजपुराणि इति नीलकण्ठः सर्वज्ञनारायणश्च** । प्रीतो स्मि परमं भद्रे परीचारेण ते शुभे (भा० वन० ३०५।१३) । **परीचारः परिचर्या सेवा** । परीचारेण महता गुरुं तं पर्यतोषयत् (भा० आश्व० १६।२६) । **उक्तोऽर्थः** । सत्यमग्निपरीचारो विविक्तानां च सेवनम् (भा० शां० १९६। १०) । **अग्निपरीचारः=अग्निपरिचर्या=अग्निपरिक्रिया=अग्निहोत्रम्** । एतत्परिचरणावितरौ वेदौ (शां० ब्रा० ६।११) । **परिचरणौ परिचारकौ उपकारकौ परिपूरकौ, अनुबन्धभूतौ । अत्र कर्तरि ल्युड्द्रष्टव्यः** ।

—**चि (चिञ् चयने)**। यानेवाध्वर्युः शकलान् परिचिनोति (शां० ब्रा० ८।४)। **परिचिनोतिः परितः समूहति**। परि स्वयं चिनुषे अन्नमास्ये (ऋ० १०।९१।५)। **परिचिनुषे परिक्षिपसि**। विभक्तमप्येकसुतेन तत्तयोः परस्परस्योपरि पर्यचीयत (रघु० ३।२४)। **पर्यचीयत अवर्धत**। एता भुवः परिचिनोषि (महावीर० ७।११)। **परिचिनोषि जानासि**। परिचितविविक्तेन मनसा (शा० ५।१०)। **परिचितं विदितम्**। नामैवैतत् परिचितमपि ते विस्मृतं कस्य हेतोः (मुद्रा० १।१)। **उक्तोऽर्थः**। चिरं परिचिताः कस्य वेश्या इव विभूतयः (रा० च०)। **परिचिताः संसृष्टाः सम्बद्धाः**। हेतुः परिचयस्थैर्ये वक्तुर्गुणनिकैव सा (शिशु० २।७५)। **परिचयस्थैर्यमभ्यासदार्ढ्यम्**। जाने तत्र भवती हंसपदिका वर्णपरिचयं करोति (शा० ५)। **उक्तोऽर्थः**। त्रिवृति गोमय-परिचये शृतमश्नाति (कौ० सू० २२।१०-१२)। परिचिदसि (वा० सं० १२।५३)। **परि सर्वतश्चितासीत्याह**।

—**छद् (छद अपवारणे)**। परिच्छन्नो ययौ पार्थो भ्रातृभिः सह पाण्डवः (भा० सभा० ५९।२०)। **परिच्छन्नः सपरिच्छदः**। सेना परिच्छदस्तस्य (रघु० १।१९)। **परिच्छदश्छत्रचामराद्यलङ्करणोपकरणम्**। प्रगल्भाश्चानुरक्ताश्च ते तव स्युः परिच्छदाः (भा० शां० ८३।६)। **परिच्छदाः सेनान्यादयः** (नील०)। शाखावसक्तकमनीय-परिच्छदानाम् (कि० ७।४०)। **परिच्छदः परिधानीयम् आकल्पः, नेपथ्यम्**। साधुशय्यापरिच्छदाः (वि० पु० ४।२।९७)। **परिच्छदाः प्रावरणानि**। नरपतिरतिवाहयाम्बभूव क्वचिदसमेतपरिच्छदस्त्रियामाम् (रघु० ९।७०)। **परिच्छदः परिजनः**। मन्त्री दानमानाभ्यां वशीकृतपरिच्छदः (राज० ३।४९९)। **उक्तोऽर्थः**। विवास्यो वा भवेद्राज्यात्सद्रव्यः सपरिच्छदः (मनु० ९।२४१)। **परिच्छदो गृहोपकरणम्**। विद्यालयं क्षितगृहं सपरिच्छदं तत् (बुद्ध०    )। **परिच्छदो वितानमुल्लोचः, चन्द्रोदयः**। दर्शनीयास्तु काम्बोजाः शुकपत्रपरिच्छदाः (भा० द्रोण० २३।७)। **शुकपत्राभरोमाण इति नील०। पत्रं पक्षः**।

—**छिद् (छिदिर् द्वैधीकरणे)** तस्मादमूलमुभयतः परिच्छिन्नं भवति (कुशम्) (श० ब्रा० ३।८।२।१५)। **परिच्छिन्नं परितश्छिन्नम्, विकृत्तं परिलूनम्**। परिच्छिन्ना भरता अर्भकासः (ऋ० ७।३३।६)। उभयतः परिच्छिन्ना मध्यमं पदं संश्लिष्यामह इति वदन्तः (बौ० ध० २।६।११।२८)। **परिच्छिन्ना विच्छिन्ना भ्रष्टाः**। परिच्छिन्नप्रभावर्द्धि र्न मया न च विष्णुना (कु० २।५८)। **न परिच्छिन्नप्रभावर्द्धिरनवगाढमहिमातिशय इति मल्लिः। परिच्छिन्नो विदितपर्यन्त इति शब्दार्थः**। कथं नामात्मानं परं चैवापरिच्छिद्य

(तन्त्रा० ३।३) । **अपरिच्छिद्य सम्यगविदित्वा, परमार्थतोऽनवसाय । तत्त्वतोऽज्ञात्वा ।** शीर्षच्छेद्यं परिच्छिद्य नियन्ता शस्त्रमाददे (रघु० १५।५१) । **परिच्छिद्य निश्चित्य ।** परिच्छिद्यैव कामानां सर्वेषां चैव कर्मणाम् । मूलं बुद्धीन्द्रियग्रामं शकुन्तानिव पञ्जरे (भा० शां० १८०।२८) ॥ **परिच्छिद्य निरुध्य ।** भगवती नौ गुणदोषतः परिच्छेत्तुमर्हति (माल० १) (भगवती) **नौ तारतम्यं विज्ञातुम्, नौ प्रकर्षापकर्षौ यथातथं विज्ञातुम् ।** ऊर्ध्वं गतं यस्य न चानुबन्धि यशः परिच्छेत्तुमियत्तयाऽलम् (रघु० ६।७७) । **इयदिति न शक्यं वेदितुम् इत्यर्थः ।** परिच्छेदातीतः सकलवचनानामविषयः (मालती० १।३०) । **इदमित्थमिति ज्ञानं परिच्छेदः ।** परिच्छेदो हि पाण्डित्यम् (हितोप० १।१४७)। **परिच्छेदो विवेकः ।** इत्यारूढबहुप्रतर्कमपरिच्छेदाकुलं मे मनः (शा० ५।९) । **परिच्छेदोऽध्यवसायः, निश्चयः, सन्देहान्तगमनम् ।** परिच्छेदव्यक्तिर्भवति न पुरःस्थेपि विषये ( मालती० १।३१ ) । **परिच्छेदोऽसङ्कीर्णं वस्तुस्वरूपम् ।** शक्याशक्यपरिच्छेदं कुर्याद् बुद्धया प्रसन्नया (का० नी० सा० ११।३३) । **परिच्छेदो विविच्य ज्ञानम्, भेदेनानुभूतिः ।** किं वातादीनां ज्वरादीनां च नित्यः संश्लेषः परिच्छेदो वा (सुश्रुत० सूत्र० २४।११) । **परिच्छेदः पृथग्भावः ।**

**—जन् (जनी प्रादुर्भावे)** । यदेको विश्वं परि भूम जायसे (अथर्व० १३। २।३) । सस्येन परिजातः सस्यको मणिः । पा० ५।२।६८ इत्यत्र वृत्तावुदाहरणम् । **परितो जातः परिजातः ।** विद्मा ते सर्वाः परिजाः पुरस्तात् (अथर्व० १९।५६।६) ।

**—जप् (जप जल्प व्यक्तायां वाचि, जप मानसे च)** । हविष्यमन्नं प्रथमं परिजपितं भुञ्जीत (गो० गृ० २।३।१८) । **परिजपितमभिमन्त्रितम् ।**

**—जि (जि जये, अभिभवे च)** । तेन परिजय्यलभ्यकार्यसुकरम् (पा० ५। १।९३) । **परिजय्यं सर्वतो जेयम् । परिः सर्वतो भाव इति न्यासः ।**

**—जॄ (जॄष् वयोहानौ, जॄ वयोहानौ)** । वासांसि परिजीर्णानि (भा० वि० १३।८) । **परिजीर्णानि नूतनानीति विषमपदविवरणम् । श्लिष्यति नामायमर्थः प्रकृते ।**

**—ज्ञा (ज्ञा अवबोधने)** । पर्यपृच्छत्सुहृद्वर्गं पर्यजानन् न चैव ते (भा० वन० १२२।१९) । **पर्यजानन् प्रत्यभ्यजानन् ।** सत्यसन्धः परिज्ञातो यस्य पुत्रः स राघवः (रा० ३।५६।२) । **परिज्ञातः सर्वत्र विदितः ।** तपस्विभिः कैश्चित् परिज्ञातोस्मि (शा० १ ) । **परिज्ञातः प्रत्यभिज्ञातः ।** नीता पौरैः परि-

ज्ञाता पितुरेव निवेशनम् (बृ० क० म० वे० ३।२१४)। **उक्तोऽर्थः।**

**—ज्या (ज्या वयोहानौ)।** तं ब्रह्म प्रपन्नं क्षत्रं (कर्तृ) न **परिजिनाति** (ऐ० ब्रा० ७।२२)। **परिजिनाति हिनस्ति। वेदे** ज्या नित्यं सकर्मकः। **हिंसावृत्तिश्च।**

**—डी (डीङ् विहायसा गतौ)।** परिडीनं तु सर्वतः (भा० कर्ण० ४१। २७)।

**—तन् (तनु विस्तारे)।** इमं तं लोकमद्भिः परितनोति (श० ब्रा० ७। १।१।१३)। अपसलवि सृष्टया रज्ज्वा परितत्य (का० श्रौ० २१।३।२२)। **परितत्य परिवेष्टय।**

**—तप् (तप सन्तापे)।** तं शापमनुसंस्मृत्य पर्यतप्यत भृशं तदा (भा० आदि० १८२।२६)। **पर्यतप्यत दुःखितोऽभवत्, दुर्मना अभूत्।** कं स्वीकृता न विषयाः परितापयन्ति (हितोप० ३।११६)। **परितापयन्ति भृश दुःखयन्ति।** शमयति परितापं छायया संश्रितानाम् (शा० ५।७)। **परितापमौष्ण्यानुभूतिम्।** गुरुपरितापानि गात्राणि (शा० ३।१६)। **सर्वतस्तापः परितापः, आतपकृतस्तापो दाहः।** प्रसक्ते निर्वाणे हृदय परितापं वहसि किम् (माल० ३।१)। **परितापो व्यथा वेदना।** विरचितविविधविलापं सा परितापं चकारोच्चैः (गीत० ७)।

**—तर्क् (तर्क भाषार्थः)।** मनोरथैश्चैव तु चिन्तयामि तथैव बुद्धया परितर्कयामि (रा० ५।३०।१८)। **दाक्षिणात्यास्तु मनोरथः स्यादिति चिन्तयामि तथापि बुद्धयापि वितर्कयामि इत्येवं ५।३२।१३ इत्यत्र पठन्ति। न ह्यहं तं कपिं मन्ये कर्मणा परितर्कयन्** (रा० ५।४६।६)। **रावणस्योक्तिरेषा। परितर्कयन् अनुमिमानः। ऊहमानः। जुष परितर्कणे इति धातुपाठः। परितर्कणमूहो हिंसा वेति दीक्षितः।** कच्चिन्न तर्कयुक्ता वा ये चाप्यपरितर्किताः। त्वया वा तव वाऽमात्यैः बध्यन्ते तात मानवाः (रा० गोरे० २।१०९।१६)॥ **अपरितर्किता न्यायतोऽपरीक्षिताः।**

**—तुद् (तुद व्यथने)।** आरुह्य वृक्षान्निर्मूलान् गजः परितुदन्निव (भा० उ० ७५।८)। **पादैर्मर्दयन्निव। परिरुजन्निति पाठान्तरम्।**

**—तुष् (तुष प्रीतौ)** दूर्वाङ्कुरैरपि संभृतया सपर्यया किल परं परितुष्यसि (भा० पु० ५।३।६)। **परितुष्यसि अतिमात्रं प्रसीदसि।** व्यसनेषु च सर्वेषु

पितेव भवति दुःखितः। उत्सवेषु च सर्वेषु पितेव परितुष्यति (रा० २।२।३३)॥ **परितुष्यति हृष्यति नन्दति।** वयमिह परितुष्टा वल्कलैस्त्वं दुकूलैः (भर्तृ० ३।५४)। **परितुष्टाः सन्तुष्टाः तृप्ताः।** आ परितोषाद् विदुषां न साधु मन्ये प्रयोगविज्ञानम् (शा० १।२)। **परितोषः प्रसत्तिः।**

**—तृद्** (उ तृदिर् हिंसानादरयोः)। परि तृन्धि पणीनामारया हृदया कवे (ऋ० ६।५३।५)। **परितृन्धि अतिविध्य।**

**—तॄ** (तॄ प्लवनतरणयोः)। यं शम्बरं पर्यतरत् (अथर्व० २०।३४।१२)। **पर्यतरत् पर्यभवत्।**

**—त्यज्** (त्यज हानौ)। प्रारब्धमुत्तमगुणा न परित्यजन्ति (भर्तृ०, मुद्रा० २।१७)। **न परित्यजन्ति न विजहति न विरमयन्ति।** या पत्या वा परित्यक्ता (मनु० ९।१७५)। **परित्यक्ता निराकृता प्रत्यादिष्टा।** दिवं देवाः परित्यज्य (भा० पु० ५।२।१६)। **परित्यज्य विहाय।** यो ध्रुवाणि परित्यज्य अध्रुवाणि निषेवते (हितोप०)। **परित्यज्य परिहृत्य, उपेक्ष्य।**

**—त्रस्** (त्रसी उद्वेगे)। विद्रवन्ति परित्रस्ताः (रा० ३।५४।७)। **परित्रस्ताः कम्पिताः, भीता उद्विग्नाः।**

**—त्रै** (त्रैङ् पालने)। आत्मनश्च परित्राणे……।……घ्नन् धर्मेण न दुष्यति (मनु० ८।३४९)। **परिः सर्वतो भावे। शरीरभार्याधनपुत्ररक्षार्थमिति मेधातिथिः।**

**—त्वर्** (ञि त्वरा संभ्रमे)। परि त्वरमाण आयातु मित्रः (कौ० सू० ५५)। **परित्वरमाण इतस्त्वरितं क्रामन्।**

**—दा** (डुदाञ् दाने)। तामु ते परिदद्मसि (अथर्व० १।१४।३)। **रक्षणार्थं समर्पयामः। रक्षणार्थं दानं परिदानमिति सायणः।** अस्मिन्नर्थे परिददातिः शौनकीयायां संहितायामन्यत्रापि १।३०।२, ३।११।७, ८।२।२०, १९।५०।७ इत्यादिषु प्रदेशेषु प्रयुक्तः। प्रजापतिर्हि वैश्याय सृष्ट्वा परिददौ पशून्। ब्राह्मणाय राज्ञे च सर्वाः परिददे प्रजाः(मनु० ९।३२७, भा० शां० ६०।२३)॥ **उक्तोऽर्थः।** परिदद्या हि धर्मज्ञे भरते मम मातरम् (रा० २।५३।१८)। **परिदानं रक्ष्यतया प्रदानमिति भूषणकारः।** यौ ते श्वानौ यम रक्षितारौ चतुरक्षौ पथिरक्षी नृचक्षसौ। ताभ्यामेनं परिदेहि राजन्(ऋ० १०।१४।११)। **अत्र रक्षणमात्रमर्थो न तु रक्षार्थं दानम्।** त्रि ते दुष्वप्न्यं सर्वमाप्त्ये परिदद्मसि (ऋ० ८।४७।१५)। **परिदद्मसि परिदद्मः परादद्मः परित्यजामः। अन्यत्र स्थापयाम**

**इति वेति सायणः ।** ब्रह्मणे वै तद्यजमानस्य पशून् परिददाति गुप्त्यै (श० ब्रा० १।७।१।८) । **इह दानमात्रमर्थः, रक्षाया गुप्त्यै इत्यनेनोक्तत्वात् ।** छद्मना परिददामि मृत्यवे (उत्तर० १।४५) । **इहापि दानमात्रमर्थः ।** अग्निमेत्र तत् सर्वतो गोप्तारं परिदत्ते (ऐ० ब्रा० १।२८) । **परिदत्ते प्रार्थयत इति षड्-गुरुशिष्यः । स्वीकरोतीति च सायणः ।** यास्वेव देवतासु परीत्तो भवति तास्वेवैनं पृच्छति (शां० गृ० २।१२।२) । **परीत्तः परिदत्तः समर्पितः ।** आत्मन एवैषा परीत्तिः (तै० ब्रा० २।३।५।५) । **परीत्तिः परिदानं रक्षा ।** ब्राह्मणाय गृहेवासिने परिदाय गृहानेति (तै० ब्रा० १।१।१०।६) । **त्वमेवैतान् रक्षेति तस्मै समर्प्येत्याह ।** स तत्र सीतां परिदाय मैथिलीम् (रा० ३।१४।३६) । **रक्षार्थमर्पयित्वेत्यर्थः ।** मुहुर्मुहुश्च वैदेहीं परिदाय महायशाः (रा० ७।४६।१६) । **तपस्विनीभ्यो रक्षार्थं प्रदायेत्यर्थः ।** **यः परिवेत्त्रे कन्यां ददाति स परिदायी ।** **हारीतवचनं च** विज्ञानेश्वरो याज्ञवल्क्ये मिताक्षरायां (३।२६५) उद्धरति —ज्येष्ठेऽनिविष्टे कनीयान्निविशमानः परिवेत्ता भवति परिवित्तिर्ज्येष्ठः परिवेदनी कन्या परिदायी दातेति । स यदेतामत्रात्मनः परिदां न वदेत् (श० ब्रा० ६।२।१।१७) । **परिदाऽऽत्मसमर्पणवाक् ।**

—**दिव्** (**दिवु क्रीडाविजिगीषाव्यवहारद्युतिस्तुतिमोदमदस्वप्नकान्तिगतिषु, दिवु परिकूजने**) । परिदेवन्ति करुणं सर्वे मानुषबुद्धयः (हरि० २।१२। ३१) । **परि देवन्ति देवयन्ते परिदेवयन्ते विलपन्ति ।** खरदूषणयोर्भ्रात्रोः पर्यदेविष्ट सा पुरः (भट्टि० ४।३४) । **पर्यदेविष्ट पर्यदेवीत् पर्यदीदिवत् व्यलपीत् ।** मां पश्य मद्रि मा पुत्रौ परिदेवीश्च देवि मा (अवदा० जा० ६।८६) । **मा परिदेवीः=माऽनुशोचीः ।** आशङ्कमाना तत्पापमात्मानं पर्यदेवयत् (भा० वन० ६५।३०) । **उक्तोऽर्थः ।** परिदेवति तान् वीरान् धृतराष्ट्रो महीपतिः (भा० वन० २३८।३) । करुणं परिदेवतीम् (भा० उ० १७८।१) । **परिदेवतीं परिदेवयमानाम्, विलपन्तीम् । चोदयन्तीं पुनः पुनर् इति पाठान्तरम् ।** अथ ह्ययं परिद्यून उवाच (श० ब्रा० ११।४।१।८) । **परिद्यूनः खिन्नः ।** दृष्ट्वा पुत्रपरिद्यूनं किमकुर्वत मामकाः (भा० द्रोण० ८५।४) । **पुत्र परिद्यूनं पुत्रवधसन्तप्तम् ।** शोकजाश्रुपरिद्यूना (रा० २।४७।२) । **परिग्लाना ।** एतद्योनीनि भूतानि तत्र का परिदेवना (भा० शां० २२४।१७) । पञ्चभिः संभृतः कायो यदि पञ्चत्वमागतः । कर्मभिः स्वशरीरस्थैस्तत्र का परिदेवना (याज्ञ० ३।६) ॥ **किमर्थको विलाप इत्यर्थः ।**

—**दिश्** (**दिश अतिसर्जने, दिशिरुच्चारणक्रिय इति भाष्यम्**) । यतिथीं तत्समां परिदिदेश (श० ब्रा० १।८।१।५) । तिस्रो वै गतयो राजन् परिदिष्टाः

स्वकर्मभिः । मानुष्यं स्वर्गवासश्च तिर्यग्योनिश्च (भा० वन० १२४६७) । **परिदिष्टा निश्चिताः, मताः, अभ्युपगताः ।**

**—दिह्** (**दिह उपचये**) । यद्विजामन् परुषि वन्दनं भुवदष्ठीवन्तौ परि कुल्फौ च देहत् (ऋ० ७।५०।२) । **परिदेहत् सर्वत उपलिम्पेत् ।**

**—दी** (**दी गतिकर्मा छान्दसः**) । रथो यद् वां पर्यर्णांसि दीयत् (ऋ० १।१८०।१) । **परिदीयत् परिगच्छति । परितो गच्छति ।** आपो नप्त्रे घृतमन्नं वहन्तीः स्वयमत्कैः परिदीयन्ति यह्वीः (ऋ० २।३५।१४) । पर्यन्या नाहुषा युगा मह्ना रजांसि दीयथः (ऋ० ५।७३।३) । उदन्वता परिदीया रथेन (ऋ० ५।८३।७) । **उभयत्र पूर्वोक्त एवार्थः । परिदीया इत्यत्र सांहितिको दीर्घः ।**

**—दू** (**दूङ् परितापे**) । दह्यतीव शरीरं मे संवृतस्य तवेषुभिः । मर्माणि परिदूयन्ते मुखं च परिशुष्यति (भा० भीष्म०) । **परिदूयते परितप्यते ।**

**—दृश्** (**दृशिर् प्रेक्षणे**) । यश्चिदापो महिना पर्यपश्यत् (ऋ० १०।१२१।८) । **परितः पश्यतीत्यर्थः ।** यथादर्शे तथात्मनि यथा स्वप्ने तथा पितृलोके । यथाप्सु परीव ददृशे तथा गन्धर्वलोके (कठोप० २।३।५) । **परिददृशे दृष्टेर्गोचरो भवति ।** उपायः परिदृश्यताम् (भा० वन० ) । **परि दृश्यतां विचीयतामनुसन्धीयताम् ।** त्वष्टेव रूपं सुकृतं स्वधित्यैना एहाः परि पात्रे ददृश्राम् (अथर्व० १२।३।३३) । **ददृश्यामिति पाठान्तरम् । परितः पश्येयम् ।** विद्वद्भिः परिदृष्टोयं शिष्टो विधिविपर्ययः (भा० आश्व० ३।१७) । के देशाः परिदृष्टास्ते (भा० आश्रम० ३७।४) । **परितो दृष्टाः । गमिकर्मीकृताः ।** परिदृष्टानि तीर्थानि गङ्गा चैव मया नृप (भा० आश्रम० ३७।५) । **उक्तोऽर्थः ।** अन्यथा परिदृष्टानि मुनिभिस्तत्त्वदर्शिभिः । **अन्यथा** परिवर्तन्ते वेगा इव नभस्वतः (भा० वन० ३०।३३) ॥ बाह्याभ्यन्तरस्तम्भवृत्तिर्देशकालसङ्ख्याभिः परिदृष्टो दीर्घः सूक्ष्मः (यो० सू० २।५०) । **परिच्छिन्नो दृष्टः परिदृष्टः ।** कस्तमिच्छेत्परिद्रष्टुम् ( भा० शां० ६५७६ ) । **तत्र दृशं पातयितुं कामयेतेत्याह ।**

**—दृ** (**दृ विदारणे**) । प्रजापति र्वरुणायाश्वमनयत् स स्वां देवतामार्च्छत् स पर्यदीर्यत (तै० सं० २।३।१२।१) । **पर्यदीर्यत परितः सर्वतोऽदीर्यत विपन्नोऽभवदिति भट्टभास्करः । जलोदरनाम्ना रोगेणोच्छूनोऽभवदिति संस्कृतशार्मण्यकोषः ।** ता वरुणगृहीताः परिदीर्णाः (श० ब्रा० २।५।२।२) । **उदश्वयन्, उच्छूना अभवन्नित्यर्थः ।**

—**धा (डुधाञ् धारणपोषणयोः)**। उत्तरवेदिमभितः पैतुद्रवान्परिधीन् परिदधाति (भा० श्रौ० ७।५।१)। **परितो दधाति रचयति प्रणयति**। परिधीन्परिदधात्यार्द्रानैकवृक्षीयान् बाहुमात्रान् (का० श्रौ० २।८।१)। परीदं वासो अधिथाः स्वस्तये (अथर्व० २।१३।३)। **परिपूर्वो दधातिराच्छादने वर्तते**। परि धत्त धत्त वाससैनम् (आप० मं० २।२।६)। **वासः परिधत्ते कश्चित्, कश्चिच्च वाससा परिधीयत इत्युभयथा प्रयोगाः प्रथन्ते**। प्रियमेवैनं तनुवा परिदधाति (तै० ब्रा० ५।१।५।२३)। **परिदधाति संव्ययते**। विवासा व्रीडिता भृशम्···नीवीमाश्वथ पर्यधात् (भा० पु० ६।१।३०)। कृष्णाजिनानि परिधित्समानान् (भा० उ० २६।४५)। ताप्यं यजमानं परिधापयति (तै० ब्रा० १।३।२।१)। **वाससाऽऽच्छादयतीत्यर्थः**। इन्द्रस्य त्वा वर्मणा परिधापयामः (अथर्व० १९।४६।४)। **उक्तोऽर्थः**। एतदशिष्यन्तः पुरस्ताच्चोपरिष्टाच्चाद्भिः परिदधति (छां० उ० ५।२।२)। **परिदधति उपस्तृण्वन्ति**। परि त्वाग्ने पुरं वयं सहस्य धीमहि (ऋ० १०।८७।२२, तै० सं० १।५।६।४)। **परितो धारयामः. परिधिं कुर्मः**। परीममिन्द्रं महे क्षत्राय धत्तन (अथर्व० १९।२४।२)। **उक्तोऽर्थः**। परि त्वाधात्सविता देवो वर्चसा (अथर्व० १३।१।२०)। **पर्यधात् पर्यवेष्टयत्**। नाभिं पैतुदारवैः परिदधाति (का० श्रौ० ५।४।१६)। **उक्तोऽर्थः**। द्रुहे रीषन्तं परि धेहि राजन् (ऋ० २।३०।९)। **परिधेहि परितो धारय, प्रक्षिपेत्यर्थः। रिषन्तं हिंसन्तं वज्रमिति शेषः**। परि पूषा परस्ताद्धस्तं दधातु दक्षिणम्(ऋ० ६।५४।१०)। **परिदधातु परिधानं (परिधायकं) निवारकं करोत्विति सायणः**। स्तीर्णं बर्हिः स्वर्णरे श्रवांसि दधिरे परि (ऋ० ५।१८।४)। **परिदधिरे परितो निधीयन्ते। श्रवांस्यन्नानि हविर्लक्षणानि**। अग्निभ्य एवैतदात्मानं परिदधाति (शां० ब्रा० २।५)। **परिदधाति परिददाति समर्पयति स्वस्य रक्षणाय**। मित्रावरुणौ त्वोत्तरतः परिधत्ताम् (तै० सं० १।१।११)। **सर्वतो रक्षतामित्यर्थः**। यौ ते श्वानौ यम रक्षितारौ चतुरक्षौ पथिषदी नृचक्षसा। ताभ्यां राजन्परिधेह्येनम् (अथर्व० १८।२।१२)॥ **उक्तोऽर्थः**। दृष्टिं परिदधे कृष्णं रौहिणेये च दारुणाम् (हरि० २।१४।१६)। **परितः पातयामासेत्यर्थः**। न हिन्वानासस्तितिरुस्त इन्द्रं परि स्पशो अदधात्सूर्येण (ऋ० १।३३।८)। **पर्यदधात् परिहितवान्। व्यवहितानकरोदित्यर्थः**। उत्तमया परिदधाति (ऐ० ब्रा० १।१६)। **अनुवचनं समापयतीत्यर्थः**। स यावन्मन्येत तावदधीत्यैतया परिदधीत (आश्व० गृ० ३।२।६)। **उक्तोऽर्थः**। विभाव्य लोभानृतजिह्महिंसनाद्यधर्मचक्रं गमनाय पर्यधात् (भा० पु० १।१५।३७)। **गमनाय महाप्रस्थानाय मतिं चकार, मनो दधे, धृतोऽभूत्। अस्थाने परिः। तत्रार्थे केवल एव दधातेः प्रयोगमवतरन्दृष्टो न परिपूर्वः**। तं दृष्ट्वा वानरा घोरं स्थितं

शैलमिवासुरम्। गाढं परिदधुः सर्वे······(रा० ४।४८।१८) ।। तं परिचिक्षिपुरित्यर्थः। सुपरिहितं परिधिभिः (स्थण्डिलम्) (चरक० विमान० ८। ११)। **सुपरिहितं सुवेष्टितम्।** वप्रैः श्वेतचयाकारैः परिखाभिश्च सर्वतः। अधः परिहितामिव (लङ्काम्) (रा० ५।६।१५) ।। **परिहितां वेष्टितां परिकरिताम्, मेखलिताम्।** स्वधया परिहिता (ब्रह्मगवी) (अथर्व० १२।५।३)। **परिहिता वेष्टिता।** गाढं परिहितः (रा० ४।१२।१५)। **वाससा दृढं संवीत इत्यर्थः।** एकशाटीपरिहितः (व० धर्म० १०।६)। **परिहितो वेष्टितः।** स्थिराघातमेकवर्णमशुष्कमनूषरममरुपरिहितमक्लिन्नम् (गो० गृ० ४।७।६)। **अमरुपरिहितं धन्वनाऽपरिवेष्टितम्।** अथास्य स्थानं व्रजपरिहितं प्रपाद्य (लौ० गृ० ३।४)। **परिहितमधिष्ठितम्।** सर्वे त्रयः ऋतवः परिहिता भवन्ति (ऐ० ब्रा० ७।८)। **परिहिताः कृतपरिधयः।** ततः सम्प्रेष्यति परिस्तृणीत परिधत्ताग्निं परिहितोऽग्निर्यजमानं भुनक्तु (आप० श्रौ० १।४।१४।१२)। **उक्तोऽर्थः।** परिहिते प्रातरनुवाके (आश्व० श्रौ० ६।६)। **समाप्त इत्यर्थः।** तत्रोपविष्टः···समिद्भिरग्निमुपसमाधाय परिधिभिश्च परिधाय (चरक० शारीर० ८।२०)। **परिधिभिः चतुर्भिः पालाशैः बृहद्भिर्दण्डैर्वेष्टयित्वेत्यर्थः।** तृणैः परिधाय (गो० गृ० २।६।८)। **वेष्टयित्वेत्यर्थः।** अश्विनो रूपं परिधाय मायाम् (अथर्व० २।२९।६)। **परिधाय आधाय धृत्वा।** स्रग्वी सुकेशः परिधाय चान्यथा (भा० वि० ११।६)। अन्यथा वेषं कृत्वेत्यर्थः। विकृष्य चापं परिधाय सायकम् (रा० ३।५९।२६)। **परिधाय सन्धाय, आरोप्य।** मृदुचीनैः समीचीनैः सिचयैः परिधापितम् (शि० भा० २।१५) **परिधापितं परिवेष्टितम्।** अथातः परिधानीया एव (ऐ० ब्रा० ६।७)। **ऋचो वक्ष्यन्त इति शेषः। परिधानं समापनमिति सायणः। याभिरनुवचनं समाप्यते ताः।** सप्तास्यासन् परिधयः त्रिः सप्त समिधः कृताः (ऋ० १०।९०।१५)। **उक्तोऽर्थः पुरस्तात्।** यत्रेदं ब्रह्म क्रियते परिधिर्जीवनाय कम् (अथर्व० ८।२।२५)। **परिधिः परितो धीयत इति रक्षः पिशाचादिनिवारकः प्राकार इति सायणः।** बर्बरान् परिधीभूतान् परिभूय स्वतेजसा (शि० भा० २८।२७)। परिधिः प्राकार इत्युक्तोऽर्थः। परिधेर्मुक्त इवोष्णदीधितिः (रघु० ८।३०)। **परिधिः परिवेषः। परिवेषस्तु परिधिरुपसूर्यकमण्डले इत्यमरः।** मेघश्यामः कनकपरिधिः कर्णविद्योतविद्युत् (भा० पु० ८।७।१७)। **परिधिः परिधानम्। कनकं हिरण्यं तद्वत् परिधानमस्य। पीताम्बर इत्यर्थ इति श्रीधरः।** श्यामं हिरण्यपरिधिं नवमाल्यबर्ह-धातुप्रवालनटवेषम् (भा० पु० १०।२३।२२)। **उक्तोऽर्थः।** पिबद्भिरिव खं दृग्भिर्दहद्भिः परिधीनिव (भा० पु० ८।१५।१०)। **परिधयो दिशः।** वीक्ष्य रन्तुमनसः सुरनारीरात्तचित्रपरिधानविभूषाः (कि० ९।१)। **परिधानं वासः। आत्मपरि-**

धानार्थं सीता कौशेयवासिनी। सम्प्रेक्ष्य चीरं सन्त्रस्ता पृषती वागुरामिव (रा० २।३७।६) ॥ **आत्मपरिधानार्थं शरीरावरणार्थम्।** ततस्तान् परिधानेन वाससा स समावृणोत् (भा० वन० ६१।१४)। **परिधानेन परिधायकेन प्रावारभूतेन।** तारणश्चरणो धाता परिधा परिपूजितः (लिङ्गपु० पू० ६५। ४१)। **परितो दधाति परिधा पृथिवी, तद्रूप इत्यर्थः।**

—**धाव्** (**धावु गतिशुद्धयोः**)। इन्दो यदद्रिभिः सुतः पवित्रं परिधावसि (ऋ० ९।२४।५)। **परिधावसि परिस्रवसि।** ऽव्यो वारे परि धाव मधु प्रियम् (ऋ० ९।८६।४८)। **परिधाव पवस्व परिस्रावय।** आरुह्य यानं परिधावतां भवान् (भा० वि० ११।६)। **इतस्ततः संचरत्वित्यर्थः।** रुरुश्चापि वनं सर्वं पर्यधावत् समन्ततः (          )। परिरत्रानर्थकः, तदर्थस्य समन्तत इत्यनेनैव गतेः। कुपितानां दोषाणां शरीरं परिधावताम् (सुश्रुत० १।९१।५)। **शरीरे संचरतामित्यर्थः।** परिधावन् महीं कृत्स्नां कापिलेयो महामुनिः (भा० शां० २१८।६)। **परिधावन् विचरन्, पर्यटन्।** असीनादाय शक्तीश्च भार्गवं पर्यधावयन् (भा० आश्व० २९।१२)। **स्वार्थे णिच्। सकर्मकोऽत्र धातुरुपसर्गवशात्।**

—**धी** (**धीङ् आधारे**)। परि त्वाग्ने पुरं वयं विप्रं सहस्य धीमहि (ऋ० १०।८७।२२)। **परिधीमहि परिधिं कुर्मः।**

—**धृ** (**धृञ् धारणे**)। (नद्याः) एतस्याः सलिलं मूर्ध्ना वृषाङ्कः पर्यधारयत् (भा० वन० १०९०७)। दश मासान् परिधृता जायन्ते (भा० शां० १२ ५२९)। **परिधृता धृता ऊढाः।**

—**धृष्** (**धृष प्रसहने**)। निक्षिप्तमेतद् भुवि पन्नगास्तु रत्नं समासाद्य परामृशेयुः। यक्षास्तथोच्छिष्टधृतं सुराश्च निद्रावशाद्वा परिधर्षयेयुः (भा० आश्व० ५७।२३) ॥ **धर्षयेयुरास्कन्देयुः।**

—**ध्वंस्** (**ध्वंसु अवस्रंसने गतौ च**)। समुद्धतनिधानानि परिध्वस्ताजिराणि च (वेश्मानि) (रा० २।३३।१८)। **परिध्वस्तानि मार्जनादिरहितान्यजिराणि चत्वराणि येषु तानि। संस्कृतशार्मण्यकोषस्तु परिध्वस्तान्युत्सन्नानीत्याह।** अथ रेणुपरिध्वस्तं समुत्थाप्य नराधिपम् (रा० २।८२।१०)। **पांसुभिरावृतम्, रजोमलिनम्, धूलिधूसरितम्। समुद्ध्वस्तमिति पाठान्तरम्।** भिन्नमुष्टिपरिध्वस्तकार्मुक० (रा०        )।

—नक्ष् (णक्ष गतौ) । उरु वां रथः परिनक्षति द्याम् (ऋ० ४।४३।५)। **परिणक्षति व्यश्नुते तिक्रामति ।**

—नन्द् (टुनदि समृद्धौ) । स तैः परिवृतो राजा कथाभिः परिनन्द्य ताम् (भा० आश्रम० १९।३) । **परिनन्द्य रञ्जयित्वा, विनोद्य ।**

—नम् (णम प्रह्वत्वे शब्दे च) । ज्याके परि णो नम (अथर्व० १।२।२) । **अस्मान् परिहृत्य नमेत्यर्थः ।** ममाहारः सुष्ठु न परिणमति (स्वप्न० २) । **परिणमति जीर्यति पच्यते ।** यच्छकचं ग्रसितुं ग्रस्यं परिणमेच्च यत् । (भा० उ० ३४।२४) । **उक्तोऽर्थः ।** सर्वं विपरीतं परिणमति (मृच्छ० १) । **परिणमति सम्पद्यते निष्पद्यते ।** शाखाभृतां परिणमन्ति न पल्लवानि (कि० ५।३७) । **न जीर्यन्ति, जीर्णानि न भवन्ति ।** एकाकिनि वनवासिन्यराजलक्ष्मण्यनीतिशास्त्रज्ञे । सत्त्वोच्छ्रते मृगपतौ राजेति गिरः परिणमन्ति (पञ्चत० १।५) । **परिणमन्ति परिपाकवत्यो भवन्ति । अन्वर्था भवन्तीति तात्पर्यार्थः ।** तमांसि ध्वंसन्ते परिणमति भूयानुपशमः (महावीर० १।१२) । **प्रवृद्धो भवतीत्यर्थः ।** पाच्यांश्च सर्वान्परिणामयेद्यः (विश्वयोनिः) (श्वेता० उ० ५।५) । **पृथिव्यादीन् परिणामयोग्यान्परिणामं कारयेत् ।** तत्र काकसहस्राणि तां निशां पर्यणामयन् (भा० सौ० १।३६) । **पर्यवसाययन्, व्यगमयन्, अक्षपयन्, अनयन् ।** उदासीनश्चेन्मध्यमं लिप्सेत । यतः शत्रुमतिसन्दध्यात्, मित्रस्योपकुर्यादुदासीनं वा दण्डोपकारिणं लभेत, ततः परिणमेत (कौ० अ० ७।१८।२७) । **ततः परिणमेत तस्याभिमुखो भवेत्, तं पक्षं समाश्रयेत् ।** न सुमेरुवप्रप्रणयप्रगल्भा वा दिक्करिणः परिणमन्त्यणीयसि वल्मीके (हर्ष० पृ० १८५) । **तिर्यग्दन्तप्रहारं कर्तुं नमनं परिणमनमुच्यते ।** विष्के नागः पर्यणंसीत् स्व एव (शिशु० १८।२७) । **उक्तोऽर्थः ।** परिणमन्···भीतवन्ध्वर्तिष्ट (दशकु० पृ० १६८) । **पूर्वोक्त एवार्थः ।** गजो हि निर्मलशिलातलेषु स्वबिम्बं दृष्ट्वा प्रतिगजोऽयमिति मन्यमानो मोहात्तस्मिन्परिणतो दन्तभङ्गमवाप्नोति (का० नी० सा० १२।१७।११ जयमङ्गलायाम्) । **उक्तोऽर्थः ।** योगिनां परिणमन् विमुक्तये केन नास्तु विनयः सतां प्रियः (कि० १३।४४) । **परिणमन् सम्पद्यमानः ।** ता एवौषधयः कालपरिणामात् परिणतवीर्या (भवन्ति) (सुश्रुत० १।२०।११) । **कालात्ययेन परिवर्ततेऽन्यथा भवत्यासां वीर्यमित्याह ।** परिणतो बुद्धया वयसा च (रा० २।४३।१५) । **परिणतो वृद्धः ।** शब्दब्रह्मविदः कवेः परिणतप्रज्ञस्य वाणीमिमाम् (उत्तर० ७।२१) । **परिणता परिपाकं गता, परिपक्वा प्रवृद्धा ।** परिणतशरच्चन्द्रकिरणैः (भर्तृ० ३।४९) । **परिणतः पूर्णः ।** सम्प्रति परिणतमहः (नागा० ३) । **परिणतमवसितम् ।** पतति परिणतारुणप्रकाशः (रेणु)

(शा० १।२६) । **परिणतारुणोऽस्तमितोऽर्कः** । लताभावेन परिणतमस्या रूपम् (विक्रम० ४) । **परिणतं परिवृत्तम्** । स्रोतोमूर्त्या भुवि परिणतां रन्तिदेवस्य कीर्तिम् (मेघ० ४७) । **उक्तोऽर्थः** । किंस्वित् भित्त्वार्णवाणांस्युपरि परिणतः सर्वतोऽप्यौर्ववह्निः (बालरा० ७।३०) । **परिणतः प्रवृद्धः** । सूर्ये परिणते सति (भा० वि० ३२।१) । **पञ्चधा विभक्तस्याह्नश्चतुर्थभागं प्राप्ते सति । उपास्तमयमित्यर्थः** । अनेन समयेन परिणतो दिवसः (काद०) । **अवसानं गतः** । लज्जापरिणतैः (वदनकमलैः) (भर्तृ० १।४) । **परावृत्तैः, अन्यतः कृतैः** । वप्रक्रीडापरिणतगजप्रेक्षणीय ददर्श (मेघ० १।२) । **तिर्यग्दन्तप्रहारस्तु गजः परिणतो मत इति कोषः** । विषाणभङ्गमुन्मत्ता मदहानिं च दिग्गजाः । यस्य वक्षःस्थले प्राप्ता दैत्येन्द्रपरिणामिताः (वि० पु० १।१५।१५१) ॥ **परिणमनाय तिर्यग्दन्तप्रहाराय नामिता इत्यर्थः** । परिणाम्य निशां तत्र प्रभाते प्रत्यबुध्यत (रा० ३।८।१) । **परिणाम्य परिणमय्य नीत्वा विगमय्य, क्षपयित्वा समाप्य समापय्य** । परिणाम्य निशां तु सुखं प्राप्ता जनेश्वराः (भा० भीष्म० ८७।१) । **उक्तोऽर्थः** । निमित्तं मन्यमानास्तु परिणाम्य महागजाः । जगृहुर्विभिदुश्चैव चित्राण्याभरणानि च (भा० कर्ण० २८।२५) ॥ **परिणाम्य नमयित्वा । महान्तो गजा येषां ते महागजा गजारोहाः । हस्तिनमिति शेषः । संस्कृतशार्मण्यकोषकारौ त्वन्यथा व्याचक्षाते । महागजा इति कर्मधारय इति मन्येते । एवं सति परिणाम्येत्यत्र णिच आनर्थक्यं च नेक्षेते । निमित्तं मन्यमाना इत्युक्तेरसङ्गतिं चापि नावबुध्येते** । परिणामस्वभावास्त्रिगुणा नापरिणम्य क्षणमवतिष्ठन्ते (सां० का० ६४ व्याख्यायाम्) । **अपरिणम्यावस्थान्तरमगत्वेत्यर्थः** । अपरिणामोपशमो दारुणो लक्ष्मीज्वरः (काद० शुकनासोपदेशे) । **परिणामः परिपाकः** । परिणामतापसंस्कारदुःखैर्गुणवृत्तिविरोधाच्च दुःखमेव सर्वं विवेकिनः (यो० सू० २।१५) । कालस्य परिणामेन (हरि० १।१६।१६) । **कालक्रमेणेत्यर्थः** । इयं च वर्तते संध्या परिणाममहर्गतम् (वि० पु० १।१५।२६) । **परिणामोऽवसानम्** । दिवसाः परिणामरमणीयाः (शा० १।३) । **उक्तोऽर्थः** । अन्नं न सम्यक् परिणाममेति (सुश्रुत० १।२४५।१०) । **परिणामो जरा जीर्णता** ।

**—नश् (णश व्याप्तौ छान्दसः)** । न हि ते अन्तः परीणशे (ऋ० १।५४।१) ।

**—नह् (णह बन्धने)** । आचार्योऽहतेन वसनेन परिणह्येत् (गो० गृ० ३।२।३५) । **अक्षिणी बध्नीयात्** । न तां वध्री परिणहेच्छतचर्मा महातनुम् (भा० आदि० ३०।२३ ) । **परिणहेत् परिणह्येत् वेष्टयेत्** । **वध्री एकतन्तुका चर्मरज्जुः** । स जयति परिणद्धः शक्तिभिः शक्तिनाथः (मालती० ५।१) ।

**परिणद्धः परिगतः।** तूणीरपट्टपरिणद्धभुजान्तरालम् (माल० ५।१०) **। परिणद्धं परिक्षिप्तं वेष्टितम्।** कपाटवक्षाः परिणद्ध-कन्धरः (रघु० ३।३४) **। परिणद्धकन्धरो विशालग्रीवः। परिणाहवती कन्धरा यस्य सः। परिणाहो विशालतेत्यमरः।** परीणाहः (याज्ञ० २।१६७) **। परीहार इत्यर्थः।** धनुःशतं परीणाहो ग्रामे क्षेत्रान्तरं भवेदिति **तत्र पाठः। सर्वतोदिशमनुप्तसस्य सर्वग्रामीणसाधारणं क्षेत्रम्।** उरु वातायेति परीणाहमपच्छाद्य (आप० श्रौ० १५।१७।८)**। परितो नीडे नद्धः कटः परीणाह इति रुद्रदत्तः।** पत्नी पारीणह्यस्येशे (तै० मं० ६।२।१।१) **। परीणद् गेहं भवति। परिपूर्वान्नहेः क्विप्। नहिवृतिवृषीति दीर्घः। परीणहि भवं परीणह्यं गृहोपकरणम्।**

—**नी (णीञ् प्रापणे)।** स सद्म परि णीयते होता मन्द्रो दिविष्टिषु। उत पोता निषीदति (ऋ० ४।९।३) **। परिणीयते नीयते प्राप्यते। सद्म बर्हिः सदः। परिरत्र नान्तरमर्थं करोति।** विरोचमानं परि षीं नयन्ति (ऋ० १।९५।२) **।** ताभिर्ह्यग्निं परिणिन्युः (शां० ब्रा० २८।२) **।** बुध्नादेवैनमग्रं देवतानां पर्यणयत् (तै० सं० २।३।४।३) । अग्रमेवैनं परिणयति (पञ्च० ब्रा० ६।९।११) । **अत्राप्युपसर्गो नार्थं विशिनष्टि।** पञ्चालराजं द्रुपदं गृहीत्वा रणमूर्धनि । पर्यणयत भद्रं वः सा स्यात्परमदक्षिणा (भा० आदि० १३८।३) ।। **परिणयत नयत उपनयत वा। उपस्यार्थे परिः।** अपश्यं युवतिं नीयमानां जीवां मृतेभ्यः परिणीयमानाम् (अथर्व० १८।३।३) ।। **अत्रापि परेरल्प एवार्थः। इदं च व्यक्तं प्रथमचरणे नीयमानामित्यनुपसृष्टस्य नयतेः प्रयोगात्। अथवाऽर्थवान्परिः। शवं परित. प्रसव्यं नीयमानां गामनुस्तरण्याख्याम् इत्याह।** परीमे गामनेषत (ऋ०।१५५।५, वा० सं० ३५।१०, अथर्व० ६।२८।८) **। पर्यनेषत परितः सर्वतो नयन्ति। गृहमिति शेषः।** वाजिनमिव ह्येनं सन्तं परिणयन्ति (ऐ० ब्रा० २।५) **। एनं पशुम्। उदितचर एव वाक्यार्थः।** इषं मदन्तः परि गां नयामः (अथर्व० ६।२८।१) । **परिणयामः सर्वतः सं चारयामः।** आज्ञापयद्राक्षसेन्द्रः पुरं सर्वं सचत्वरम्। लाङ्गूलेन प्रदीप्तेन रक्षोभिः परिणीयताम् (रा० ५।५३।५) ।। **परिणीयतां परितो नीयतां भ्रमणं कार्यताम्। यथा नयतिः केवलो द्विकर्मकस्तथा परिणयतिरपि।** वरः कन्यामग्निं त्रिः परिणयति (अ० १४।१।३९) **। परिणयति परितो नयति।** अगृह्णां यच्च ते पाणिमग्निं पर्यणयं च यत् (रा० २।४२।८) । **प्रदक्षिणमनयमित्यर्थः। त्वामिति शेषः।** परिणेष्यति पार्वतीं यदा तपसा तत्प्रवणीकृतो हरः (कु०४।४२)**। परिणेष्यति वक्ष्यति**

**विवक्ष्यति उद्वक्ष्यति, स्वीकरिष्यति, उपयंस्यते ।** चतुः परिणयति । समितं संकल्पेथामिति पर्याये पर्याये ब्रह्मा ब्रह्मणयं जपेत् (मा० गृ० १।१०।१८-१९) । **अग्निं पर्येतीत्यर्थः ।** एतच्च **परिणयनं** लाजाहोमेषु चतुर्षु पुरा समाचारादित्यष्टावक्रः । तेषां वृत्तं परिणयेत्सम्यग्राष्ट्रेषु तच्चरैः (मनु० ७।१२२) । **परिणयेत् परिचिनुयात् ।** प्रदक्षिणं तौ प्रगृहीतपाणी परिणाययामास स वेदपारगः (भा० आदि० १९८।१२)। **परिणाययामास विवाहं कारयामास ।** परिणीतोस्मि हरिभिर्बलमध्ये अमर्षणैः (रा० ६।३०।६)। **परिणीतो भ्रमितः । रावणं प्रति तच्चरस्य शार्दूलस्योक्तिः ।** अथ स राजा किमारम्भः सम्प्रति । तेन राज्ञा क्रतुरश्वमेधः प्रक्रान्तः । वासन्ती—हा धिक् परिणीतमपि (उ० रा० च०) । **परिणीतं कृतं दारकर्म, दारपरिग्रहोपि कृतः किमित्याह ।** ये चैव मां प्रशंसन्ति ये च निन्दन्ति मानवाः । सर्वान् सुपरिणीतेन कर्मणा तोषयाम्यहम् (भा० वन० १३७३६) ।। **सुपरिणीतेन सुविहितेन ।** परिणीय च सर्वत्र नीतोऽहं रामसंसदि (रा० ६।३०।६) । **परिणीय भ्रमयित्वा ।** तौ दम्पती त्रिः परिणीय वह्निम् (कु० ७।८०) । **परिणीय परितो नीत्वा प्रादक्षिण्येन नीत्वा, परिक्रमय्य । पुरोधाः कर्ता ।** वरयित्वा यथा-न्यायं मन्त्रवत् परिणीय च (भा० आदि० १५७।३२) । **परिणीय उदुह्य ।** तत्राहं दुर्बलाबन्धौ वृद्धावपरिणायकौ (रा० २।६४।४) । **अपरिणायकौ संचारयितृपुषरहितौ ।** परिणेता मतीनाम् (ऋ० ९।१०३।४) । **परिणेता परितो नेता (सोमः) ।**

**—नु (णु स्तवने) ।** पृथयेत्थं कलपदैः परिणुताखिलोदयः । मन्दं जहास वैकुण्ठः··· (भा० पु० १।८।४४) । **परिणुतोऽभिष्टुतः ।**

**—नृत् (नृती गात्रविक्षेपे) ।** ये शालाः परिनृत्यन्ति सायं गर्दभनादिनः (अथर्व० ८।६।१०) । **परिनृत्यन्ति परितो नृत्यन्ति । उपसर्गवशान्नृतिरिह सकर्मकः ।**

**—पच् (डुपचष् पाके) ।** पूर्वजन्मकृतं कर्म कालेन परिपच्यते (हरि० २।३२।३५) । **परिपच्यते फलति, फलं प्रसूयते ।** परिपाकपिशङ्गलतारजसा रोधश्चकास्ति कपिशं गलता (शिशु० ४।४८) । **कात्स्न्र्येन पाकः परिपाकः ।** प्रपन्नानां मूर्त्तः सुकृतपरिपाको जनिमताम् (महावीर० ४।३१) । **परिपाको विपाकः फलम् ।** वीक्ष्य तस्य विनये परिपाकं पाकशासनपदं स्पृशतोपि (नै० ५।२०) । **परिपाकः पर्याप्तिः प्रकर्षपर्यन्तः ।**

**—पठ् (पठ व्यक्तायां वाचि) ।** समामनन्ति परिपठन्ति (आप० श्रौ० १।१।२।६ इत्यत्र धूर्तस्वामिभाष्यम्) । सर्पसत्रमिति ख्यातं पुराणे परिपठ्यते

(भा० आदि० ५१।६)। **परिपठ्यते सत्रेषु मध्ये पठ्यतेऽनुक्रम्यते।** अस्य लोकस्य सर्वस्य यः प्रभुः परिपठ्यते (भा० वन० १४१९२)। **परिपठ्यते सर्वत्र कीर्त्यते।** न धर्मः परिपाठेन शक्यो भारत वेदितुम् (भा० शां० २६०। ३)। **परिपाठ आम्नायः।**

**—पण् (पण व्यवहारे)। नीवी परिपणो मूलधनम् (अमरः)। परिपणन्तेऽनेनेति व्युत्पत्तेः।**

**—पत् (पत्लृ गतौ)।** विन्दूत्क्षेपान् पिपासुः परिपतति शिखी भ्रान्तिमद् वारियन्त्रम् (माल० २।१२)। **परिपतति परित उद्भ्राम्यति।** श्रुत्वा च कस्यचिदातुर्यमभितः परिपतन्ति (चरक० सूत्र० २९।९)। **अभितः परिपतन्ति पार्श्वं यान्ति।** परिपेतुः पतन्तं तं पुरुषाः परिचारकाः (रा० गो० २।८४।६)। **उक्तोऽर्थः।** हयाः परिपतन्ति स्म शतशोऽथ सहस्रशः (भा० शल्य० २३।७३)। **परितो दिक्षु विदिक्षु पतन्तीत्यर्थः।** इति राष्ट्रे परिपतन् बहुभिः पुरुषैः सह (भा० शां० ८२।६)। **परिपतन् परिभ्राम्यन्।** स कदाचित् परिपतन् श्वपचानां निवेशनम्।...आससाद वने क्वचित्। (भा० शां० १४१।२८)॥ क्रोधान्धे च वृकोदरे परिपतत्याजौ कुतः संशयः (वेणी० ६।१२)। **उक्तोऽर्थः।** परिपतये त्वा गृह्णामि (तै० सं० १।२।१०)। **परितः सर्वतः पततीति परिपतिर्मनः।** मनो वै परिपतिः (तै० सं० ६।२।२।३)।

**—पद् (पद गतौ)।** वेत्था हि निर्ऋतीनां वज्रहस्त परि वृजम्। अहरहः शुन्ध्युः परिपदामिव (ऋ० ८।२४।२४)। रेफोष्मणोरुभयोर्मकारोऽनुस्वारं तु तत् परिपन्नमाहुः (ऋक् प्राति० ४।५,७)। कालक्रमादुपादानं परिपाद्य (ऋक्० प्रा० २।१ इत्यत्रोवटः)। **प्रतिपाद्येत्यर्थः।**

**—पा (पा पाने)।** तान्वै त्वमुभयतः परि पिबेति तान् प्रजापतिरुभयतः पर्यपिबत् (ऐ० ब्रा० ३।३०)। **ऋभूणामुभयोः पार्श्वयोः स्थित्वा पूर्वं पश्चाच्च पिबेत्यर्थः।** रक्षांसि नूनं परिपीतवन्ति विभिद्य शून्ये रुधिराशनानि (रा० ३।६३।१०)। **साकल्येन पीतवन्तीत्यर्थः।** मत्तद्विरेफपरिपीतमधुप्रसेकम् (कोविदारम्) (ऋतु० ३।६)। **उक्तोऽर्थः।**

**—पा (पा रक्षणे)।** सा मा सत्योक्तिः परि पातु विश्वतः (ऋ० १०। ३७।२)। **परिपातु त्रायताम्। परिशब्दार्थो विश्वत इत्यनेनैवोक्त इति परिर्नातीवोपकरोति धात्वर्थम्।** नदस्य नादे परि पातु मे मनः (ऋ० १०।११।

२) । उभे रोदसी परि पासतो नः (ऋ० ७।३४।२३) । पासत इति लेटि प्रथमपुरुषद्विवचने रूपम् । स नो ऽयं दर्भः परि पातु विश्वतः (अथर्व० १९। ३२।१०) । **आसूदाहृतिषु परिशब्दो नार्थान्तरमाह । परिपाणं** पुरुषाणाम् (अथर्व० ४।९।२) । **परिपाणं परिरक्षणसाधनम् ।** पथस्पथः परिपतिं वचस्या (ऋ० ६।४९।८) । **परिपतिमधिपतिम् ।**

**—पाल्** (**पा+लुगागमः**) । अब्राह्मणस्य प्रनष्टस्वामिकं रिक्थं संवत्सरं परिपाल्य राजा हरेत् (बौ० ध० १।१०।१८।१६) । **परिपाल्य रक्षित्वा निधाप्य ।**

**—पिष्** (**पिष्लृ संचूर्णने**) । (हयाः) अन्योन्यपरिपिष्टाश्च समासाद्य परस्परम् (भा० शल्य० २३।४९) । **निगदव्याख्यातम् ।**

**—पीड्** (**पीड अवगाहने**) । अकामां कामयानस्य शरीरं परिपीड्यते (रा० ५।२४।३७) । **सातिशयं पीड्यते परितप्यते ।** बाहुभ्यां परिपीडितः । (हितोप०) । **दृढं परिश्लिष्टः ।**

**—पुष्** (**पुष पुष्टौ**) । बीजाङ्कुरैः सूक्ष्मः परिपुष्टो ऽभिरक्षितः । **परिपुष्टः संवर्धितः ।**

**—पू** (**पूङ् पवने, पूञ् पवने**) । तुभ्यायं सोमः परिपूतो अद्रिभिः (ऋ० १।१३५।२) । **परिपूतः सुतरां पूतः ।**

**—पूर्** (**पूरी आप्यायने**) । सर्वमलज्जाकरमिह यद्यत् कुर्वन्ति परिपूर्णाः (पञ्चत० ५।१०) । **परिपूर्णा अत्यन्तं समर्थाः ।**

**—पॄ** (**पॄ पालनपूरणयोः**) । ते नः कृतादकृतादेनसस्पर्यद्या देवासः पिपृता स्वस्तये (ऋ० १०।६३।८) । **परिपिपृत परितो रक्षत ।सांहितिको दीर्घः ।**

**—प्रच्छ्** (**प्रच्छ ज्ञीप्सायाम्**) । व्यासमेकाग्रमासीनं पर्यपृच्छन्मुनीश्वराः (बृ० परा० सं० १।२) । **पर्यपृच्छन् पर्यायेणापृच्छन् ।** यदा हि बहवो वृद्धा गुणवन्तो बहुश्रुताः । परिप्रक्ष्यन्ति काकुत्स्थं वक्ष्यामि किमहं तदा(रा० २।१२।६६)।। **उक्तोऽर्थः ।** कुशलं परिपृच्छन्तं कथं शक्ष्ये निरीक्षितुम् (रा० ३।६२।१४) । **परिपृच्छन्तं पर्यायेण पृच्छन्तम्** (जनकम्) । **रामस्योक्तिरेषा सीतापहारे सति ।** मार्कण्डेयेन कथितं भीष्माय परिपृच्छते (हरि० १।१६।६) । तद्विद्धि प्रणिपातेन परिप्रश्नेन सेवया (गीता ४।३४) ।

**—प्री (प्रीङ् प्रीतौ)** । ताभ्यः सर्वाः कलाः प्रादात् परिप्रीता सरस्वती (स्कन्द पु० का० ४।६७।४२) । **परिप्रीता ऽत्यन्तं प्रसन्ना ।**

**—प्लु (प्लुङ् तरणप्लवनयोः)** । यदि स्नायाद् दण्ड इवाप्सु परिप्लवेत् (लौ० गृ० सू० १।२४) । **परिप्लवेत् परिप्लवेत तरेत् । परिद्योतकः ।** देवचक्रे यजमानस्य पाप्मानं तृंहती परिप्लवेते (श० ब्रा० १२।२।२।२) । **परिप्लवेते प्रवर्तेते ।** संवत्सरस्याहोरात्राणि सन्ततान्यप्यवच्छिन्नानि परिप्लवन्ते (श० ब्रा० १।३।५।१६) । **परिप्लवन्तेऽतियान्ति, अनुक्रामन्ति ।** यद्युक्तयोरयोगक्षेमः प्रजा विन्देत् ताः प्रजाः परिप्लवेरन् (ऐ० ब्रा० १।१४) । **युक्तोरनडुहोः ।** मासः परिप्लवमानः संवत्सरं करोति (शा० ब्रा० ११।२।५।४) । **परिप्लवमानः सङ्क्रामन् चक्रवत् परिवर्तमानः ।** अहोरात्रे परिप्लवमाने संवत्सरं कुरुतः (श० ब्रा० ३।२।२।४) । **उक्तोऽर्थः ।** राज्ञां हि चित्तानि परिप्लुतानि सान्त्वं दत्त्वा मुसलैर्घातयन्ति (भा० सभा० ६४।१२) । **परिप्लुतानि चञ्चलानि ।** बाष्पशोकपरिप्लुतः (रा० ३।२।२२) । **बाष्पशोकाभ्यां परिप्लुतो व्याप्तः ।** पारिप्लवशतैर्जुष्टा बर्हिक्रौञ्चविनादिता (नदी) (रा० ४।२७।२३) । **पारिप्लवा जलपक्षिणः । केवलस्तु प्लवः कारण्डवो भवति ।** पारिप्लवगताश्चापि देवतास्तत्र विष्ठिताः (रा० १।४३।१६)। **पारिप्लवगताः सम्भ्रमं गताः, शिबिकादियानस्था वा । गोविन्दराजस्तु पारिप्लवं गता इति व्यस्तं पठति ।** परिप्लवांश्च विविधान् (सुश्रुत० उ० ७।४) । **परिप्लवा नक्षत्रादीनां गतयः ।** देवचक्रं वा एतत् परिप्लवं यत्संवत्सरः (शां० ब्रा० २०।१) । **परिप्लवं भ्राम्यत् ।** शीलमेतदसाधूनामनभ्रं पारिप्लवं यथा (भा० उ० ३६।४१) । **पारिप्लवं चञ्चलम् ।** परिप्लवेभ्यः स्वाहा (तै० सं० १।८।१३) । **परिप्लवाः परितः प्लवनशीलाः ।** आश्वास्य पाययित्वा च परिप्लाव्य च वाजिनः (भा० वि० ६७।१६) । **आप्लाव्य स्नपयित्वा ।**

**—बन्ध् (बन्ध बन्धने)** । तत्र तानि दृढैः पाशैः सुगाढं पर्यबन्धत (पर्यबध्नात्) (भा० वि० ५।३०) । **परितोऽबध्नादित्यर्थः । पाशबहुत्वात्परिः सार्थकः ।** त्रिपद्यो रक्षोभिः पर्यबध्यत (भा० अनु० १००।१४) । **पर्यबध्यत पर्यक्षिप्यत, परिगतोऽभूत् ।**

**—बाध् (बाधृ लोडने, लोडनं प्रतिघातः)** । परि माग्ने दुश्चरिताद् बाधस्वा मा सुचरिते भज (वा० सं० ४।२८) **परिबाधस्व परिहर, परिरक्ष । परिणा धात्वर्थबाधः ।** ओषधयो वा एतं प्रजायै परिबाधन्ते (तै० सं० २।१।५।३) । **परिबाधन्ते प्रतिबध्नन्ति ।**

—**बृंह् (बृहि वृद्धौ)**। विशो वै मरुतो विशेवैतत् क्षत्रं परिबृंहति (श० ब्रा० १४।१।३।२७)। **परिबृंहति बर्धते**। प्रभौ परिवृढः (पा० ७।२।२१)। **निगदव्याख्यातम्**। ब्रह्मदेयाग्रहारांश्च परिवर्हांश्च पार्थिवः।···पालयत्येव पाण्डवः (भा० आश्रम० १०।४१)। **परिबर्हं औद्वाहिकमुपायनम्**। निवेश्य गङ्गामनु तां महानदीं चमूं विधानैः परिबर्हशोभिनीम् (रा० २।८३।२६)। **परिबर्हो यात्रोपयुक्तपटवेश्माद्युपकरणजातम्। परिच्छदे नृपार्हेऽर्थे परिबर्ह इत्यमरः। नृपोपकरणं प्रोक्तं परिबर्हः परिच्छद इति हलायुधः।**

—**ब्रू (ब्रूञ् व्यक्तायां वाचि)**। ऋत्विजः पर्य्राहुः (तै० सं० २।३।११।४)। **परित आसीना आहुरित्यर्थः**। यं कामयेतामयाविनं जीवेदित्यग्नेरन्ते ब्राह्मणाय प्रोच्याप. परिब्रूयाद् एतद्वै भेषजम् (काठक० २७।४)। **परिब्रूयात् अधिकृत्य ब्रूयात्**। यस्मै परिब्रवीमि त्वा (अथर्व० १९।३९।२)। **मन्त्रत्वेन तव नामान्युच्चारयामीत्यर्थः**। एतेन ह स्म वा अङ्गिरसः सर्वं सदः पर्य्याहुः··· तेभ्य एतेन सर्वं सदः परिब्रूयात् (गो० ब्रा० उ० २।१६)। **परिब्रूयात् सम्बोधयेत्**। ब्रह्मण इतर ऋत्विजो हस्तमन्वारभ्य यजमानं पर्य्राहुः पवमानेन त्वा स्तोमेनेति (सत्या० श्रौ० २२।५।६)। **पर्याहुः=अभिमन्त्रयन्ते**। परि च वक्षि शं च वक्षि (काण्व सं० ६।४।।४)। ब्राह्मणेन पर्युक्तासि कण्वेन नार्षदेन (अथर्व० ४।१९।२)। **परितो विनियुक्तासीत्यर्थः। इदमोषधिमुद्दिश्योच्यते।**

—**भाष् (भाष व्यक्तायां वाचि)**। असौ मां पाणिना स्पृष्ट्वा पुत्रस्ते पर्यभाषत (भा० शल्य० २९।४९)। **अवोचतेत्येवार्थः। परिर्विशेषकृन्न।** कथमिव परिभाषे भर्तुरर्थे विपन्नम् (प्रतिज्ञा० ४।१३)। **परिभाषे गर्हे निन्दामि**। सर्वोपायैर्यदा नास्ति मृत्योरन्या प्रतिक्रिया। धृतिमालम्ब्य यत्नेन स्वचित्तं परिभाष्यताम् (तन्त्रा० २।१४)॥ **परिभाष्यतामुपसान्त्व्यताम्, तोष्यताम् इत्यर्थो भाति**। तर्जनीतर्जितः पित्रा···तातेन परिभाषितः। मा स्म तात पुनर् भ्रातॄन् कोपयेः··· (बृ० श्लो० सं० ६।२१-२२)॥ **परिभाषित आदिष्टः, उपदिष्टः**। भार्या पुत्रश्च शिष्याश्च परिभाष्य त्याज्याः (व० धर्म० १२।४६)। **सनिन्दमुपालभ्येत्यर्थः**। मृषावादो मृषादानं विकल्पः परिभाषणम् (भा० आश्व० ३७।६)। **परिभाषणं सधिक्कारं भाषणम्। यः सनिन्द उपालम्भस्तत्र स्यात् परिभाषणमित्यमरः**। न खलु महाराज परिभाषामात्रसाध्योऽस्मिन्नर्थे विश्वन्तरः (अवदा० जा० ९)। **परिभाषा धिक्कारवचनम्**। परिभाषां च मे श्रुत्वा को नु दद्यात्प्रतिश्रयम् (भा० अनु० १५९।१७)। **परिभाषाऽभिसन्धिः**। यत्र तु वृद्धयर्थं एवाध्युपयोग इति परि-

भाषा (याज्ञ० २।६४ मिताक्षरायाम्)। परिभाषा **परस्परमतं, संवित्**। ग्राम्य-वैदग्ध्यया परिभाषया सभाजयामास (भा० पु० ५।२।१७)। **इह परिभाषा वागित्यनर्थान्तरम्। अनियमे नियमकारिणी परिभाषेति वैयाकरणाः। सर्वतो व्याप्तां भाषां परिभाषां प्रचक्षत इति च तल्लक्षणं ब्रुवते।** परितः प्रमिता-क्षरापि सर्वं विषयं प्राप्तवती गता प्रतिष्ठाम्। न खलु प्रतिहन्यते कदाचित् परिभाषेव गरीयसी यदाज्ञा (शिशु० १६।८०)॥ इहान्ये वैयाकरणाः कालो-पसर्जनयोः परिभाषां कुर्वन्ति (कालोपसर्जने च तुल्यम् १।२।५७ इत्यत्र काशिका)। **परिभाषा लक्षणम्।** भक्तं तैलं च लप्स्यामहे परिभाषाश्च न नो भविष्यन्ति (हेतुमति चेति सूत्रे भाष्ये)। **परिभाषा निन्दा।** आपद्गतोऽथवा वृद्धा गर्भिणी बाल एव वा। परिभाषणमर्हन्ति तच्च शोध्यमिति स्थितिः (मनु० ९।२८३, विष्णुधर्मोत्तरे (२।७२।१६१) चापि)॥ **सनिन्द उपालम्भः परिभाषणमिति पुरस्तादुक्तम्। तच्छब्देन पूर्वश्लोकगतममेध्यं परामृश्यते।**

—भुज् (भुज पालनाभ्यवहारयोः)। अपि स्वित्पर्यभुङ्क्थास्त्वं संभो-ज्यान् वृद्धबालकान् (भा० पु० १।१४।४३)। **पर्यभुङ्क्थाः परित्यज्याभुङ्क्थाः पर्यशीरित्यर्थः। बालवृद्धेष्वनशितवत्सु इति तात्पर्यम्।** परोच्छिष्टं च यद् भुक्तं परिभुक्तं च यद्भवेत् (भा० अनु० २३।८)। **परिभुक्तं देवतातिथिपितृ-बालादीन् परिवर्ज्य यद् भुक्तं तत्परिभुक्तमुच्यते।** जीर्णं च परिभुक्तं च यातयाममिदं द्वयमित्यमरः। **परिभुक्तं भुक्तोच्छिष्टम्। परिवर्जने।** नहि ते राजपुत्रं तं चीरकृष्णाजिनाम्बरम्। परिभोक्तुं व्यवस्यन्ति पौरा वै धर्मवत्सलाः (रा० ६।१२५।३४-३५)॥ **परिभोक्तुं परित्यज्य भोक्तुम्। राजपुत्रात्पूर्वमिति तात्पर्यार्थः।** परिभोक्ता कृमिर्भवति कीटो भवति मत्सरी (मनु० २।२०१)। **परिभोक्ताऽनुचितेन गुरुधनेनोपजीवक इति कूल्लूकः। केन प्रसिद्धार्थं परि-वर्जनपूर्वमशनं पर्यहासीन्मन्वर्थमुक्तावलीकार इति न जानीमः।** इन्द्रो वृत्राय वज्रमुदयच्छत्तं षोडशिभिर्भोगैः पर्यभुजत् (पञ्च० ब्रा० १३।५।२२)।

—भू (भू सत्तायाम्)। परि त्वा गिर्वणो गिर इमा भवन्तु (तै० सं० १।३।१)। **परिभवन्तु व्याप्नुवन्तु।** प्रजापते न त्वदेतान्यन्यो विश्वा जातानि परि ता बभूव (ऋ० १०।१२१।१०)। **परिबभूव परिगृह्य भवति, व्याप्नोति, व्यश्नुते।** केनेमां भूमिमौर्णोत् केन पर्यभवद् दिवम् (अथर्व० १०।२।१८)। **पर्यगृह्णात् पर्यवेष्टयत्।** अरान्नो नेमिः परि ता बभूव (ऋ० १।३२।१५)। **ताश्चर्षणीः। उक्तोऽर्थः।** इन्द्रासोमा परि वां भूतु विश्वत इयं मतिः (अथर्व० ८।४।६)। **परिगृह्णातु, विषयी करोतु।** परि द्यां सद्यो अपसो बभूवुः (ऋ०

४।३३।१) वातजूता ऋभवः कर्तारः । परिबभूवुः पर्युत्पेतुः, परिजगृहुः परिभ्रेमुः । तं त्वा मरुत्वती परि भुवद् वाणी सयावरी (ऋ० ७।३१।८) । परिभुवत् सहचरी भवतु । परिरिह सामीप्ये । यो जात एव प्रथमो मनस्वान् देवो देवान् क्रतुना पर्यभूषत् (ऋ० २।१२।१) । पर्यभूषत् लेटि रूपम् पर्यभवत् पर्यगृह्णात्, मुख्यत्वेनात्यक्रामदित्यर्थः । परि प्रजातः क्रत्वा बभूथ (ऋ० १।६९।२) । परिबभूथ अत्यक्रमीः, अत्यशयिष्ठाः । अन्यत्र दाशतेये (३।५१।८) जातं यत्त्वा परि देवा अभूषन्नित्युक्तम् । पर्यहं सजातान् भूयासम् (काठ० सं० १२।२) । उक्तोऽर्थः । यासां सोमः परि राज्यं बभूव (अथर्व० १२।३।३१) । शशास, अधिचक्रे, ईशाञ्चक्रे । अकीर्तिरतुला लोके ध्रुवं परिभविष्यति (रा० २।१३।१४)। परिभविष्यति सर्वतो भविष्यति, सर्वत्र प्रचरिष्यतीत्यर्थः। रामष्टीकाकृत्तु—अकीर्तिः स्त्रीजित इत्यकीर्तिर्जन्मसम्पादितां कीर्तिं परिभविष्यतीत्यर्थं इत्याह । नित्यं परिभवेच्छ्वश्रूम् (भा० अनु० ९३।३३) । परिभवेद् अवजानीयात् अधिक्षिपेत् । मृदुर्हि परिभूयते (रा० २।२१।११) । परिभूयतेऽवज्ञायतेऽवमन्यते तिरस्क्रियते । यस्य बुद्धिः परिभवेत्तमतीतन सान्त्वयेत् (भा० आदि० १४०।७४) । परिभवेत् (शोकेन) नश्येत् । विधर्मकाणि कुर्वन्ति तथा परिभवन्ति च (भा० द्रोण० १९५।११) । उक्तोऽर्थः । कुरून् परिभवेत् सर्वान् पञ्चालानपि भारत । पाण्डवेयांश्च सम्प्राप्तो मम क्लेशो ह्यरिन्दम (भा० वि० २०।१२) ।। परिभवेत् नाशयेत् । तेऽसुरा हेलयो हेलय इति कुर्वन्तः पराबभूवुः (महाभाष्ये १।१।१)। पराबभूवुर्नेशुः । स होता विश्वं परि भूत्वध्वरम् (ऋ० २।२।५) । परिभूतु परिभवतु परिभावयेत् चिन्तयेत् अवेक्षेत, प्रणयेत्, । न त्वां परिभवन्ब्रह्मन् प्रहसामि गुरुर्भवान् (भा० अनु० १०।५६) । परिभवन् अवजानन् । तामेतां परिभावयन्त्वभिनयैर्विन्यस्तरूपां बुधाः (उत्तर० ७।२०) । परिभावयन्तु चिन्तयन्तु । सानन्दं श्रुतमर्थं परिभावयति (प्र० च०) । उक्तोर्थः । तेभ्यः परान्नः परिभावयस्व (तै० १०।४७) । परिभावयस्व जानीहि । येनेदं विश्वं परिभूतं यदस्ति (तै० ब्रा० ३।१२।३।१) । परिभूतं व्याप्तम् । स लोकपरिभूतेन वेषेणास्ते धनञ्जयः (भा० वि० १९।१६) । लोकपरिभूतो लोकगर्हितः, लोकोपहसितः । परिभूताभिरद्भिस्तु कार्यं कुर्वीत नित्यशः (मनु० ६।४५ इत्यतोऽनन्तरं क्षेपकः) । परैरसेविताभिरित्यर्थः प्रतिभाति । भावयोगपरिभावितहृत्सरोजम् (भा० पु० ३।९।११) । परिभावितं पावितं पूतम् । अत्र भुवोऽवकल्कन इति चुरादिर्धातुः । संकर्षणस्य मत्तोक्तां भारतीं परिभूय (हरि० २।४६।३१) । परिभूय अवज्ञाय अगणयित्वा । लग्नद्विरेकं परिभूय पद्मं समेघलेखं शशिनश्च बिम्बम् । तदाननश्रीरलकैः प्रसिद्धैश् चिच्छेद

**सादृश्यकथाप्रसङ्गम्** (कु० ७।१६) । **परिभूय तिरस्कृत्य, अभिभूय अतिशय्य ।** मुनित्रयं नमस्कृत्य तदुक्तीः परिभाव्य च (कौमुद्यां दीक्षितः) । **परिभाव्य चिन्तयित्वा, विमृश्य ।** परिभाव्याद्भुतं तत् (राज० ४।२५२) । **उक्तोऽर्थः ।** रसेन तेषां परिभाव्य मुद्गान् (सुश्रुत० १। १५६।७) । **परिभाव्य अभिषिच्य ।** **अत्रापि भुवोऽवकल्कन** इति चुरादिर्धातुः । **अवकल्कनं मिश्रीकरणम् ।** पांसु-भस्मकरीषाणां यथा वै राशयश्चिताः । सहसा वारिणा सिक्ता न यान्ति परिभावनम् (भा० शां० १६५।१७-१८) ॥ **परिभावनं मूर्त्याद्याकारेण कल्पनम् ।** विश्वा रूपाणि परिभूर्जजान (अथर्व० ७।८४।४) । **परिभूः परिग्राहको व्यापकः ।** कविर्मनीषी परिभूः स्वयम्भूः (वा० सं० ४०।८) । **उक्तोऽर्थः ।**

**—मन्** (**मन ज्ञाने, मनु अवबोधने** । न हि वश्चरमं चन वसिष्ठः परिमंसते (ऋ० ७।५९।३) । **न हि परिमंसते वर्जयित्वा न स्तौति ।**

**—मा** (**मा माने माङ् माने**) । परिमाति मुष्टिना । उपसर्गवशात्स-कर्मकः । परि यो रश्मिना दिवोऽन्तान्ममे पृथिव्याः (ऋ० ८।२५।१८) । **परिमाणं चकार ।**

**—मार्ग्** (**मार्ग अन्वेषणे**) । न शक्यं प्रमदा नष्टा मृगीषु परिमार्गितुम् (रा० ५।११।४४) । **परिमार्गितुम् इतस्ततो विचेतुम् ।**

**—मुच्** (**मुच्लृ मोक्षणे**) । मुञ्च नः पर्यंहसः (अथर्व० १९।४४।८) । **परिमुञ्च निर्मुञ्च विमुञ्च । परिः सर्वतोभावे ।**

**—मृष्** (**मुष स्तेये**) । सोममाह्रियमाणं गन्धर्वो विश्वावसुः पर्यमुष्णात् (तै० सं० ६।१।६।४३) । **प्रतिरोधको भूत्वाऽऽनयनविघ्नमाचरदित्यर्थ इति भट्टभास्करः ।**

**—मृ** (**मृङ् प्राणपरित्यागे**) । तं ह पञ्च राजानः परिमम्रुः (ऐ० ब्रा० ८।२८) । **परितः सर्वदिक्षु वर्तमाना द्विषन्तो राजानो मम्रुरित्यर्थः ।** चिरात् क्षत्रस्यास्तु प्रलय इव घोरः परिमरः (महावीर० ३।४१) **परिमरो व्यापी विनाशः, अभिव्यापकं कदनम् ।** तद् ब्रह्मणः परिमर इत्युपासीत (तै० उ० ३।१०।४) । **परितो म्रियन्तेऽनेनेति परिमरो वायुः ।**

**—मृज्** (**मृजू शुद्धौ, मृजू शौचालङ्कारयोः**) । कृपणानाथवृद्धानां यदाश्रु परिमार्जति (भा० शां० ९१।३८) । **परिमार्जति परिमार्ष्टि प्रोञ्छति ।**

कथमेकपदे सर्वमौचित्यं परिमार्जतु (राज० ३।३१३)। **परिमार्जतु परिलुम्पतु। चुरादिराधृषीयोऽत्र धातुः।** जिह्वामुद्धर सर्वेषां परिमृज्यानुमृज्य च (भा० शां० ८१।१९)। **परिमृज्य परिशोध्य दोषानपनीय।** (वाच्यं) त्यागेन पत्न्याः परिमार्ष्टुमैच्छत् (रघु० १४।३५)। **परिमार्ष्टुं परिमार्जितुमपनेतुम्।** प्रियकरपरिमार्गात् (शिशु० ७।७५)। **परिमार्गः स्पर्शः।** तुन्दशोकयोः परिमृजापनुदोः (पा० ३।२।५)। **तुन्दपरिमृजोऽलसः। तुन्दं जठरं परिमार्ष्टि स्पृशति इति तद्व्युत्पत्तिः।**

**—मृद्** (**मृद क्षोदे**)। अश्रूणि परिमृद्नन्तौ रक्ताक्षौ दीन-भाषिणौ (रा० २।७७।२६)। **परिमृद्नन्तौ प्रमार्जन्तौ प्रमृजन्तौ।**

**—मृश्** (**मृश आमर्शने आमर्शनं स्पर्शः**)। अन्ये जायां परिमृशन्त्यस्य (ऋ० १०।३४।४)। **वस्त्रकेशाद्याकर्षणेन संस्पृशन्तीति सायणः।** सेदिरुपतिष्ठन्ती मिथोयोधः परामृष्टा (अथर्व० १२।५।२४)। **परामृष्टा ऽऽक्रान्ताऽवस्कन्ना।** शिखरशतैः परिमृष्ट देवलोकम् (भट्टि० १०।४५)। **परिमृष्ट उल्लिखितः।** उपमां ययावरुणदीधितिभिः परिमृष्टमूर्धनि तमालतरौ (कि० ६।२३)। **परिमृष्टमूर्धनि व्याप्तशिरसि।** आत्मनः परामर्शेन बुद्धिं बुद्ध्या विचारयेत् (भा० शां० १२०।१९)। **स्वस्यातीतानागतविचारेणेत्यर्थ इति नीलकण्ठः।**

**—मृष्** (**मृष तितिक्षायाम्**)। मघोने परिमृष्यन्तमारमन्तं परं स्मर (भट्टि० ८।५२)। **परिमृष्यन्तमसूयन्तम्।**

**—यज्** (**यज देवपूजासङ्गतिकरणदानेषु**)। यथा पूर्वेभ्यः···सहस्रसाः पर्यया वाजमिन्दो (ऋ० ९।८२।५)। **पर्ययाः=पर्ययजथाः। यागेनार्जितमदिथाः।** तद्धैक आहुर्धातारमेव सर्वासां पुरस्तादाज्येन परियजेत (ऐ० ब्रा० ३।४७)। **परियजेत परितो यजेत।** राज्ञा (=सोमेन) वपां परियजति (श० ब्रा० १३।२।११।३)। **अमुख्यामाहुतिं जुहोतीत्यर्थः।** परिवेदनी कन्या परिदायी दाता परियष्टा याजकः (याज्ञ० ३।२६५ मिताक्षरायां हारीतवचनम्)। **ज्येष्ठं परित्यज्य कनिष्ठस्य याजकः परियष्टा भवति।** पर्याहित-परीष्ट-परिवित्ति-परिविन्न-परिविविदानेषु (आप०ध० २।५।१२।२२)। **ज्येष्ठेऽकृतसोमयागे कृतसोमयागः कनिष्ठः परियष्टा ज्येष्ठः परीष्टः।**

**—यत्** (**यती प्रयत्ने**)। तदस्य प्रासहादित्सन्त, तं पर्ययतन्त (पञ्च० ब्रा० ७।२।६)। **तं पर्ययतन्त परितोऽयुध्यन्तेति सायणः। प्रासहा प्रसहेन**

**बलात्कारेणेति च सः ।** दाशराज्ञे परियत्ताय (सुदासे) विश्वतः (ऋ० ७।८३।८) । **परियत्ताय शत्रुभिः परिगताय परिक्षिप्ताय ।** वद्धो वा परियत्तो वेन्द्रं त्रातारमुपधावति (तै० सं० २।२।७।५) । **परियत्तः शृङ्खलामन्तरेण परितो भटैरवरुद्ध इति भट्टभास्करः ।** तान् समन्तमेवोदारान् परियत्तानुदपश्यन् (ऐ० ब्रा० २।३१) । **परियत्तान् अतिसन्नद्धान् इति षड्गुरुशिष्यः । अत्यन्तसन्निधानान् इति तु सायणः ।**

**—यम् (यम उपरमे) ।** अस्येदु त्वेषसा रन्त सिन्धवः परि यद् वज्रेण सीमयच्छत् (ऋ० १।६१।११, अथर्व० २०।३५।११) । **पर्ययच्छत् लक्ष्यं चकार, विव्याधेति संस्कृत-शार्मण्य-कोषः । सिन्धवो रन्त रमन्त इत्युक्तेरयमेवार्थः सङ्गतो भाति । परितो नियमितवानिति तु सायणः । वज्रेण नियमनमिति नातीवार्थवद्वचः । हिंसनं दारणं वा वज्रकर्म प्रसिद्धं न नियमनम् ।**

**—या (या प्रापणे, प्रापणमिह गतिः) ।** याभिः (ऊतिभिः) सूर्यं परियाथः परावति (ऋ० १।११२।१३) । **परियाथः परिक्रामथः ।** परि ह त्यद् वर्तिर्याथो रिपो यत् परो नान्तरस्तुतुर्यात् (ऋ० ६।६३।२) । **परियाथः परितो याथः, अवेक्षेथे, पालयेथे ।** यया वज्रिवः परियास्यंहः (ऋ० ६।३७।४) । **परियासि परिवर्जयसि, परिहरसि ।** परि णो याह्यस्मयु विश्वा वसून्योजसा (ऋ० ९।६४।१८) । **परियाहि प्रापय ।** धृतं वसानः परियासि निर्णिजम् (ऋ० ९।८२।२) । **परियासि प्राप्नोषि । निर्णिजं शुभ्रं वासः प्रसाधनं वा ।** पुरोहित्त परियाप्य सर्वं (भा० आदि० १९४।३) । **परियाप्य प्रस्थाप्य ।** यथा महापथः पर्याण एवं पृष्ठयः षळहः स्वर्गस्य लोकस्य (ऐ० ब्रा० ४।१७) । **पर्याणः परितोऽयनस्य गमनस्य साधनभूत इति सायणः ।**

**—यु (यु मिश्रणामिश्रणयोः) ।** अयमपीतरो योनिरेतस्मादेव, परियुतो भवति (नि० १।२।८) । **परियुतः परिवेष्टितः । परीतो जरायुणेति भावः ।**

**—युज् (युजिर् योगे) ।** योगे चेति वाच्यम् (पा० ८।२।२२ इत्यत्र वार्तिकम्) । **तत्र वृत्तौ परियोगः पलियोग इत्युदाहरणे स्थिते । चोद्यमित्यर्थ इति प्रक्रियासर्वस्वम् ।**

**—रक्ष् (रक्ष पालने) ।** जिघत्सुभ्य इमं मे परिरक्षत (अथर्व० ८।२।२०) । **परिरक्षत परितो रक्षत ।** शक्यस्तेनानुमानेन परोपि परिरक्षितुम्

(भा० वि०) । परिरक्षितुमहिंसितुम् । न ह्येष राघवस्यार्थे जीवितं परिरक्षति (रा० ६।४।२७) । न जीवितं परिरक्षति प्राणव्ययं न गणयति । जीवितशेषं नाद्रियते । शिष्टं मांसं······काकेभ्यः. पर्यरक्षत (रा० २।६६।३८) । स्पष्टोऽर्थः ।

—रभ् (रभ राभस्ये) । बाहुभ्यां परिरभ्यैनं प्राबोधयदनिन्दिता (भा० वि० १७।१३) । परिरभ्य उपगुह्य, परिश्लिष्य । इत्युक्तवन्तं परिरभ्य दोर्भ्याम् (कि० ११।८०) । परिरभ्य वक्षसा (कु० ५।३) उक्तोऽर्थः । नागभोगेन महता परिरभ्य महीमिमाम् (भा० वन०) । ग्रामो ग्रामस्य सामन्तः···। गृहं गृहस्य निर्दिष्टं समन्तात् परिरभ्य हि (याज्ञ० २।१५०—५१ मिताक्षरायां कात्यायनवचनम्) । परिरभ्य परिवेष्टच ।

—राज् (राजृ दीप्तौ) । वृताः सुहृद्भिः परिरेजुरोजसा । यथा सदस्यै ऋर्षिभिस्त्रयोऽग्नयः (रा० २।११२।३३) ॥ परिरेजुः परिरराजुः शुशुभिरे चकासामासुः । प्रभया परिराजन्तम् (मृगम्) (रा० ३।४६।३) । परिराजन्तं दीप्यमानम् ।

—रुज् (रुजो भङ्गे) । रुजन्परि रुजन् (अथर्व० १६।१।२) । स्पष्टोर्थः ।

—रुध् (रुधिर् आवरणे) । अस्मत्पोतं पर्यरुत्सत (दशकु० षष्ठ उच्छ्वासे) । पर्यरुत्सत परितोऽरुन्धन् ।

—लम्ब् (अबि रबि लबि शब्दे, लबि अवस्रंसने च) । सप्तेमे वसवः प्राप्ताः स एकः परिलम्बते (हरि० ) । सकृत् कृतापराधस्य तत्रैव परिलम्बतः (भा० शां० १३९।२५) । परिलम्बतोऽवतिष्ठमानस्य । विश्वासं कुर्वत इति नीलकण्ठः ।

—लिख् (लिख अक्षरविन्यासे) । स्फ्येन पदं त्रिः परिलिखति (का० श्रौ० ७।६।१७) । परितो रेखां करोतीत्यर्थः । परिलिखितं रक्षः परिलिखिता अरातयः (तै० सं० १।२।५।१) । परिलिखितं रेखाचक्रेण परिवेष्टितम् । नाशितमिति त्वार्थिकोऽर्थः ।

—लुड् (लुड अवगाहने, अवगाहनं प्रतिघातः) । मन्दाराणामुदाराणां वनानि परिलोडयन् (भा० सभा० १०।७) । परिलोडयन् क्षुभ्नन्, आकुलानि कुर्वन् ।

—लुप् (लुप्लृ छेदने)। दीपिकालोकपरिलुप्यमानतिमिरभार-(दशकु०)। **परिलुप्यमानः संह्रियमाणः।**

—वञ्च् (वञ्चु गतौ)। नमो वञ्चते परिवञ्चते (वा० सं० १६।२१)। **परिवञ्चते सर्वतोगन्त्रे त्सरते च्छद्मना गच्छते।**

—वद् (वद व्यक्तायां वाचि)। गां वाव तौ तत् पर्यवदतां या यज्ञे दीयते (तै० सं० १।७।२।२) **इडां गोरूपेणावर्णयताम्, तत्र स्वाभिप्रायं प्राकाशयताम्।** आदित्यमेव ते परिवदन्ति (अथर्व० १०।८।१७)। **आदित्यमेवोद्दिश्य भाषन्ते इत्यर्थः।** देवा वशां पर्यवदन्न नोऽदादिति हीडिताः (अथर्व० १२।४।४६)। यो ब्राह्मणान् परिवदेद् विनाशं चापि रोचयेत् (भा० शां० १३५।१८)। **परिवदेत् निन्देत्, परुषं ब्रूयात्।** तदस्ति पर्युदितमिव (श० ब्रा० ३।१।३।२) **पर्युदितमभ्युक्तम् आम्नातम्।** अनुह्वं परिह्वं परिवादं परिक्षवम् (अथर्व० १६।८।४)। **परुषभाषणं परिवादः। अथवा परिवर्जने। वर्जिते प्रदेशे भाषणमिति सायणः।** माभूत् परीवादनवावतारः (रघु० ५।२४)। **परिवादः प्रसृता प्रथिता वा लोकनिन्दा।** परिवादोऽपवादो वा राघवे नोपपद्यते (रा०　　　　　)। **परिवादोऽकार्यकरणनिमित्तं समूलमयशः। अपवादोऽसूयाकल्पितममूलमयशः।** गुरोर्यत्र परीवादो निन्दा वापि प्रवर्तते (मनु० २।२००)। **विद्यमानदोषस्याभिधानं परीवाद इति कुल्लूकः।** परीवादं त्यजेद्विप्रोऽसवर्णेषु च सूचनम् (कृत्यकल्पतरौ द्वितीये सम्पुटे पृ० ३५ समुद्धृतं हारीतवचनम्)। **उक्तोऽर्थः।** देव, अहमेव मयि प्रथमं परिवादकरः (माल० १)। **परिवादोऽधिक्षेपोऽपभाषितम्।** तं प्रागसावविनयं परिवादमेत्य लोकेऽधुनापि विदिता परिवादिनीति (नै० ११।१२७)। **परिवादो वीणावादनसाधनविशेषः।** अतिहर्षपरीतत्वाद् वितन्त्रीः परिवादिनी (बृ० श्लो० सं० ५।८०)। **परिवादिनी वीणा। सा तु तन्त्रीभिः सप्तभिः परिवादिनीत्यमरः।**

—वन्द् (वदि अभिवादनस्तुत्योः)। परिवन्दे ऋग्भिः(ऋ० २।३५।१२)। **परितः स्तौमीत्यर्थः।**

—वप् (डुवप बीजसन्ताने)। पांसुभिः पर्युप्य (लाट्या० श्रौ० १०।१५।१६)। **पर्युप्य अवकीर्य।** धानाः करम्भः परिवापः पुरोडाशः पयस्या (तै० सं० ६।५।११।४२)। **परिवापो व्रीहिप्रभवा लाजाः।** भारती परिवापेण (तै० ब्रा० १।५।११।२)। **उक्तोऽर्थः। परिच्छदे परीवापः पर्युप्तौ सलिल-**

**स्थिताविस्यमरः। परिच्छदः परिवारः । पर्युप्तिः परित उप्तिः परितो बीजत्यागः।** सुप्रतिविहितयान-वाहन-पुरुषपरिवापः प्रतिष्ठेत (कौ० अ० १।१६।५) । **पुरुषपरिवापो भृत्यवर्गः, परिचारकव्रजः।** गृहपरिवापः (कौ० अ० ३।६।६) । **गृहोपकरणादि।** कुमारं पर्युप्तिनं स्नातमभ्यक्तशिरसम्··· (वा० गृ० ५।६) । **पर्युप्तिः परिवापो मुण्डनम्। साऽस्यास्तीति पर्युप्ती। व्रीह्यादित्वादिनिः ।**

**—वस्** (**वस निवासे, वस स्नेहच्छेदापहरणेषु चुरादिः**) । द्वादशरात्रं परिवसत्युखावदभ्रि बिभ्रत् (का० श्रौ० २२।१।२१) । **परिवसति तिष्ठति कालं क्षपयति ।** जापिनां होमिनां चैव ध्यायिनां तीर्थवासिनाम्। न परिवसन्ति पापानि···(व० धर्म० २६।१२) ॥ **न परिवसन्ति न चिरं तिष्ठन्ति ।** पूर्वेद्युरग्निं प्रणयेदित्येकं परोक्षान्तां परिवसेदित्यपरम् (भा० श्रौ० ७।४।५) । **परिवसेत् परि समापयेत् ।** अस्तमितेऽपां पूर्णं (कर्तं) परिवासयेत् (आश्व० गृ० २।८।६)। **परिवासयेत् ओदयात्तत्र वसेत् तिष्ठेत् ।** अच्छिन्नो रायः सुवीर इत्यग्रं परिवासयति (आप० श्रौ० ७।१।२।१०) । **परिवासयति छिनत्ति ।** तं परिवासयति (श० ब्रा० ३।६।४।१७) । **उक्तोऽर्थः ।** भर्ता राजकुले कार्यवशात्पर्युषितः (पञ्चत०)। **तत्र निशां स्थितः ।** यातयामं गतरसं पूति पर्युषितं च यत् (गीता० १७।१०) । **पर्युषितं रात्र्यन्तरितम् । कृतरात्रिपरिवासम् ।** आर्यः पर्युषितं तु नाभ्यवहरत्यन्धः क्षुधान्धोप्यसौ (वि० गुणा० १०१) । **उक्तोऽर्थः ।** न च पर्युषितं वाक्यं स्वैरेष्वपि कदाचन(नैषधो वक्ति) (भा० वन० ७३।१३)। **पर्युषितं प्रतिज्ञातकालातिलङ्घि ।** अपर्युषितप्रतिज्ञेच मारुतौ प्रनष्टे कौरवराजे (वेणी० ६) । **पर्युषिता रात्र्यन्तरिता । अहः-परिवासविधुर-प्रतिश्रवे इत्यर्थः ।** अपर्युषितपापास्ते नदीः सप्त पिबन्ति ये (भा० आदि० १७०।२१)। **अपर्युषितपापा निःशेषितपापाः ।** तयोरन्यतरः परिवासितः (सत्या० श्रौ० २४।२।६) । **परिवासितः छिन्नाग्रः ।** शुल्वात्प्रादेशे परिवास्य वेदपरिवासनानि निदधाति (आप० श्रौ० १।२।६।५) । **परिवास्य छित्वा । परिवासनानि वेदाग्राणि । वेदो दर्भमुष्टिः ।** इह तया सह पर्युषितम् (स्वप्न० १)। **पर्युषितमुषितम् । अनर्थकः परिः ।** लिङ्गं वा सवृषणं परिवास्याञ्जलावाधाय (बौ० ध० २।१।१।१४) । **परिवास्य छित्वा ।** न नागलोके न स्वर्गे न विमाने त्रिविष्टपे । परिवासः सुखस्तादृक् रसातलतले यथा (भा० उ० १०२।१५) । **परिवासो निवासः ।** गवां च परिवासेन भूमिः शुध्यति···(मनु० ५।१२४) । **परिवासोऽहोरात्रनिवासः ।** कालपरिवासः **कालात्ययः ।** अथवा तदङ्गपरिवासशीतलं मयि किञ्चिदर्पय (मालती० ६।४२) । **परिवासः सौरभम् ।**

—वह् (वह प्रापणे)। तुभ्यमग्ने पर्यवहन्त्सूर्यां वहतुना सह (ऋ० १०। ८५।३८)। **परिणीतां सूर्यां वरस्य गृहं प्रापयन्नित्यर्थः।** हतान् परिवहन्तश्च (भा० द्रोण० २०।४७)। **परिवहन्तो निर्हरन्तः।** नित्यं शस्त्रं परिवहन् क्रमेण स तपोधनः (रा० ३।६।२१)। **परिः सर्वतोभावे। सर्वत्र वहन्नित्यर्थः।** आपः परिवहन्तीः (तै० सं० ७।४।१४।१)। **परितः स्यन्दमाना इत्यर्थः।** यमस्य माता पर्युह्यमाना ननाश (ऋ० १०।१७।१)। **पितुर्गृहाद् वोढुर्गृहं प्रत्युह्यमानेत्यर्थः। पर्युह्यमाणा इति तु पाणिनीयाः।** शरीरे संस्कारं नृपतिसमदुःखं परिवहन् (स्वप्न० १।१४)। **अनर्थकः परिः।** उदर्के निष्फलामाशां परिवहन् (प्रतिमा० ३)। **इहापि तथा।** साम्ना पर्यूढा (कुम्भी) (अथर्व० ११।३। १५)। **(अङ्गारैः) वेष्टितेत्यर्थः।** स्वधया परिहिता श्रद्धया पर्यूढा दीक्षया गुप्ता (अथर्व० १२।५।२)। **परिहितपर्यूढौ पर्यायौ। परिहिता कृतपरिधिः। ब्रह्मगवीति विशेष्यम्।** प्रथमं (कौतूहलं) सपरिवाहमासीत् (शा० २)। **उत्सिच्यमानम्। परिवाहोऽभिष्यन्दः सम्प्लवः।** पूरोत्पीडे तडागस्य परीवाहः प्रतिक्रिया (उत्तर० ३।२९)। **परीवाहः पयः प्रणाल्या जलनिर्गमः।** उपार्जितानामर्थानां त्याग एव हि रक्षणम्। तटाकोदरसंस्थानां परिवाह इवाम्भसाम् (तन्त्रा० १।३)॥ **परिवाहो बहिर्निर्गमनम्।** अचिरेण तु कालेन परिवाहान्बहूदकान्। चक्रुर्बहुविधाकारान्··· (रा० २।८०।११)॥ **परिवाहाः कुल्याः।** आपः परिवाहिणी स्थ (काण्वसं० ११।३)।

—विद् (विद ज्ञाने)। यां त्वा जनो भूमिरिति प्रमन्दते निर्ऋतिं त्वाहं परिवेद विश्वतः (वा० सं० १२।६४)। **परिवेद सम्यग् वेद्मि। साधु जानामि।** विदितार्थस्तु वेदानां परिवेद प्रयोजनम् (भा० वन० २००।११३)। **परिवेद साकल्येन वेद।**

—विद् (विद्लृ लाभे)। नाग्नयः परिविन्दन्ति न वेदा न तपांसि च (अत्रिसं० श्लो० ११०)। (कृत्यकल्पतरौ द्वितीये सम्पुटे ११२ पृ० शातातपवचनमित्युद्धृतम्)। **न परिविन्दन्ति ज्येष्ठं परित्यज्य कनिष्ठं न प्राप्नुवन्तीत्यर्थः।** कुलटोन्मत्तचौरांश्च परिविन्दन्न दुष्यति (गोभि० स्मृ० १।७४)। **एतेष्वनूढेषु सत्सु भार्यामुपयच्छमानः।** यन्म आत्मनो मिन्दाऽभूत् पुनरग्निश्चक्षुरदात् इत्येताभ्यामभिनिर्मुक्ताभ्युदितपर्याहित-परीष्ट-परिवित्त० (आप० श्रौ० ९।३।१२।७०)। **यस्मिञ्ज्येष्ठे ऽनात्तांशे कनिष्ठोंऽशं गृह्णीयात्स ज्येष्ठः परिवित्तः। मिन्दा शरीरविकृतिः, दुर्भगत्वचिह्नम्।** येभिः पाशैः परिवित्तो निबद्धः (अथर्व० ६।११२।३)। **ज्येष्ठेऽकृतदारपरिग्रहे पूर्वं गृहीतदारः।**

**अग्रेदिधिषुरित्यर्थः । लोके तु स परिवेत्तृपदेनोच्यते ।** परिवित्तिः परिवेत्ता यया च परिविद्यते (मनु० ३।१७२) । दाराग्निहोत्र-संयोगं कुरुते योऽग्रजे स्थिते । परिवेत्ता स विज्ञेयः परिवित्तिस्तु पूर्वजः (मनु० ३।१७१) ।। **निगद-व्याख्यातम् ।** जात्यन्धबधिरे मूके न दोषः परिवेदने ( अत्रिसं० श्लो० १०५)। **ज्यायस एतान् परिवर्ज्य दारकर्मणि दोषो नेत्याह ।** ज्येष्ठे ऽनिविष्टे कनीयान्निविशमानः परिवेत्ता भवति परिवित्तिर्ज्येष्ठः परिवेदनी कन्या (याज्ञ० ३।२ ६५ मिताक्षरायां हारीतवचनम्) । **अभिव्यक्तायां चन्द्रिकायां किं दीपिका-पौनरुक्त्येन ।**

**—विश् (विश प्रवेशने)** । तं (सोमम्) पर्यविशन् (तै० सं० ६।३।१।२)। **परित आवेष्टय सेवका इव समुपासतेति भट्टभास्करः ।** प्रजापतिरेष यदुद्गाता । तमेतत् प्रजा अस्नकाशिनीरभितः समन्तं परिविशन्ति (जै० ब्रा० १।८८) । **उक्तोऽर्थः ।** रक्षांसि समन्तं देवान् पर्यविशन् (तै० सं० २।४।१।२)। **पर्यविशन् अरुन्धन् । परिवार्यातिष्ठन्नित्यर्थः ।** निवेश-परिवेशनम् ( भा० आश्व० ४५।१) । **परिवेशनम् परिसरभूः ।**

**— विष् (विष्लृ व्याप्तौ)** । इमां देवतां परिवेवेष्मीत्येनं परि वेविष्यात् (अथर्व० १५।१३।८) । **परिवेवेष्मि भोजनं निवेदयामि ।** कनीयाञ्ज्यायांसं परिवेवेष्टि (काठक० ३६।७) । अदितिं परिवेविषति (ऐ० ब्रा० १।१७) । अथ पात्राणि निर्णेनिजति । तैर्निणिज्य परिवेविषति (श० ब्रा० १।३।१।२) । माठरकौण्डिन्यौ परिवेविषाताम् (भाष्ये) । **उक्तोऽर्थः ।** मन्त्रहीनं क्रियाहीनं यच्छ्राद्धं परिविष्यते । त्रिभिर्वर्णैः··· (भा० अनु० २३।६)।। **भोजनाम निवेद्यते ।** अथ ह शौनकं च कापेयमभिप्रतारिणं च काक्षसेनिं परिविष्यमाणौ ब्रह्मचारी विभिक्षे (छां० उ० ४।३।५) । **परिविष्यमाणौ निवेदितभोजनौ, भोजयिष्यमाणौ ।** द्वितीययाऽऽदित्ये परिविष्यमाणे ऽक्षततण्डुलाञ्जुहुयात् (गो० गृ० ४।५।२९) । **परिविष्यमाणे परिवेषवति जाते ।** वयं परिविष्टाः परिवेष्टारो वो भूयास्म (भा० श्रौ० ७।१४।१) । **परिविष्टा निवेदितभोजनाः, भोजिताः ।** दद्भिर्न जिह्वा परिविष्टमादत् (अथर्व० २०।१६।६) । **परिविष्टं भोजनाय निवेदितम् ।** चन्द्रं यथा परिविष्टं ससन्ध्यम् (भा० अनु० १४।८८) । **परिविष्टं कृतपरिवेषम् ।** वाताद्यैर्मण्डलीभूताः सूर्यचन्द्रमसोः कराः । मालाभा व्योम्नि दृश्यन्ते परिवेषस्तु स स्मृतः ।। **निगदव्याख्यातम् ।** वेद्यां निधापयेच्चैव रत्नानि विविधानि च । सिकतापरिवेषाश्च ततोऽग्निं समिन्धयेत् (मात्स्य पु० २३९।८) ।। **परिवेषः परिक्षेपः ।** विप्राणां प्रवराः सर्वे चक्रुश्च परिवेषणम् (रा० ७।९१। २८) । **परिवेषणं भोजना ।** श्यामं रुधिरपर्यन्तं बभूव परिवेषणम् (रा० ३।

२३।३) । **उपसूर्यकम्** । सूर्या चन्द्रमसोर्घोरं दृश्यते परिवेषणम् (भा० वन० २२४।१७) । **परिवेषणं परिवेषः** ।

**—वृ (वृञ् वरणे)** । पथि परिवृणुयाद्राजलोकः कुमारम् (मुद्रा० ५।११)। **परिवृणुयात् परिक्षिपेत्** । त्रिषन्धे तमसा त्वममित्रान् परिवारय (अथर्व० ११। ६।१६) । **परिवारय अपरुधान** । हित्वा यानानि यानार्हा ब्राह्मणं पर्यवारयन् (रा० २।६२।१५) । **पर्यवारयन् पर्यवेष्टयन्** । उत्तरतः पुरस्ताद्वा ऽऽचार्यकुलस्य परिवृतं भवति (गो० गृ० ३।४।८) । **परिवृतमावृतं स्नानागारम् इति सत्यव्रतः** । अपरिवृतं धान्यम् (मनु० ८।२३८) । **अदत्तवृतिकम्** । प्रणम्य पादौ परिवृत्य देवम् ( भा० पु० ३।४।२० ) । **परिवृत्य परिक्रम्य, प्रदक्षिणीकृत्य । अन्यत्रादृष्टः कविकल्पितोऽर्थः** । अध्यास्य कन्या परिवारशोभि (यानम्) (रघु० ६।१०) । **परिवारः परिजनः, परिचारकव्रातः** । ग्रहगणपरिवारो राजमार्गप्रदीपः (मृच्छ० १।५७) । व्याघ्रचर्मपरिवारा (रथाः) (भा० उ० १५५। ८) । **परिवारः प्रच्छदः** । परिवारात्पृथक् चक्रे खड्गश्चात्मा च केन चित् (शिशु० १६।४६) । **परिवारः खड्गकोशः** । सह त्वं परिवारेण सुखमास्स्व रमस्व च ( रा० २।१६।२० ) । **परिवारः परिजनः । सखीसमूह इति तु तिलक** । सपताका रथा रेजुर्वैयाघ्रपरिवारणाः (भा० भीष्म० ७२।१३) । **परिवारणं प्रावरणम्, परिच्छदः, समुपच्छादः** । अविसंवादको दक्षः कृतज्ञो मतिमानृजुः । अपि संक्षीणकोशोपि लभते परिवारणम् (भा० उ० ३८।३७) ॥ **परिवारणम् परिवारान् मित्रभृत्यादीन् इति नीलकण्ठः** ।

**—वृज् (वृजि वृजी वर्जने)** । परि श्वभ्रेव दुरितानि वृज्याम् (ऋ० २। २७।५) । **परिवृज्याम् अपाकुर्याम्, तत आत्मानं परिहरेयम् इत्यर्थः** । देवता वा एतं परि वृञ्जन्ति यमनृतमभिशंसन्ति (पञ्च० ब्रा० १८।१।११)। **उक्तोऽर्थः** । यत्रेन्द्रं देवताः पर्यवृञ्जन् (ऐ० ब्रा० ७।२८) । **यज्ञेषु परितो वर्जितवन्तस्त्यक्तवन्तः । यज्ञान्निरभजन्नित्यर्थः** । परि वो रुद्रस्य हेति र्वृणक्तु (अथर्व० ७।७५।१) । परि वृणक्तु **वृणक्तु वर्जयतु परिहरतु** । परि हेतिः पक्षिणी नो वृणक्तु (अथर्व० ६।२७।२) । **उक्तोऽर्थः** । अपरिवर्गमेवास्मिन् तेजो दधाति (तै० सं० ५।३।१०।४३) **अपरिवर्गम्=किञ्चिदप्यपरिहृत्य । णमुलन्तमेतत्** । पुरोडाशमनक्ति स्वक्तमकूर्मपृषन्तमपरिवर्गमणिकाषम् (आप० श्रौ० २।३।११।३) । **अपरिवर्गं यथा विच्छेदस्त्यागो वा न भवति तथा । अणिकाषमिति णत्वमार्षम्** । परिवृक्ता यथासस्यृषभस्य वशेव (अथर्व० ७।११३।२) । **परिवृक्ता परिवर्जनीया** । वेत्था हि निर्ऋतीनां वज्रहस्त परिवृजम् (ऋ० ८।२४।२४) । **परि वृजम् परिहारम्** ।

—वीज् (वीजिलौकिको धूनने)। तालवृन्तान्युपादाय पर्यवीजन्त सर्वशः (भा० अनु० १६८।१५)। यं पुरा पर्यवीजन्त तालवृन्तैर्वरस्त्रियः। तं गृध्राः पर्यवीजन्त दावाग्निपरिकालितम् (भा० आश्रम० ३८।४)॥ उभयत्राधुन्वन्नित्यर्थः।

—वृत् (वृतु वर्तने)। तस्याश्च भर्ता द्विगुणं हृदये परिवर्तते (रा० १।७७।२७)। परिवर्तते वर्तते। परिरिह धात्वर्थं न विशिनष्टि। मनोरथो महानेष हृदि मे परिवर्तते (रा० ३।११।३३)। ममायं पितरो नित्यं यद्यर्थः परिवर्तते (भा० आदि० ४६।५)। अर्थः प्रयोजनम्। व्यादितास्यस्य यो मृत्योर्दंष्ट्राग्रे परिवर्तते (हरि० १०२८६)। यस्मात्प्रपञ्चः परिवर्ततेऽयम् (श्वेताश्व० उ० ६।६)। परिवर्तते प्रवर्तते। चक्रवत् परिवर्तन्ते दुःखानि च सुखानि च (मृच्छ०)। परिवर्तन्ते पर्यायेण वर्तन्ते। सुखस्यानन्तरं दुःखं दुःखस्यानन्तरं सुखमित्येवं क्रमेण वर्तन्त इत्यर्थः। तदा च सर्वभूतानां छाया न परिवर्तते (हरि० ३।४६।२३)। तदाऽपराह्णगते सूर्ये निष्प्रभत्वात् सूर्यस्य छाया परितो न वर्तते इत्यर्थः। भीष्मं शान्तनवं दृष्ट्वा···। कुरवः पर्यवर्तन्त पाण्डवाश्च विशांपते (भा० भीष्म० १२०।११)॥ उक्तोऽर्थः। ज्योतींषि चन्द्रसूर्यौ च परिवर्तन्ति नित्यशः। परिवर्तन्ति परिवर्तन्ते भ्रमन्ति चक्रगतिं गच्छन्ति। अस्वस्थहृदयश्चासीद् दुःखाच्च परिवर्तते (रा० १।१०।२३)। एकदेशेऽनवस्थितिः परिवर्तनम्। लुठतीत्यर्थः। मण्डलं सर्वतः श्लिष्टं रथिनामुग्रधन्विनाम्। किरतां शरवर्षाणि स नागः पर्यवर्तत (भा० द्रोण० २६।४१-४२)॥ पर्यवर्तत भ्रान्तवान्। यातनाभ्यः परिभ्रष्टा देवाद्यास्वथ योनिषु। जन्तवः परिवर्तन्ते··· (वि० पु० ३।७।६)॥ परिवर्तन्ते भ्राम्यन्ति। ऋतु र्व्यतीतः परिवर्तते पुनः (सौन्दर० ९।२८)। परिवर्तते आवर्तते, पुनरायाति। पूर्वावधीरितं श्रेयो दुःखं हि परिवर्तते (शा० ७।१३)। उक्तोऽर्थः। अथ जातिसहस्राणि बहूनि परिवर्तते (भा० शां० २९४।२७)। परिवर्तते परिभ्राम्यति, पर्यटति। तस्यान्तरं स दृष्ट्वैव पर्यवर्तत खेचरः (भा० आदि० ३३।४)। पर्यपतत्, पर्यभ्राम्यत्। तस्याः पुनर्नदीतीरे वसनं पर्यवर्तत। व्यपकृष्टाम्बरां दृष्ट्वा··· (भा० आदि० १३०।३६)॥ पर्यवर्तत अवातरत्, अवास्रंसत। विधातुर्वामत्वाद् विपदि परिवर्तामिह इमे (मालती० १०।६)। विप्लवामहेऽवसीदामो विनश्यामः। पर्यवर्तत राजानं पुण्डरीकेक्षणोऽच्युतः (भा० शां० २९।४)। पर्यवर्तत =अभिमुखोऽभवत्। दुःखोपायस्य मे वीर विकाङ्क्षा परिवर्तते (भा० द्रोण० ८०।१६)। परिवर्तते प्रतिभातीति नीलकण्ठः। दुःखद्वारमिह प्रतिज्ञा। तस्या विकाङ्क्षा विसंवादः। परिवर्तत इति कस्मात्प्रतिभातीत्यर्थमाहेति जिज्ञासायां ब्रूमः—परिवर्तत इति परितो वर्तत इत्यक्षरार्थः। यद्धि परितो वर्तते तत् प्रत्यक्षं

**भवति बुद्धिविषयतां याति । तदेव प्रतिभानम्** । क्षोभ्यतां कलशः सर्वैर्मन्दरः परिवर्त्यताम् (भा० आदि० १८।३२) । **भ्रम्यतामित्यर्थः** । परिवर्तय वाहिनीम् (भा० द्रोण० १९९।७) । **इत आवर्तय इत्यर्थः** । जगत् सशैलं परिवर्तयाम्यहम् (रा० ३।६४।७६) । **अधरोत्तरं करोमि, अन्यथा करोमि, विपर्यासयामि नाशयामि** । यदि रामः समुद्रान्तां मेदिनीं परिवर्तयेत् (रा० ५।१६।१३) । **अधरोत्तरां कुर्यात्** । पात्रं तत् पर्यवर्तयत् (कथा० ६१।१९१) । **पर्यवर्तयत् अधोमुखमकरोत्, आवर्जयत्** । ताभिरजाभिरेव गवां शतं परिवर्तयिष्यामि (तन्त्रा० ५।१) । **परिवर्त्य ग्रहीष्यामि** । गवां शतेन **(गोशतेन) अजा विनिमास्य इत्यर्थः** । शीर्षन्नि च वर्तयते परि च (तै० ब्रा० १।४।६।५) । **परिवर्तयते पृथक् कृत्वा (विश्लिष्य) केशान् वपतीत्यर्थः** । स एतत् सर्वतोमुखो भवति यत्परिवर्तयते (श० ब्रा० २।६।३।१६) । **उक्तोर्थः** । स च (कौमुदीमहोत्सव.) चिरकालपरिवर्तमानो ऽभिमतवधूजनसमागम इव सस्नेहं बहुमानितो नगरजनेन (मुद्रा० ४) । **परिवर्तमानः पुनरावर्तमानः** । स गत्वा मथुरां रामो भवने मधुसूदनम् । परिवर्तमानं ददृशे पृथिव्यां सारमव्ययम् (हरि० २।४६।५५) ।। **परिवर्तमानं परिक्रामन्तं विहरन्तम्** । इच्छामि तस्यान्तिकमाशु गन्तुं तं चेह नित्यं परिवर्तमानम् (भा० वन० ११२।१७) ।। **उक्तोऽर्थः** । अधो विवस्वान् परिवर्तमानः (कु० १।१६) । **परिवर्तमानो भ्राम्यन्, भ्रमिं कुर्वन्** । पञ्चारे चक्रे परिवर्तमाने (ऋ० १।१६४।१३) । तथारिमध्ये परिवर्तमानम् (भा० द्रोण० १४०।१२०) । श्रमादन्यत्र परिवर्तमानस्तिष्ठन् आसीनो यदि वा स्वपन्नपि (श० ब्रा० १२।३।२।७) **उक्तोऽर्थः** । स चापि भूमौ परिवर्तमानः (भा० वन० २३६।१६) । **लुठन्नित्यर्थः** । पञ्चधा परिवर्तमानो ज्ञानसन्तान एवात्मेति बौद्धाः । **परिवर्तमानः परिणममानः** । सासूयमाननमितः परिवर्तयन्त्या (माल० ४।९) । **परिवर्तयन्त्याऽन्यतः कुर्वत्या** । सर्वहुतमपरिवर्तयन् (आप० श्रौ० ६।८।३०।१) । **यथा हूयमानो हुतश्च न पर्यावर्तेत तथा स्रुक्पार्श्वेन शनैश्च्यावयेत् इति रुद्रदत्तः** । **न पर्यावर्तेत न बहिर्वेद्याः प्रस्कन्देत्** । शय्यापालैरपि स्वाम्यादेशात्सुनिपुणमन्विष्यद्भिर् वस्त्रं परिवर्तयद्भिरन्तर्लीना मन्दविसर्पिणी समासादिता (तन्त्रा० १।७) । **परिवर्तयद्भिर्विपर्यासयद्भिरन्यथयद्भिः** । परिवृतेऽहनि (भा० वन० ११३४७, शल्य० ५७।२४) । **परिणत इत्यर्थः** । इत्युक्तः स तया प्राह परिवृत्तमहः शुभे (वि० पु० १।१५।२५) । **उक्तोऽर्थः** । परिवृत्तो हि भगवान् सहस्रांशुर्दिवाकरः (भा० अनु० १६७।२६) । **विनिवृत्त इत्यर्थः** । परिवृत्तं किरीटं तद्यमयन्नेव पाण्डवः (भा० द्रोण० २९।१४) । **स्रस्तमित्यर्थः** । परिवृत्तं युगम् (हरि० ६४७९) । **परिवृत्तं वृत्तं गतं समाप्तम्** । रथयुजा परिवर्तितवाहनः (रघु ९।२५) । **निवर्तिताश्व इत्यर्थः** । शकटे परि-

वर्तिते (वि० पु० ५।१५।२) । **परिवर्तिते पर्याभाविते ।** भूमाविदं च परिवर्तितम् (रा० गोरे० २।९६।३) । **लुठनस्थानम् इत्यर्थः ।** गुहाश्च विविधाकाराः सङ्क्रमाः परिवर्तिताः (रा० ४।४७।१३) । **परिभ्रान्ताः पर्यटिताः ।** प्रत्यूहाः परिवर्तिताः (मार्क० पु० १६।५५) । **व्यपोढाः ।** गुहाशयानां सिंहानां परिवृत्यावलोकितम् (रघु० ४।७२) । आमन्त्र्य नृपतिं तं तु जगाम परिवर्तितुम् (भा० आदि० २१५।२७) । **परिवर्तितुं पर्यटितुम् ।** तदीदृशो जीवलोकस्य परिवर्तः (उत्तर० ३) । **परिवर्तो विपरिणामः ।** परिवर्तः सहस्राणि कामभोज्यानि गालव (भा० पु० १११।१८) । **परिवर्तो गतागतम् ।** अधन्यस्य मम कोकिलानामक्षिपरिवर्त इव कुक्षिपरिवर्तः संवृत्तः (स्वप्न० ४) । ऋतूनां परिवर्तेन प्राणिनां प्राणसंक्षयः (रा० २।१०५।२५) । **परिवर्त आवृत्तिः ।** सर्वर्तुपरिवर्तस्तु स्मृतः संवत्सरो बुधैः (अमरोद्धाटने १।३।२० भागुरिवचनम्) । **सर्वर्तवः परिवर्तन्ते पर्यायेण वर्तन्ते ऽस्मिन्निति तद्व्युत्पत्तिः ।** न यत्र भूयः परिवर्त उग्रः (भा० पु० १।३।३९) । **परिवर्तः संसारः, योनिसङ्क्रमः ।** कण्डूयनेपि चाशक्तः परिवर्तेऽप्यनीश्वरः (वि० पु० ६।५।१८) । **परिर्वतः पार्श्वपरिवर्तनम् ।** परिर्वत कृते ताभ्यां गर्भाभ्याम् (हरि० २।४।२७) । **परिवर्तो व्यत्यासः, अन्योन्यं स्थानपरिवृत्तिः ।** अन्योन्यवस्त्र-परिवर्तमिव व्यधत्ताम् (शिशु० ५।३९) । **परिवर्तो विनिमयः ।** युगशतपरिवर्तान् (शा० ७।३४) । **परिवर्तोन्तरम् ।** जनैस्तदा युगपरिवर्तवायुभिर्निवर्तितः (शिशु० १७।१२) । **परिवर्तः समाप्तिः ।** चरित-महामृताब्धिपरिवर्तपरिभ्रमणाः (भा० पु० १८।८७।२१) । **परिवर्तः क्षोभः ।** निवेशं रोचयामास परिवर्ते सुखाश्रये (हरि० २।५।३१) । **परिवर्तः स्थानं निवासस्थानम् ।** आवासभूमिः । श्वफल्कपरिवर्ते च ववर्ष हरिवाहनः (      ) । न वा एवमर्थं स्थाल्युपादीयते प्रक्षालनं परिवर्तनं च करिष्यामीति (१।४।२३ सूत्रे भाष्ये) । भारते शल्य० ५७।१९ इत्यत्र **बहुविध-मार्ग-वर्णने परिवर्तनमित्येकतमो मार्ग उक्तः । स च शत्रौ प्रहर्तुं परितः भ्रमणं भवति ।** धनेन विद्यायाः परिवर्तनं धननियमः (गौ० ध० २।१७४ इत्यत्र हरदत्तः) । **परिवर्तनं विनिमयः ।** भूतेषु परिवृत्तिं च पुनरावृत्तिमेव च (भा० आश्व० १८।२९) । **परिवृतिः सुरनरतिर्यगादिदेहेषु भ्रमणम् ।** हयेन समयोजयन् । महिष्या परिवृत्त्याथ वावातामपरां तथा (रा० १।१४।३५)॥ राज्ञां हि त्रिविधाः स्त्रियः, उत्तममध्यमाधमजातीयाः । तासां मध्ये उत्तमजातेः क्षत्रियाया महिषीति नाम, मध्यमजाते वैश्याया वावातेति, अधमजातेः शूद्रायाः परिवृत्तिरिति टीकाकारो रामः । **परिवृत्तिर्नाम राज्ञो भागाद् बहिष्कृता राज्ञी । परिवृक्तिरिति पाठस्तूचितः ।** अतिक्रम्याटवीस्तास्ता विषमाः परि-

र्तिनी: । दुर्दर्शा इव सम्प्राप श्रीकण्ठविषयं च स: (कथा० २०।३६) ।। **परिवर्तिनी परिवर्तमनुभवन्ती, अनेकरूपा, अनियतसंस्थाना ।** तस्या: सुविपुला दीर्घा वेपन्त्या: परमस्त्रिया: । दृश्यते कम्पिता वेणी व्यालीव परिवर्तिनी (रा० ५।२५।६) ।। **परिसर्पतीति पाठान्तरम् । परिवर्तिनी वेल्लन्ती ।**

—**वृध् (वृधु वृद्धौ)** । परिवर्धकेनोपस्थापिते पितुरङ्के चरणाभ्यामेवाजगाम स्वमन्दिरम् (हर्ष० पञ्चम उच्छ्वासे) । **परिवर्धकोऽश्वपाल: ।**

—**वृष् (वृषु सेचने)** । क्षुराग्रैश्च वानरान् पर्यवर्षत (रा० ६।७५।४७) । **पर्यवर्षत अभ्यवर्षत्, तत्र क्षुराग्रवर्षमकरोत् ।**

—**वे (वेञ् तन्तुसन्ताने)** । तस्माद्रथ: पर्युतो दर्शनीयतमो भवति (श० ब्रा० १३।२।७।८) । **पर्युतो रथगुप्त्या युत: ।**

—**वेप् (टुवेपृ कम्पने)** । बाहुर्वाम: परिवेपते स्म (          ) । **परिवेपते परिस्पन्दते ।**

—**वेष्ट् (वेष्ट वेष्टने)** । प्रायेण भूमिपतय: प्रमदा लताश्च यत्पार्श्वतो भवति तत् परिवेष्टयन्ति । **परिवेष्टयन्ति परिक्षिपन्ति, समासजन्ति ।** य इमां पृथवीं कृत्स्नां चर्मवत् परिवेष्टयेत् (भा० द्रोण० १०।६४) । **परिवेष्टयेत् संकोचयेत् । समवेष्टयदिति पाठान्तरम् ।**

—**व्ये (व्येञ् संवरणे)** । हिमस्य त्वा जरायुणा शाले परिव्ययामसि (अथर्व० ६।१०६।३) । **परिव्ययामहे परिवृण्म:, परिवीतां कुर्म:, परिवेष्टयाम: ।** परि त्वा दैवी र्विशो व्ययन्ताम् (वा० सं० ६।६) । **परिव्ययन्तां परिवारयन्तु ।** अथ परिव्ययति । अनग्नतायै त्वेनं परि व्ययति (श० ब्रा० ३। ७।१।१६) । **उक्तोऽर्थ: ।** मातुर्योना परिवीतो अन्त: (ऋ० १।१६४।३२) । युवा सुवासा: परिवीत आगात् (ऋ० ३।८।४) । **परिवीत आवृत: ।** शुक्लैर्मयूखनिचयै: परिवीतमूर्ति: (कि० ५।४२) ।

—**व्रज् (वज व्रज गतौ)** । मद्रकेषु चरका: पर्यव्रजाम (श० ब्रा० १४।६। २।१) । **पर्यव्रजाम पर्याटाम ।** अस्या: पटवासगन्धेनोन्मत्ता भ्रमन्तो मधुकरगणाश्चूतशिखराण्यपि त्यक्त्वा परिव्रजन्ति खल्वेनाम् (उभया० पृ० ६) । **परिव्रजन्ति परिपतन्ति ।** पुत्रस्यैश्वर्ये पिता वसेत् परि वा व्रजेत् (कौषी० उ०

२।१५)। **परिव्रजेत् संन्यस्येत्, अनिकेतनो भिक्षुः स्यात्।** गृही भूत्वा वनी भवेत्, वनी भूत्वा परिव्रजेत् (ना० परि० उ० ३।७७ पाठभेदः) । देवता वा एतं परिव्रजन्ति (पञ्च० ब्रा० १८।१।११) । **परिव्रजन्ति परिवर्जयन्ति। नास्य हविराददत इत्यर्थः।** शिवमहं शरणं परिव्रजामि (स्कन्द पु० के० ९१।२८) । **व्रजामीत्येवार्थः । परिरस्थाने ।** वासांसि मृतचेलानि...परिव्रज्या च नित्यशः (मनु० १०।५२) । **परिव्रज्या भ्रमणशीलत्वम्। परिव्रज्या संन्यासः चतुर्थाश्रमप्रवेशोपि भवति । परिव्राजकश्च संन्यासी ।**

**—शिष् (शिष असर्वोपयोगे)।** येषां वाराः प्रतीक्षन्ते सुवृष्टिमिव कर्षकाः। उच्छेपपरिशेषं हि तान् भोजय युधिष्ठिर (भा० अनु० २३।४९) । **परिशिष्टं स्थाल्यामवशिष्टम् ।**

**—शी (शीङ् स्वप्ने) ।** अहन्नहिं परि शयानमर्णः (ऋ० ६।३०।४) । **अर्ण अपः । परि शयानम् परितः शयानम् । उपसर्गात्कारणाद् धातुः सकर्मकः।** एनं ते भ्रातरः परि शेरे (तै० सं० ६।२।८।४४) । **उक्तोऽर्थः ।** वपामेवः परि शये (तै० सं० ६।३।७।४०) । **समीपे शेत इत्यर्थः ।** विशं विशं मघवा पर्यशायत (अथर्व० २०।१७।६) । **तं तं यजमानं मघवा परिशेते प्राप्तवान् भवतीत्याह ।** सर्वतो वा अश्वाभिधानी मुखं परिशेते (श० ब्रा० ६।३।१।२७) । **अश्वस्य मुखं परितः स्थिता भवतीत्यर्थः ।** न ह्येता ईलयन्त्या तृतीयसवनात् परि शेरे (तै० सं० ६।४।३।११) । **परिशेरे ऽविचलिता अवतिष्ठन्ते । अद्भिररिक्तेन** पात्रेण याः पूताः (आपः) परि शेरते (बौ० श्रौ० १।३) ।

**—शील् ( शील उपधारणे , उपधारणमभ्यासः) ।** तिसृभिस्ताभिरेकत्र वाग्देवी परिशीलिता (स्कन्द पु० का० ४।६७।४२) । **परिशीलिता ऽभ्यस्ता, पुनः पुनर्ध्याता ।**

**—श्रम् (श्रमु तपसि खेदे च) ।** परिश्रान्ते विदीर्णे वा ( भा० श्रौ० १। ५३) । **परिश्रान्तः क्लान्तः, खिन्नः ।**

**—श्रि (श्रिञ् सेवायाम्) ।** परिश्रयति । अन्तर्हितो हि पितृलोको मनुष्य-लोकात् (तै० ब्रा० १।६।८) । **परिश्रयति परितः कटादिभिश्छादयति ।** तस्मा एतां पुरं पर्यश्रयन् (श० ब्रा० ६।३।३।२४) । **तिरस्करिण्या प्रच्छन्नामकुर्वन् इत्यर्थः ।** उत्तरस्यां वेदिश्रोण्यां पुंश्चल्यै मागधाय च परिश्रयन्ति (आप० श्रौ०

१५।५।२) । **तिरस्करिण्यादिना व्यवदधतीत्यर्थः** । तां वा एतां (शालां) परिश्रयन्ति नेदभिवर्षादिति (श० ब्रा० ३।१।१।८) । **कटादिभिराच्छादयन्तीत्यर्थः** । परिश्रिते याजयेत् ( तै० सं० २।२।२।२ ) । **परिश्रिते परिच्छादिते** । तस्मात्परिश्रिते कुर्याच्छ्राद्धं श्रद्धासमन्वितः (वि० पु० ३।१३।१४) । तस्मात् परिश्रिते दद्यात् ( गौ० ध० २।६।२६ ) । **उक्तोऽर्थः** । ततोऽनुरक्तैः पशुपैः परिश्रितः ( भा० पु० १०।२५।३३ ) । **परिश्रितः परितः श्रितः सेवित उपासितः** । परिश्रिता ये परितो मनुष्याः (भा० आदि० १९२।५) । **अन्योन्योपजीविन इत्यर्थः** । ते परिश्रित्य गायत्रेणार्पहिंकारेण तुष्टुविरे (श० ब्रा० २।२।४।११) । **परिश्रित्य परिवेष्ट्य व्यवधाय प्रच्छाद्य कटादिभिः** । अमावास्यायां निशि परिश्रित्य निर्वपेत् ( सत्या० श्रौ० २२।२।१० ) । **उक्तोऽर्थः** । अथैनत् परिश्रिद्भिः परिश्रयति ( श० ब्रा० १३।८।२।२) । **परिश्रिद् वृतिर्भवति** । व्रजः सपरिश्रयः (श० ब्रा० १४।६।४।२२) । **उक्तोऽर्थः** ।

**—श्रु (श्रु श्रवणे)** । क्षतेषु भाग्यैरपरिश्रुतेष्वपि सुहृत्त्वमस्मासु वर्ततदमीदृशम् (अवदा० हस्तिजा० ३७) । **अपरिश्रुतेषु अप्रख्यातेषु अविदितेषु** । सर्वदेवनिकायानां ये राजानः परिश्रुताः (भा० शल्य० ४४।५०)। आदित्यवंशप्रभवस्त्वं हि लोके परिश्रुतः (भा० आदि० १८२।१२) । श्रीर्नामाहं परिश्रुता (भा० अनु० ८२।६) । अमात्यांश्चातिशूरांश्च ब्राह्मणांश्च परिश्रुतान् (भा० शां० ८३।३) । **परिश्रुतान् बहुश्रुतान्** । अनुवंशे पुराणज्ञा गायन्तीति परिश्रुतम् (मात्स्य पु० ४४।५७ ) । **परिश्रुतं बहुलं श्रुतम्** । अल्पः प्रणीतो विच्छिन्नोऽसमिद्धश्चापरिश्रुतः । त्वरया पुनरानीतो यजमानभयावहः ( गृह्यासं० १) ।। **अग्निरिति विशेष्यम्** । श्रोत्रे द्वे परिश्रवणे द्वे (जै० ब्रा० २।१०२) ।

**—सञ्ज् ( षञ्ज सङ्गे )** । मलये चन्दन-लता-परिषङ्गाधिवासिते (सुश्रुत० १।६।२३ ) । **परिषङ्गः परितः सङ्गः** ।

**—सद् (षद्लृ विशरणगत्यवसादनेषु)** । य एनं परिषीदन्ति समादधते चक्षसे (अथर्व० ६।७६।१) । **परिषीदन्ति परितः सीदन्ति । उपसर्गवशात्सकर्मकोऽत्र धातुः** । मा त्वा…माप्सवः परि षदाम मादुवः (ऋ० ७।४।६ ) । **मा परिषदाम मा त्याक्ष्म** । न सोऽर्थः परिषीदति (भा० शां० २९७।४४ ) । **परिषीदति अवसीदति** । परिषद्यं ह्यरणस्य रेक्णः ( ऋ० ७।४।७ ) । **परिषद्यं परिहर्तव्यम्** ( नि० ३।२।१ ) । **सदिरत्र गतौ वर्तते । परिश्च वर्जने** । गव्यां परिषदं

नो अक्रन् ( अथर्व० १८।३।२२) । **गव्या गोसमूहः ।** परिषीदतीति परिषद् । अभिरूपभूयिष्ठा परिषदियम् ( शा० १ ) । **परिषत्समाजः ।**

**—सन्** **(वन षण संभक्तौ, षणु दाने )** । परि व सन्याद् वधात् ( शां० गृ० ३।६।१) ।

**—सिच्** **(षिच क्षरणे)** । सिञ्चन्ति परिषिञ्चन्त्युत्सिञ्चन्ति पुनन्ति च ( वा० सं० २०।२८ ) । ( यां सुराम् ) **परिषिञ्चन्ति पय आदिभिरस्याः परिषेकं कुर्वन्ति ।** उतो तदद्य विद्याम यतस्तत् परिषिच्यते ( अथर्व० १०। ८।२९) । शीतमालेपनं कार्यं परिषेकश्च शीतलः ( सुश्रुत० १९।१६।६ ) । **परिषेकः परितः सेचनमुदबिन्दूनां निपातनम् ।** दारयन्ति शिलां परिषेकैः ( बृ० बृ० सं० ५३।११६ ) । तस्य ( संसारतरोः) अज्ञानमाधारः प्रमादः परिषेचनम् । **परिषिच्यते ऽनेनेति परिषेचनं जलम् ।**

**—सिध्)** **षिध गत्याम्)** । द्विषो घ्नन् परिसेधतः ( भट्टि० ९।८८ ) । **परिसेधत आगच्छतः सर्वतो गच्छतः ।**

**—सु** **(षु प्रसवैश्वर्ययोः)** । देवानां परिषूतमसीति दर्भान् परिषौति (आप० श्रौ० १।२।३।६) । **परिषवणं सवनाय परिग्रह इति धूर्तस्वामी ।**

**—सू** **(षू प्रेरणे)** । अथ हैतद् देवानां परिषूतं यद् ब्रह्मचारी (गो० ब्रा० पूर्व० २।७) । माकिर्नो अस्य परिषूतिरीशत (ऋ० ९।८५।८) । **परिषूतिः परिप्रेरकः ।**

**—सृ** **(सृ गतौ)** । परि धामान्यासामाशुर्गाष्ठामिवासरम् (अथर्व० २। १४।६) । **पर्यसरम्=सर्वत आक्रमिषम् । आशुरश्वः । गाष्ठा काष्ठा ।** परि वर्त्मानि सर्वत इन्द्रः पूषा च सस्रतुः (अथर्व० ६।६७।१) । **परिसस्रतुः परितो निरुध्यागच्छताम् ।** परिसरति शिखी भ्रान्तिमद्वारियन्त्रम् (माल० २।१३) । परिपततीत्यर्थः । एनं सरस्वती परिससार (ऐ० ब्रा०) । **परितः सस्यन्दे ।** सर्वान्परिसृतो लोकान्पुराऽसौ··· ( रा० ३।७१।३३ ) । **परिसृतः पर्यटितो भ्रान्तः ।** सर्वे परिसृता देशा यज्ञियं न लभे पशुम् (रा० १।६१।१४) । **परिसृताः पर्यटिताः । कर्मणि प्रत्ययः ।** तस्मात्परिसृते दद्यात् तिलांश्चान्ववकीरयेत् (भा० अनु० ९०।२१) । **परिसृते आवृतदेशे ।** परिसरणमरुणचरणो रणरणकमकारणं कुरुते (रुद्रट का० २।२३) । **परिसरणं परिक्रमणम्, चङ्क्रमणम् । परिसरः** पर्यन्तभूर्भवति ।

—सृज् (सृज विसर्गे)। परिसृष्टं धारयतु (अथर्व० ८।६।२०)। **परिसृष्टं परिशिष्टम्।**

—सृप् (सृप्लृ गतौ)। ये सूर्यात् परिसर्पन्ति स्नुषेव श्वशुरादधि (अथर्व० ८।६।२४)। **परिसर्पन्ति दूराद्यान्ति। पराऽर्थे परिः, वर्जने वा।** प्रागुदीच्यां दिशि न्यग्रोधशुङ्गामुभयतः फलामस्रामामकृमिपरिसृप्ताम् (गो० गृ० २।६।६)। **परिसृप्तां व्याप्ताम्।** भूयः परिसृप्तगुर्व्याम् (बुद्ध० ३।३१)। **परिसृप्तं भ्रान्तम्।** परिसर्पः परिक्रिया (अमरः)। **परिजनादिना परिवेष्टनं परिसर्प इति भानुजिः।**

—स्कन्द् (स्कन्दिर् गतिशोषणयोः)। मेघनादः परिस्कन्दन् परिष्कन्दन्तमाश्वरिम् (भट्टि० ९।७५)। **परिस्कन्दन् परितः क्रामन्।** भूम्ने परिष्कन्दम् (तै० ब्रा० ३।४।७)। **परिष्कन्दः परिचारकः।** परिस्कन्दः प्राच्यभरतेषु (पा० ८।३।७५)। **इति प्राच्यभरतेषु प्रयोगविषये पूर्वेण प्राप्तो मूर्धन्यः प्रतिषिध्यते। अन्यत्र यथाप्राप्तं षत्वं भवति। पराचितपरिस्कन्दपरजातपरैधिता इति भृत्यनामस्वमरः।** भूतं च भविष्यच्च परिष्कन्दौ (अथर्व० १५।२।६)। **परिष्कन्दः परिचारकः, यः खलु रथेन समं धावति।** परिष्कन्दा रथस्यासन् सर्वतोदिशमुद्यताः (भा० कर्ण० ३४।४३)। **परिष्कन्दाः पार्श्वगोपाः।**

—स्कृ (डुकृञ् करणे+सुट्)। साध्वलङ्कृतौ सुवसनौ परिष्कृतौ (छां० उ० ८।८।२)। **परिष्कृतौ छिन्नलोमनखाविति शङ्करः।** सुरामाहारयामास राजार्हां सुपरिष्कृताम् (भा० वि० १५।७)। **सुपरिष्कृता सुष्ठु संभृता सम्यग् रचिता।**

—स्तु (ष्टुञ् स्तुतौ)। प्रारब्धवान् महेशानं परिष्टोतुमुदारधीः (स्कन्द पु० का० ४।९५।५५)। **परिष्टोतुमभिष्टोतुम्।** मही देवस्य सवितुः परिष्टुतिः (तै० सं० १।२।१३)। **परिरिति महीत्यनेन गतार्थः।**

—स्तृ (स्तृञ् आच्छादने)। परिस्तृणीत परिधत्त। अग्निम् (तै० ब्रा० ३।७।६।१)। परिस्तृणीहि परिधेहि वेदिम् (अथर्व० ७।९९।१) प्रागग्रैः कुशैः परिस्तृणाति त्रिवृत् पञ्चवृद्वा (शां० गृ० १।८।२)। **सर्वत्र परित आच्छादनमेवार्थः।**

—स्था (ष्ठा गतिनिवृत्तौ)। रजोरूपो हि सङ्कल्पो लोकसंव्यवहारवान्। परितिष्ठति संसारपुत्रदारानुरञ्जितः (यो० वा० ४।५३।३६)॥ **परि-**

तिष्ठति परितः तिष्ठति। मा नो मर्तस्य दुर्मतिः परि ष्ठात् (ऋ० ३।१५।६)। **मा परिष्ठात् परितो मा गच्छत्वित्यर्थ इति सायणः। दुर्मति दुष्टबुद्धिप्रयुक्तोऽभिभवः।** आ नो भर मा परि ष्ठा अराते (अथर्व० ५।७।१)। **हे अराते परितो नो मा स्म स्था इत्याह।** तमू शुचिं शुचयो दीदिवांसमपां नपातं परि तस्थुरापः (तै० सं० २।५।१२।२)। **परितः सर्वत उपतस्थुः।** आ तू भर माकिरेतत् परि ष्ठात् (तै० सं० १।७।१३)। **मैव परत्र तिष्ठतु। परिष्ठितं समाप्तं मा भूदिति वार्थ इति भट्टभास्करः।** मा वः परि ष्ठात् सरयुः पुरीषिणी (ऋ० ५।५३।९)। **मा परिष्ठात् मा स्म प्रतिरुधत्, मा प्रत्यूहिष्ट। पुरीषिणी उदकवती।** उत सिन्धुं विवाल्यं वितस्थानामधि क्षमि। परि ष्ठा इन्द्र मायया (ऋ० ४।३०।१२)। **सर्वतः स्थापनं कृतवानसि, वेगमस्या व्यरमय इत्यर्थः।** न ते दूरं न परिष्ठास्ति (अथर्व० ११।२।२५)। **परिष्ठा परिहृत्य स्थिता प्रजेति सायणः।** यद्यत्रात्रस्थितं सर्वं तत्तत्रैव परिष्ठितम् (स्कन्द पु० ४।८८।१०४)। **परिष्ठितं पर्यायेण न त्वौत्तराधर्येण स्थितम्।** परिष्ठितमसृज ऊर्मिमपाम् (ऋ० ६।१७।१२)। **परिष्ठितं प्रतिरुद्धमुपरुद्धम्।** सृजो महीरिन्द्र या अपिन्वः परिष्ठिता अहिना शूर पूर्वीः (ऋ० २।११।२)। **उक्तोऽर्थः।** त्वमिन्द्र स्रवितवा अपस्कः परिष्ठिता अहिना शूर पूर्वीः (ऋ० ७।२१।३)। **पूर्वेण समोऽर्थः।**

—**स्रंस् (स्रंसु अवस्रंसने)।** वैश्वानरस्य रूपं पृथिव्यां परिस्रसा (आप० श्रौ० ५।१।१।७)। **परिस्रसा ऽवकरः।**

—**स्रु (स्रु गतौ)।** परिस्रवेच्च सततं नौर्विशीर्णेव सागरे (भा० शां० ८५।१४)। **परिस्रवेन्मन्दं मन्दमन्यत्र गच्छेत् शनैरिव शनकैरिवेन्द्रा-** येन्दो परि स्रव (ऋ० ८।९१।३)। **परिस्रव पवस्व परितो वह।** रसं परिस्रुता न रोहितम् (तै० ब्रा० ५।६।४।२)। **धारया स्रवत्सुराद्रव्यं परिस्रुद् इत्युच्यत इति सायणः। लोके तु सुरामात्रे व्यवह्रियते। आह चामरः—** सुरा हलिप्रिया हाला परिस्रुद् वरुणात्मजेति। **तथा च भारते (वि० १६।५) प्रयोगः—**अन्ये भद्रे नयिष्यन्ति राजपुत्र्याः परिस्रुतम्।

—**स्वञ्ज् (ष्वञ्ज् परिष्वङ्गे)।** तं त्वा परि ष्वजामहे (अथर्व० २०।९५।३)। गात्राणि गात्रेषु परिष्वजन्ते (मृच्छ० ५।४९)। यथा स्त्रिया संपरिष्वक्तो न किञ्चन वेद (बृह० उ० ४।३।२१)। तं परिष्वज्य बाहुभ्यां तावुभौ रामलक्ष्मणौ

(रा० २।३४।२०)। **परिरभ्य, उपगुह्येत्यर्थः** । अति-स्नेह-परिष्वङ्गाद् वर्तिराद्रापि दह्यते (रा० ४।१।११६) । **परिष्वङ्गः परित आसङ्गः संश्लेषः** ।

—**हन्** (**हन हिंसागत्योः**) । परिघैरायसैस्तीक्ष्णैः (भा० आदि० १६।१७) । **परिहन्ति परितो हन्तीति सर्वतः कण्टकितो लोहदण्डः परिघः** । कृष्णश्च परिघस्तत्र भानुमावृत्य तिष्ठति (भा० उ० १४३।२३) । **परिघः परिवेषः** ।

—**हा** (**ओहाक् त्यागे**) । वयमेवात्र कालज्ञा न कालः परिहास्यते (भा० शां १३८।९४) । **विलम्बो न भविष्यतीत्यर्थः** । परिहीयते गमनवेला (शा० ४) । **अतिक्रामतीत्यर्थः** । आर्यस्य सुविहितप्रयोगतया न किमपि परिहास्यते (शा० १) । **न किमपि परिहीणं न्यूनं विकलं भविष्यतीत्यर्थः** । ओजस्वितया न परिहीयते शच्याः (विक्रम० ३) । **न परिहीयते नापकृष्यते** । न प्रतिच्छन्दाद्-परिहीयते मधुरता(माल० २)। **उक्तोऽर्थः** । अनुदिवसं परिहीयतेऽङ्गैः(शा० ३) । **परिहीयते क्षीयते** । लघुशरीराः प्राक् काष्ठामाप्नुवन् पर्यहीयन्त मेदुराः (इति वयम्) । **पर्यहीयन्त अवहीना अभूवन्, पृष्ठभागेऽधावन्नित्यर्थः** ।

—**हृ** (**हृञ् हरणे**) । यथा पुत्रश्च भार्या च त्यक्तावैश्वर्यकारणात् । कं सा परिहरेदन्यम्···(रा० २।४८।२२) ।। **कैकेयीं प्रति पौरस्त्रीणां निन्दोक्तिः** । परिहरति नभस्वान् प्रोषितानां मनांसि (ऋतु० २।२७) । **अत्र परिरनर्थकः प्रयुक्तः । परितो हरतीति वाऽर्थः । स च रूढिं विरुन्धे** । पूर्वेणाहवनीयं प्रणीताः परिहरन्ति (का० श्रौ० ५।८।७) । **परिहरन्ति नयन्ति** । गुप्त्यै वा एताः (आपः) परिह्रियन्ते (श० ब्रा० ३।६।२।१६) । **परिह्रियन्त आह्रियन्ते** । मृत्योरात्मानं परिहराणीति (छां० उ० २।२२।५) । **परिहरामि रक्षामि । दूरे ऽवस्थापयामीत्यक्षरार्थः** । केमण्डलुं परिहरेत्पूर्वावस्थोप्यशौचतः । न चैनं कुत्सयेद् विद्वान्न शङ्केन्न च दूषयेत् (बौधायनः) ।। **परिहरेद् धारयेत्** । अथ मेखलां परिहरते (श० ब्रा० ३।२।१।१०) । **परिधत्ते परिवेष्टयत इत्यर्थः** । मेखलां त्रिगुणां प्रसलविसृष्टां प्रदक्षिणं त्रिः परिहरन्ति (वीरमित्रोदये पृ० ४३२ उद्धृतं बैजावापवचनम्) । स्रजं परिहरति (आग्निवेश्य गृ० १।३) । **उक्तोऽर्थः** । पत्नीं संनह्यति···मुञ्जयोक्त्रेण त्रिवृता परिहरति (का० श्रौ० २।७।१) । **वेष्टयतीत्यर्थः** । इन्द्रस्तान्पर्यहार्दाम्ना (अथर्व० ६।१०३।२) । **अबध्नादित्यर्थः** । उल्मुकेन परिहरेत् (गाम्) (गो० गृ० ३।१०।१८) । **प्रदक्षिणी कुर्यादित्यर्थः** । आपगायास्तु पूर्णाया वेगं परिहरेच्छरैः (रा० ३।३१।२३) । **परिहरेत् रुन्ध्यात्, वारयेत्, परावर्तयेत्** । दुःस्पर्शं परिवेवितं परिहरेत्सद्योश्मरीं दुस्तराम् (वै० जी० ४।३४) । **परिहरेत् हरेत् अपहरेत् अपनयेत्** । भगायैनद् दक्षिणत

आसीनाय परिहरत। तद्भगः प्राशिष्यति (      )। **परिहरत=उपहरत। उपार्थे परिः।** तत्पूष्णे पर्यहरन्। तत्पूषा प्राश्य दतोऽरुणत् (तै० सं० २।६।८।५)। **पर्यहरन् उपाहरन्, अदाशन्।** भागमस्मै परिहरति (का० श्रौ० २।४।२५)। चतुर्धाकरणकाले आदित्यं ब्रह्मणे परिहरति (आप० श्रौ० ५।७।२२।३)। तदाहुः कस्मादच्छावाकाय पुरोडाशवृगलं परिहरन्ति (शां० ब्रा० २८।४)। **परिहरन्ति देयमिति रक्षन्ति। वृगलं शकलम्।** तद्वा एतदेवैतासां नाम। एतद्यज्ञस्य तस्मादेतत्परिहरेत्साधु पुण्यम् (श० ब्रा० २।२।४।१४)। **परिहरेत् व्याहरेदिति सायणः। आवर्तयेद् अभ्यस्येदित्यन्ये।** आचार्योऽप्यनाचार्यो भवति श्रुतात् परिहरमाणः (आप० ध० १।२।८।२७)। **श्रुताद् दूरे रक्षन्, विद्याया वञ्चयमानः, विद्यामददानः।** अथैनं त्रिः प्रदक्षिणं मुञ्जमेखलां परिहरन् वाचयति (गो० गृ० २।१०।३७)। (क्वचिद्देशे) **परिवेष्टयन्नित्यर्थः।** ब्रह्मास्य जगतो निमित्तं कारणं प्रकृतिश्चेत्यस्य पक्षस्याक्षेपः स्मृतिनिमित्तः परिहृतः। तर्कनिमित्त इदानीमाक्षेपः परिह्रियते (ब्र० सू० शां० भा०)। आशीविष इवाङ्केन बाले परिहृतस्त्वया (रा० २।७।२७)। **परिहृतः परिधृतः।** संस्थिते ऽग्निष्टोमे परिहृतासु वसतीवरीषु (श० ब्रा० १३।५।१।४)। **परिभ्रम्यमाणासु।** व्यूढे दशरात्रे गायत्र्या परिहृतानि (पृष्ठानि बहुदोहनीं स्पन्दनाम्) दुह्रे (जै० ब्रा० २।३)। **परिहृतानि परिवेष्टितानि बद्धानि।** स्त्रीसंनिकर्षं परिहर्तुमिच्छन्नन्तर्दधे भूतपतिः सभूतः (कु० ३।७४)। **स्त्रीसंनिकर्षात्स्त्रीसान्निध्यादात्मानं दूरे रक्षितुं, विनाकर्तुम्।** अथ कदाचिदाषाढभूतिनमि परवित्तापहृत् कथमियमर्थमात्राऽस्य मया परिहर्तव्या (तन्त्रा० १।३)। **परिहर्तव्याऽपहर्तव्या। आश्चर्यमिवापशब्दस्यार्थे परेः प्रयोगः।** स ब्रह्मणे परिहृत्यः (ऐ० ब्रा० ७।२६)। **स यजमानभाग ऋत्विग्विशेषाय ब्रह्मणे सर्वात्मना समर्पणीय इत्यर्थः।** सखे न परिहार्ये वस्तुनि पौरवाणां मनः प्रवर्तते (शा० २)। **परिहार्यमग्राह्यमनासेव्यम्।** आवापकः पारिहार्यः कटको बलयोऽस्त्रियामित्यमरः। **परिहार्य एवं पारिहार्यः, परितो वेष्टनीयः।** सुखं वा यदि वा दुःखं भूतानां पर्युपस्थितम्। प्राप्तव्यमवशैः सर्वं परिहारो न विद्यते (भा० शां० २८।१६)॥ **परिहारो विमोक्षः पृथग्भावो विनाभवः, दूरेऽवस्थानम्।** तेषां गुप्तिपरीहारैः कच्चित्ते भरणं कृतम् (रा० २।१००।४८)। सर्वतः परिहारमाश्विनम् (तै० सं० ६।४।६।४०)। **परिहारमिति णमुलन्तमेतत्। शिरः सर्वतो भ्रमयित्वेत्यर्थः।** भूयसा परिहारेण सत्कारेण च भूयसा। पूजितो ब्राह्मणश्रेष्ठ भूयो वस गृहे मम (भा० शां० ८२।५६)॥ **परिहारः प्रदेशनम्, धनार्पणम्।** धनुःशतं परीहारो ग्रामस्य स्यात्समन्ततः (मनु० ८।२३७)। **परिहारो नाम ग्रामं परितः करमुक्ता सर्वजनीना भूमिः।**

चतुर्विधं भोजयित्वा देवांश्च मुनिपुङ्गवान्। नृपांश्च बान्धवांश्चैव परीहारं चकार सः (ब्रह्मवै० पु० ४।१०६।४७)॥ **परीहारो दानम्।** प्रदद्यात् परिहारांश्च (मनु० ७।२०१)। **परिहारा विशिष्टानि दानानि।** कृतभस्मरेखापरिहारपरिकरे हरितगोमयोपलिप्त-क्षितितलवितते-व्याघ्रचर्मण्युपविष्टम् (हर्ष०)। **परिहारो मर्यादा।**

**—ह्वल् (ह्वल चलने)।** परि ह्वालं वाचं वदति (श० ब्रा० ३।२।२।२७)। **स्खलन्त्या वाचा ब्रवीतीत्यर्थः।**

**—ह्वे (ह्वेञ् स्पर्धायां शब्दे च)।** अनुहवं परिहवं परिवादं परिक्षवम् (अथर्व० १६।८।४)। **परितः पार्श्वद्वये आह्वानं परिहवः।**

## पर्यधि (परि+अधि)

**—धा (डुधाञ् धारणपोषणयोः)।** परीदं वासोऽधिधाः (लौ० गृ० ४१।११)। **पर्यध्यधा आधिक्येनोत्कर्षेण पर्यधाः।**

## पर्यनु (परि+अनु)

**—इष् (इष गतौ)।** अन्वगच्छद् धनुष्पाणिः पर्यन्वेष्टुमितस्ततः (भा० आदि० ४०।१४)। **पर्यन्वेष्टुं परितोऽन्वेष्टुं विचेतुम्।**

**—नी (णीञ् प्रापणे)।** सर्वात्मना पर्यनुनीयमानो यदा न सौमित्रिरियाय योगम् (रा० ६।११२।११०)। **पर्यनुनीयमानोऽनुनीयमान आनुकूल्यं नीयमानः।**

**—युज् (युजिर् योगे)।** ततस्तयोः स्वयं राज्ञा तत्र पर्यनुयुक्तयोः (कथा० २७।१६२) पर्यनुयुक्तयोरनुयुक्तयोः पृष्टयोः। यत्रोभयोः समो दोषः परिहारोपि वा समः। नैकः पर्यनुयोक्तव्यस्तादृगर्थविचारणे॥ **पर्यनुयोक्तव्यः प्रष्टव्यः।** पर्यनुयोज्योपेक्षणम् **पर्यनुयोज्यो दूष्यः, दोषेण योक्तव्यः।** उत्कर्ष हेतोरधीयानस्य किं पठसि नाशितं त्वयेत्येवं पर्यनुयोगप्रदानम् (याज्ञ० ३।७६ इत्यत्र मिताक्षरायाम्)। **पर्यनुयोगः क्षेपो दूषणम्, धिक्करणम्। दूषणार्थं जिज्ञासा पर्यनुयोग इति हलायुधः।** अप्राप्तार्थस्य प्राप्तये पर्यनुयोगो योगः (सर्वद० सं० १५।११)। छल-जाति-निग्रहस्थानानां परवाक्ये च पर्यनुयोगः (१।१।१ न्या० भा०)। **निर्देश इत्यर्थः।**

## पर्यव (परि+अव)

—इ (इण् गतौ)। तद्यथेह चेह चापथेन चरित्वा पन्थानं पर्यवेयात् (ऐ० ब्रा० ४।४)। पर्यवेयात् प्रतिनिवर्तेत। तं ततो नानीजानमपरा फाल्गुनी पर्यवेयात् (आप० श्रौ० ८।६।२१।४)। पर्यवेयात् अतिक्रामेत्। तेषां यदा तत् पर्यवैति (बृह० उ० ६।२।१६)। तत् (सुकृतं) पर्यवैति क्षीयते। तेषां पञ्च शतानि संवत्सराणां पर्यवेतान्यासुः (श० ब्रा० १२।३।३।१)। पर्यवेतान्यतीतानि। संवत्सरे पर्यवेते (श० ब्रा० १३।४।४।१)। उक्तोऽर्थः।

—ईक्ष् (ईक्ष दर्शने)। ततो वाचस्पति जज्ञे तं मनः पर्यवेक्षते (भा० आश्व० २१।६)। पर्यवेक्षते परितः पश्यति।

—कॄ (कॄ विक्षेपे)। दिव्यैश्च पुष्पैस्तं देवाः समन्तात् पर्यवाकिरन् (भा० वन० १३५६६)। आकीर्णमभिवृष्टमकुर्वन् इत्यर्थः।

—छिद् (छिदिर् द्वैधीकरणे)। यः कामयेतोभयत एनं विशः पर्यवच्छिनदानीति (ऐ० बा० ३।१६)। उभयतः पूर्वाश्च पराश्च विशः प्रजास्तासामवच्छेदनं प्रच्यावनं करवाणीत्यर्थः।

—दो (दो अवखण्डने)। पुरोडाशं समन्तं पर्यवद्यति (तै० सं० २।३।२।४)। परितोऽवद्यति अवदानं करोतीत्याह।

—धा (डुधाञ् धारणपोषणयोः)। आर्याय वा पर्यवदध्यात् (आप० ध० १।१।३।४०)। सर्वमेकत्र पात्रेऽवधाय तत्समीपे भूमौ स्थापयेदित्यर्थ इति हरदत्तः। अश्राद्धेन तु पर्यवदध्यात् (आप० ध० १।३।१०।३०)। प्रेतसंक्लृप्ते ऽन्ने भुक्ते) तस्योपरि अश्राद्धमन्नं भुञ्जीतेत्यर्थः।

—नुद् (णुद प्रेरणे)। वलिं ह्रियमाणं पन्थानं पर्यवनुदति (पञ्च० ब्रा० १५।७।४)।

—पद् (पद गतौ)। राजभ्राजोः पदान्तार्थं ग्रहणं झलादिराभ्यामिटा पर्यवपद्यते (व्रश्चभ्रस्जेति सूत्रे ८।२।३६ वृत्तौ)। पर्यवपद्यते व्यवधीयते। इह लुप्ते प्रत्यये सर्वाणि प्रत्ययलक्षणानि कार्याणि पर्यवपन्नानि भवन्ति। प्रत्ययलोपे प्रत्ययलक्षणम् (१।१।६२) इति सूत्रे तुग्दीर्घत्वयोश्चेत्यस्मिन्वार्तिके भाष्ये)। पर्यवपन्नानि मृतानि पर्यवसन्नानि। अननैतत्पर्यवपन्नम् (पा० ५।१।४८ सूत्रे भाष्ये)। पर्यवपन्नं व्यवहितम्। पर्यवपादो रूपान्तरापत्तिः (टित आत्मनेपदानां टेरे इति सूत्रे कैयटः)। निगदव्याख्यातम्।

**—सो (षो अन्तकर्मणि)** । महासेतुः म घटितो राज्ञा नौभिः स्वसिद्धये । पर्यवस्यदविधिवशाच्छत्रूणां सिद्धये पुनः (राज० ७।१५४६) ।। पर्यणमतेत्यर्थः । **पर्यवास्यदिति तूचितम्** । एष एव समुच्चयः सद्योगेऽसद्योगे सदसद्योगे च पयर्व-स्यतीति न पृथग् लक्ष्यते (क,० प्र० १०) । **समाप्नोति, अन्तः प्रविशति** । हा दण्डकारण्य वासप्रियसखि ! लोकान्तरं पर्यवसितासि (उत्तर० ७) । **गता-सीत्यर्थः** ।

**—स्कन्द् (स्कन्दिर् गतिशोषणयोः)** । आरोहे पर्यवस्कन्दे सरणे सान्तर-प्लुते (भा० भीष्म० ७६।८) । **पर्यवस्कन्दः प्लुत्या हस्त्यादिभ्योऽवतरणम्** ।

**—स्तम्भ् (स्तन्भु धारणे, सौत्रो धातुः)** । पर्यवष्टभ्यतामेतत् करालाय-तनम् (मालती० ५) । **पर्यवष्टभ्यतां परिक्षिप्यताम्, रुध्यताम्** ।

**—स्था (ष्ठा गतिनिवृत्तौ)** । प्रसन्नचेतसो ह्यस्य बुद्धिः पर्यवतिष्ठते (गीता २।६५) । **पर्यवतिष्ठते ऽचला भवति** । न पर्यवस्थितः कश्चिद् देवो वा मानुषोऽपि वा (भा० वन० १४२।४६) । **पर्यवस्थितोऽनाकुलं स्थितः, शान्तः, समाहितः** । हृताश्वं विरथं पार्थं पौरुषे पर्यवस्थितम् (भा० वि० ४८।२२) । **पर्यवस्थितं समवस्थितम्, तत्परम्** । हन्तारं सर्वसैन्यानां पौरुषे पर्यवस्थितम् (रा० ३।२८।१२) । **उक्तोऽर्थः** । प्रणवाद्यास्तथा वेदाः प्रणवे पर्यवस्थिताः (बौ० ध० ४।१।२७) । **पर्यवस्थिताः परिसमाप्ता अन्तः स्थिताः** । भरतो राज्यमासाद्य कैकेय्यां पर्यवस्थितः (रा० २।३१।१४) । **पर्यवस्थितो ऽनुरक्तः । कैकेय्या प्रतिष्ठावानिति वा** । तं रथस्थं धनुष्पाणिं राक्षसं पर्यवस्थितम् । ददृशुः सर्वभूतानि···(रा० ३।२८।११) । **राक्षसं पर्यवस्थितम्=राक्षस-विरोधायावस्थितम्** । स राजा महता यत्नेन पर्यवस्थापितोऽमात्यैः (स्वप्न० १) । **पर्यवस्थापितः सान्त्वितः, उपशमितः** । तं तु पर्यवस्थापयितुं न कश्चिद् यत्नवानमात्यः (स्वप्न० १) । **पर्यवस्थापयितुं शमयितुं सान्त्वयितुं समाधातुम्** । छन्दसि परिपन्थि-परिपरिणौ पर्यवस्थातरि (पा० ५।२।८९) । **पर्यवस्थाता विरोधकः** । अजितः पर्यवस्थाता कोत्र यो न मया जितः (भा० सभा० २२।२७) । **उक्तोऽर्थः । पर्यवस्था विरोधनमित्यमरः** ।

## पर्याङ् (परि+आङ्)

**—अस् (असु क्षेपे)** । अनेन पर्यासयताऽश्रुबिन्दून् (रघु० ६।२८) । **पर्यासयता परिमुञ्चता** ।

—(आप् आप्लृ व्याप्तौ) नास्ति व्यसनिनां वत्स भुवि पर्याप्तये धनम् (कथा० २६ २०१)। पर्याप्तये परितोषाय, सन्तुष्टये । एतस्य लोकस्य पर्याप्तये (गो० ब्रा० पूर्व० २।२४)। पर्याप्तये परित्राणाय। यावदहं······ पर्याप्तिं कृत्वागच्छामि (तन्त्रा० ४।२) । अत्र यावदहम् इत्यतः परं ग्रन्थः पतितः। पर्याप्तिरात्मरक्षेत्यर्थो भाति।

—इ (इण् गतौ)। विहारं त्रिषतं पर्यायन्ति (वाराह श्रौ० ३।२।५।४७)। अहानि गृध्राः पर्या व आगुरिमां धियं वार्कार्यां च देवीम् (ऋ० १।८८।४)। पर्यागुरनुसंस्रुः। यदा पुरोहितं वा ते पर्येयुः शरणैषिणः (भा० शां० २६७।१४)। पर्येयुरुपगच्छेयुः। कालस्तु पर्यागात् ( भा० १२।८१५७ )। सा ह वागुच्चक्राम। सा संवत्सरं प्रोष्य पर्येत्योवाच (श० वा० ८।७।२।५)। पर्येत्य प्रत्यागत्य।

—काश् ( काशृ दीप्तौ )। आवासस्तोयवान् दुर्गः पर्याकाशः प्रशस्यते (भा० शां० १००।१५)।

—कृ (डुकृञ् करणे)। सर्वां श्रियं ह्यात्मवीर्येण लब्धां पर्याकार्षुः पाण्डवा मह्यमेव (भा० उ० २२।३)। पर्याकार्षुर्मदर्थं परित आनीतवन्त इति नीलकण्ठः। उपनिन्युरित्यर्जुनमिश्रः। असुरा वा उत्तरतः पृथिवीं पर्याचिकीर्षन् (तै० सं० ६।५।२।२७)। पर्याचिकीर्षन् आकर्ष्टुमैच्छन्। मूलवर्हणी पर्यक्रियमाणा क्षितिः पर्याकृता (अथर्व० १२।८।६)। व्रज-पर्याकृतौ कूपे पातालतलभीषणे ( यो० वा० ६ ( १ )।८६।२६। पर्याकृतौ वृत्ते, वर्तुलाकारे परिमण्डले।

— कृष् (कृष विलेखने)। द्रौपदी च सभामध्ये पाञ्चाली धर्मचारिणी। पर्याकृष्टाऽनवद्याङ्गी पत्नी नो गुरुसन्निधौ (भा० स्वर्गा० १।९)।। पर्याकृष्टा परित आकृष्टा।

—क्रम् (क्रमु पादविक्षेपे)। पर्याक्रामन्त देशांश्च नदीः शैलान् वनानि च (भा० भीष्म० १।९)। पर्याक्रामन्त पर्याक्राम्यन्।

—क्षिप् (क्षिप प्रेरणे)। पर्याक्षिपत्कदाचिदुदारवन्धं (केशान्तम्) दूर्वावता पाण्डुमधूकदाम्ना (कु० ७।१४)। पर्याक्षिपद् अबध्नात्।

—गम् (गम्लृ गतौ)। कुमार्यः समलङ्कृत्य पर्यागच्छन्तु मे पुरात् (भा० वि० ३४।१७)। पर्यागच्छन्तु सङ्घशो निर्गच्छन्तु। संवत्सरे पर्यागते (भा०

श्रौ० ८।२।१८) । **पर्यागतेऽतीते** । संवत्सरे पर्यागत एताभिरेवोपसादयेत् (आप० श्रौ० ५।७।२२।१२) । **उक्तोऽर्थः** । अवश्यं लभते कर्ता फलं पापस्य कर्मणः । घोरं पर्यागते काले द्रुमः पुष्पमिवार्तवम् (रा० ३।२६।८) ।। **पर्यागते पर्यायेण क्रमेणागते प्राप्ते** । अपर्यागतं धान्यम् (सुश्रुत० १।१६६।१७) । **असंवत्सरोषितम् इत्यर्थः** । न विधिं ग्रसते प्रज्ञा प्रज्ञां तु ग्रसते विधिः । विधिपर्यागतानर्थान्प्राज्ञो न प्रतिपद्यते (भा० आदि० ११८।१०) ।। **विधिप्राप्तानर्थान् प्रज्ञाबलेनैवैते मया प्राप्ता इति प्रतिपद्यते जानाति** । पर्यागतं मम कृष्णस्य चैव यो मन्यते कलहं सम्प्रसह्य (भा० उ० ४८।८६) । **पर्यागतं प्राप्तम्** । **मन्यत इच्छति** । प्राप्स्यसे परमं कामं मयि पर्यागते सति (रा० २।२४।३०) । **पर्यागते प्रत्यागते** । स पर्यपृच्छत्तं पुत्रं क्षीणं पर्यागतं पुनः (भा० अनु० ७१।१२) । **पर्यागतं प्रत्यागतं प्रकृतिमापन्नं संजीवितं प्रतिलब्धसत्त्वम्** ।

**—गल् (गल लौकिकः स्रवणे)** । पत्रान्तपर्यागलदच्छ-बिन्दुः···तीरतरुः (भट्टि० २।४) ।

**—चम् (चमु अदने)** । उग्रान्नं सूतिकान्नं च पर्याचान्तमनिर्दशम् (मनु० ४।२१२) । **एकपङ्क्तिस्थान् अन्यानवमत्य यत्रान्ने भुज्यमाने केनचिदाचमनं क्रियते तत्पर्याचान्तमुच्यते** ।

**—चर् (चर् गतिभक्षणयोः)** । प्राणमङ्गेभ्यः पर्याचरन्तम् (अथर्व० २।३४।५) । **परितः सर्वतो निष्क्रम्याभिमुख्येनागच्छन्तम् इत्यर्थः** । यतः परि जार इवाचरन्त्युषो ददृक्षे न पुनर्यतीव (ऋ० ७।७६।३) । **उक्तोऽर्थः** ।

**—तन् (तनु विस्तारे)** । अपसलवि सृष्टाभिः स्पन्द्याभिः पर्यातनोति (श० ब्रा० १३।८।१।१६) । **पर्यातनोति परिस्तृणाति** ।

**—दा (डुदाञ् दाने)** । अहं दस्युभ्यः परि नृम्णमाददे (ऋ० १०।४८।२) । **पर्याददे आच्छिनद्मि** । **स्ववशे करोमि** । यद्वै नोऽयमर्धं न पर्याददीत (श० ब्रा० ११।४।१।२) । **न पर्याददीत नापहरेत्** । परि वैनोऽयमार्त्विज्यमादत्त (षड्० ब्रा० १।४) । **पर्यादत्ते हरति** । तस्मिन्निधीनादधीत प्रज्ञां पर्याददीत च (भा० शां ८६।२६) । **पर्याददीत नियमेनाददीत** । **विद्यामुपाददीत, शास्त्रमुपयुञ्जीत** । तस्मिन्खलु प्रपीड्यमाने यत्तैलमुदियात् तत्पाणिभ्यां पर्यादाय (चरक० विमान० ७।२६) । **पर्यादाय पाणिलग्नं पुनः पुनरादाय** । स पक्षवांश्चेदनादेयः, विपर्यये पर्यादातव्यः (कौ० अ० २।६।२४) । **सर्वस्वं तस्य हरणीयमित्याह** ।

**—धा** (डुधाञ् धारणपोषणयोः)। ते वा अन्येषां कुम्भीं परिदधति सर्वदा (अथर्व० १२।२।५१)। **परिदधति परिवेष्टयन्ति** (अग्निना)। पर्याहितपरीष्टपरिविवित्तिपरिविन्नपरिविविदानेषु (आप० ध० २।५।१२।२२)। **ज्येष्ठेऽनाहिताग्नौ कनिष्ठोऽग्निमादधानः पर्याधाता भवति, ज्येष्ठश्च पर्याहितः**। यन्म आत्मनो मिन्दाऽभूत्पुनरग्निश्चक्षुरदाद् इत्येताभ्यामभिनिम्रुक्ताभ्युदितपर्याहित० (आप० श्रौ० ९।३।१२।७०)। पर्याधानेज्ययोरेतत् परिवित्ते च भेषजम् (बौ० ध० ४।६।७)। **पर्याधानं ज्यायसि तिष्ठत्यनाहिताग्नौ कनीयस आधानम्**।

**—नह्** (णह बन्धने)। सोमपर्याणहनेन पर्याणह्यति (श० ब्रा० ३।३।४।६)। **पर्याणह्यति अभिनह्यति अभितो बध्नाति**। पर्याणद्धं विश्वरूपं यदस्ति (अथर्व० १४।२।१२)। सोमपर्याणहनमाहर (श० ब्रा० ३।३।२।३, का० श्रौ० ७।७।१)। **अनसि स्थितस्य वस्त्रबद्धस्य सोमस्योपर्याच्छादनार्थं यत्प्रसार्यते वासस्तत् पर्याणहनम्**।

**—नी** (णीञ् प्रापणे)। पर्याणयन्ति पत्नीमुभौ जघनेनाग्नी (श० ब्रा० ३।५।३।१३)। **परितो नयन्ति**। पञ्चालराजं द्रुपदं गृहीत्वा रणमूर्धनि। पर्याणयत भद्रं वः सा स्यात्परमदक्षिणा (भा० आदि० १३८।३)। **पर्याणयत इत आनयत**।

**—पत्** (पत्लृ गतौ)। आदाय शिबिकां तारः स तु पर्यापतत् पुनः (रा० ४।२५।२१)। **पर्यापतत् प्रत्यावर्तत**। वीक्षमाणा दिशः सर्वाः पर्यापेतुः सहस्रशः (भा० कर्ण० ६५।१)। **(कुरवः कर्तारः) पर्यापेतुः प्रदुद्रुवुः**। पर्यापतत्क्रयिकलोकम् (शिशु० ५।२४)। **पर्यापतन् परितो धावन्**।

**—भू** (भू सत्तायाम्)। पर्याभूद् वा अयमेककपालो मोहिष्यति राष्ट्रम् (श० ब्रा० २।४।३।१०)। **पर्याभूत् अवाङ् अपप्तत्**।

**—मुच्** (मुच्लृ मोक्षणे)। यथा कुलालश्चक्रं भ्रमयित्वा घटं करोति मृत्पिण्डं चक्रमारोप्य, पुनः कृत्वा घटं पर्यामुञ्चति (सां० का० ६७ गौड०)। **पर्यामुञ्चति अवतारयति अवरोपयति**।

**—मृष्** (मृष तितिक्षायाम्)। सैन्धवं येन राजानं पर्यामृषितवानथ (भा० वि० ५।२३)। **कण्ठे जग्राह, जितवानित्यर्जुनमिश्रः**। **पूर्वोऽर्थस्तु**

**मृशेरेव घटत इति मोहमुक्तवांष्टीकाकार: ।**

**—या (या प्रापणे, प्रापणमिह गतिः)** । अतः परी वृषणावा हि यातम् (ऋ० १।१०८।७) । **पर्यायातम्=तत इत आयातमित्याह** । आ नो यातं दिवस्परि (ऋ० ८।८।४) । याह्यर्य आ परि स्वाहा सोमस्य पीतये (अथर्व० ८।३४।१०) । **उक्तोऽर्थः** । नैनं घ्नन्ति पर्यायिणः (अथर्व० ६।७६।४) । **पर्यायिणः परित आगन्तारः** ।

**—वृ (वृञ् वरणे)** । ...मद्राधिपतिं शरार्तम् । पर्यावव्रुः प्रवरास्ते सुसज्जाः (भा० शल्य० १७।११) । **परित आवृतवन्त इत्यर्थः** ।

**—वृत् (वृतु वर्तने)** । दक्षिणां दिशमभि नक्षमाणौ पर्यावर्तेथामभि पात्रमेतत् (अथर्व० १२।३।८) । पर्यावर्तेथां परिक्रामतम् । पर्यावर्तताथ रथेन वीरो भोगी यथा पादतलाभिमृष्टः (भा० वि० ६६।२) । **परावर्तत अपाक्रामदित्यर्थः** । प्राण मा मत् पर्यावृतः (अथर्व० ११।४।२६) । **माऽपक्रमीः** । यदाऽमुतो ऽर्वाञ्चः पर्यावर्तन्ते (नि० ७।२४।१) । **पर्यावर्तन्ते इत आवर्तन्ते** । तस्यैवावृतमनु पर्यावर्तते । **पर्यावर्तते परिक्रामति** । यद्येककपालः स्कन्देत् परि वा वर्तेत (आप० श्रौ० ९।४।१४।१) । **पार्श्वान्तरेणावर्तनं पर्यावर्तनम्** । पर्यावर्ते दुःष्वप्न्यात् पापात् (अथर्व० ७।१००।१) । **पर्यावर्तेऽपसर्पामि** । प्रद्युम्नो यावत्·· पर्यावर्तेद् वरारोहां वज्रनाभसुताम् (हरि० २।९१।५०) । **पर्यावर्तेत उपेयात्** । **वशे कुर्यादिति चार्थिकोऽर्थः** । प्राणानामसंभेदाय न पर्यावर्तयति (तै० सं० ६।४।१।१) । **न पर्यावर्तयति न पुनरावर्तयति** । अथैनां (उखां) पर्यावर्तयति (श० ब्रा० ६।५।४।१२) । **पर्यावर्तयति आवर्जयति** । रश्मींस्त्वं पर्यावर्तयात् (छां० उ० १।५।२) । **पर्यावर्तयात् पर्यावर्तय** । **रश्मिबाहुलकविशिष्टमादित्यं भावयेत्यर्थः** । त्रिरात्रमपर्यावर्तमानः शयीत (कौ० सू० ४६।१५) । **अपर्यावर्तमानः पार्श्वपरिवर्तनमकुर्वन्** । उत्तानानि पात्राणि पर्यावर्त्य (आप० श्रौ० १।४।११।९) । **पर्यावर्त्य अवमूर्धीकृत्य, अवाञ्चि कृत्वा** ।

**—श्वस् (श्वस प्राणने)** । पर्याश्वासय वाहिनीम् (भा० द्रोण० १५६।१७) । **विश्रमयेत्यर्थः** । उत्थाय च महाबाहुः पर्याश्वस्तो धनञ्जयः (भा० आश्व० ८०।५६) । **पर्याश्वस्त आश्वस्तः** । प्रभाते यास्यति भवान् पर्याश्वस्तः सुखोचितः (भा० शां० ३५६।७) । **पर्याश्वस्तः कृतविश्रमः, विगतक्लमः, व्यपेताध्वखेदः** । पर्याश्वास्य च वाहनम् (भा० शल्य० २५।११) । **पर्याश्वास्य विश्रमय्य** ।

—सिच् (षिच क्षरणे)। तं ते माता परि योषा जनित्री महः पितुर्दम आसिञ्चदग्रे (ऋ० ३।४८।२)।

—हृ (हृञ् हरणे)। अथास्मै ब्रह्मभागं पर्याहरन्ति (श० ब्रा० १।७।४।१८)। पर्याहरन्ति उपहरन्ति उपनयन्ति। तद्धैतदेके कुशला मन्यमानाः प्राचीं स्रुचमुपावहृत्य हुत्वा पर्याहृत्य (श० ब्रा० ११।४।२।१३)। **पर्याहृत्य भ्रमयित्वा। पर्याहारश्च मार्गश्च विवधौ वीवधौ च तौ** (इत्यमरः)। **पर्याहारो विहङ्गिका। पर्याहार उदकुम्भो भवतीति शाङ्खायनश्रौतसूत्रे।**

—ह्वे (ह्वेञ् स्पर्धायां शब्दे च)। तदुभयतो धाय्यां पर्याह्वयते (ऐ० ब्रा० ३।३१)। **शंसावोम् (शंसाव ओम्) इत्येष मन्त्रः पर्याहावः, तं पठतीत्यर्थः।**

## पर्युद् (परि+उद्)

—अञ्च् (अञ्चु गतिपूजनयोः)। स्यादृणं पर्युदञ्चनमुद्धार इत्यमरः। **इदं शब्दस्वाभाव्यं ल्युटि कृति प्रत्यय एवायमर्थः, तिङि तूपसर्गद्वयपूर्वस्याञ्चतेः प्रयोग एव नास्ति।**

—अस् (असु क्षेपे)। हिमवत्सागरानूपाः सर्वे रत्नाकरास्तथा। अन्त्याः सर्वे पर्युदस्ता युधिष्ठिर निवेशने (भा० सभा० ५१।२१)॥ रात्र्यादिपर्युदस्तेतरकाले श्राद्धं कुर्यात् (मनु० ३।२८० इत्यत्र कुल्लूकः)। **पर्युदस्तो व्यावर्तितः।** वादरायणस्येदं मतं कीर्त्यते बादरायणं पूजयितुं नात्मीयं मतं पर्युदसितुम् (मी० शा० भा० १।१।५।५)। **पर्युदसितुं निषेद्धुम्।**

—स्था (ष्ठा गतिनिवृत्तौ)। तं वैश्वानरः पर्य्युदतिष्ठत् (पञ्च० ब्रा० ८।८।२२)।

## पर्युप (परि+उप)

—आस् (आस उपवेशने)। पुरुषं सोम्योपतापिनं ज्ञातयः पर्युपासते जानासि मां जानासि मामिति (छां० उ० ८।१५।१)। **पर्युपासते परितस्तिष्ठन्ति।** यथेह क्षुधिता बाला मातरं पर्युपासते (छां० उ० ५।२४।५)। एतच्चन्द्रमसस्तीर्थमृषयः पर्युपासते। **तीर्थमुपवसन्तीत्यर्थः।** स्त्रियो गीतस्वनं तस्य मुदिताः पर्युपासते (भा० ३।१०४।१२)। **तत्र गीतस्वने संनिदधते।** जयद्रथे च निहते तव भ्रातृषु चानघ। लक्ष्मणे तव पुत्रे च किं शेषं पर्युपास्महे (भा० शल्य० ४।१२)॥ **कं संश्रयामहे इत्युक्तं भवति।** वीराः संभावितात्मानो न

दैवं पर्युपासते (रा० २।२३।१६)। **उक्तोऽर्थः।** अशक्ता एव सर्वत्र नरेन्द्रं पर्युपासते (पञ्चत० १।२४१)। **उदितचर एवार्थः।** तुल्योऽप्यभिजने जातो न कश्चित् पर्युपासते (भा० शां० ३६०।७)। **परित्यज्य अतिथिं न स्वकुल आस्त इत्याह।** एते मया महाघोराः सङ्ग्रामाः पर्युपासिताः (भा० वन० १७१।२०)। **पर्युपासिता उपस्थायानुभूताः।** सखि शकुन्तले, उचितं नः पर्युपासनमतिथीनाम् (शा० ४)। **पर्युपासनमुपस्थानं वरिवस्या शुश्रूषा।**

**—युज् (युजिर् योगे)।** तत्र चास्यागमकालेनैवायुः कृत्स्नं पर्युपयुक्तं स्यात् (भाष्ये पस्पशायाम्)। **पर्युपयुक्तं समाप्तम्।**

**—विश् (विश प्रवेशने)।** अधिषवणे पर्युपविशन्ति (का० श्रौ० ६।४।१)। **समीपे सर्वतः सीदन्तु इत्यर्थः।** अथ सप्तमं पदं पर्युपविशन्ति (श० ब्रा० ३।३।१।३)।

**—स्था (ष्ठा गतिनिवृत्तौ)।** ततः शुचिसमाचाराः पर्युपस्थानकोविदाः (रा० २।६५।७)। **पर्युपस्थानं परिचर्या।**

## परिनि (परि+नि)

**—अस् (असु क्षेपे)।** शयनीय-परिन्यस्त-गात्रः सन्तापवानभूत् (कथा० ६।१२१)। **शय्यायां दीर्घीकृताङ्गः प्रसारितगात्रः।**

**—धा (डुधाञ् धारणपोषणयोः)।** स एतामुत्तमां समुद्रवतीमपश्यत्। तयैनाः अच्छा समुद्रमिन्दव इत्येव समुद्रेण समन्तं परिण्यदधात् (जै० ब्रा० १।१०४)। **परिण्यदधात् परितो न्यधात् न्यास्थत्।** परिनिधाय (का० श्रौ० १८।६।१३)। **परिणिधायेति तूचितम्। विस्पष्टोऽर्थः।**

**—वृत् (वृतु वर्तने)।** क्लेशाः परिनिवर्तन्ते केषाञ्चिदसमीक्षिताः (        )। **परिनिवर्तन्ते ऽखिलेन निवर्तन्ते विनश्यन्ति।**

**—स्था (ष्ठा गतिनिवृत्तौ)।** एतावति हि शास्त्रकृत्यं परिनितिष्ठति (पदमञ्ज० पृ० ४)। **परिनितिष्ठति परिसमाप्यते पर्यवस्यति।** त्रयोदश समाः कालो ज्ञायतां परिनिष्ठितः (भा० वन०)। **परिनिष्ठितः परिसमाप्तः।** अपरिनिष्ठितस्योपदेशस्यान्याय्यं प्रदर्शनम् (माल० १)। इतिहासे महापुण्ये बुद्धिश्च परिनैष्ठिकी (भा० आदि० ६२।१७)। **परिनिष्ठा मोक्षः, तदुचिता।**

## परिनिर् (परि+निर्)

—वप् (टुवप बीजसन्ताने, बीजसन्तानो बीजविकरणम्) । आतिथ्यमेभ्यः परिनिर्विवप्सोः (भट्टि० ३।४२) । निपूर्वो वपिर्दाने वर्तते । निर्विवप्सुर्निर्वप्तुमिच्छुर्दित्सुः, तस्य ।

—वा (वा गतिगन्धनयोः) । शाम्यामि परि निर्वामि सुखं मामेति केवलम् (भा० शां० १७७।५०) । परिनिर्वामि निर्दुःखो भवामि, निर्वृणोमि । शाम्यामि परिनिर्वामि सुखमासे च केवलम् (यो० वा० ३।७५।३, ६(१) । १०२।१४) । उक्तोऽर्थः ।

## परिप्र (परि+प्र)

—आप् (आप्लृ व्याप्तौ) । पाञ्चालं परिप्रेप्सुर्धनञ्जयमदुद्रुवत् (भा० आदि० १३८।४५) । परिप्रेप्सुः परितस्त्रातुमिच्छुः ।

—ग्रह (ग्रह् उपादाने) । उभयतोऽध्वर्युं परिप्रगृह्णाति (का० श्रौ० ६।१३।११) ।

—या (या प्रापणे, प्रापणमिह गतिः) । यूयं हि देवीर्ऋतयुग्भिरश्वैः परि प्रयाथ भुवनानि सद्यः (ऋ० ४।५१।५) । परिप्रयाथ परिक्रामथ ।

—ब्रू (ब्रूञ् व्यक्तायां वाचि) । मा त्वाग्नयः परिप्र वोचन् (छां० उ० ४।१०।२) । मा परि प्रवोचन् मा परिवादिषुः, मा भूयो गर्हिषत, मा स्म निन्दिषुः, मा निराकार्षुः ।

## परिवि (परि+वि)

—धाव् (धावु गतिशुद्ध्योः) । परि सप्तिर्न वाजयुः… । व्यानशिः पवमानो विधावति (ऋ० ९।१०३।६) । परिविधावति परितः स्रवति । निष्पूतः सन् इतस्ततः पवते स्यन्दत इत्यर्थः । ततः शाखाः प्रशाखाश्च स्कन्धांश्चोत्तमशाखिनाम् । शीघ्रं विपरिधावन्त यदा प्राप्तुं न शक्नुयुः (रा० ५। ३०।२४) ॥ दृष्ट्वा च परिधावन्तं भवेयुः परिशङ्किता इति पाठान्तरम् । विपरिधाववन्तम् इतस्ततः प्लवमानम् ।

—श्वस् (श्वस प्राणने) । उवाच वचनं रामः परि विश्वासयंस्तदा (रा० २।३०।२६) । परिविश्वासयन् उज्जीवयन् ।

## परिव्या (परि+वि+आङ्)

—वृजि (वृजि वर्जने)। परि वः सैन्याद् वधाद् व्यावृञ्जन्तु धोषिण्यः (शां० गृ० ३।६)। **परिवृञ्जन्तु परिहरन्तु, परित्रायन्ताम्।**

## परिसम् (परि+सम्)

—आप् (आप्लृ व्याप्तौ)। सर्वं कर्माखिलं पार्थ ज्ञाने परिसमाप्यते (गीता ४।३३)। **परिसमाप्यते निःशेषं समाप्यते।**

—ऊह् (ऊह वितर्के)। समिद्धमग्निं पाणिना परिसमूहेन्न समूहन्या (आप० ध० १।१।४।१८)। **परिसमूहेत् संमृज्यात्।** अग्निमिद्ध्वा परि समूह्य समिध आदध्यात् (आप० ध० १।४।१६)। **परिसमूह्य परिसमुह्य विप्रकीर्णमग्निमेकीकृत्य।** प्रवणं देशं समं वा परिसमुह्य (गो० गृ० १।१।६)। **संमृज्य सर्वतः कुशैः पांस्वादिकमपसार्य। समूहनी संमार्जनी भवति।**

—क्रीड् (क्रीडृ विहारे)। सामात्यः सम्परिक्रीडन् कामस्य वशमागतः (रा० ४।३०।१६)। **सम्परिक्रीडन् प्रहसन्, नर्म सेवमानः। सामात्यपरिषत् क्रीडन् पानमेवोपसेवते इति पाठान्तरम्। इदं च ३०।७९ इत्यत्र दाक्षिणात्यकोशेषु द्रष्टव्यम्।**

—ख्या (चक्षिङः ख्याञ् आदेशः)। ननु गर्दभरशनां परिसंख्यास्यति। न शक्नोति परिसंख्यातुम्। परिसंचक्षाणो हि स्वार्थं च जह्यात्, परार्थं च कल्पयेत प्राप्तं च बाधेत (मी० १।२।४।३१ शा० भा०)। तत् सर्वं (वित्तं) परिसंख्याय ततो ब्राह्मणसात् करोत् (भा० द्रोण० ६३।३)। **परिसंख्याय गणयित्वा परिकलय्य। ब्राह्मण सात्करोदित्यत्राडभाव आर्षः।** दैविकानां युगानां तु सहस्रं परिसंख्यया (मनु० १।७२)। **परिसंख्या संख्या। परिरत्र विशेषकृन्न।** शरीरपरिसंख्यानं प्रवृत्तिष्वघदर्शनम् (याज्ञ० ३।१५८)। **शरीरपरिसंख्यानम्, अस्थिरत्वाशुचित्वादिदोषानुसन्धानम्।**

—चक्ष् (चक्षिङ् व्यक्तायां वाचि, छन्दसि दर्शनेपि)। सर्वेषामिन्द्रियाणां प्रसङ्गे परिसञ्चष्टे चक्षुषी नासिके श्रोत्रे चेति (आप० ध० १।१६।७ इत्यत्रोज्ज्वलायाम्)। तत्रैतान्याचार्याः परिसंचक्षते (गो० गृ० ३।५।२)। **परिसंख्यानं निषिद्धादन्यत्र विधानमिति सत्यव्रतः सामश्रमी।**

—तप् (तप सन्तापे)। अलं हि परिसन्तप्य (रा० ४।२५।११)। **तदलं परितापेनेति पाठान्तरम्।**

—पत् (पत्लृ गतौ) । मेधाभिकामा परिसंपतन्ती···बलाकपङ्क्तिः (रा० ४।२८।२३) । परिसंपतन्ती परितः संचरन्ती ।

## उप

—अञ्च् (अञ्चु गतिपूजनयोः, अचु इत्येके) । अञ्जलिना अप उपाचति (आश्व० श्रौ० ५।१६।१) । उपाचति उपाञ्चेति उदञ्चति, उद्धरति ।

—अज् (अज गतिक्षेपणयोः) । इन्द्र एणा नियच्छत्वग्निरेना उपाजतु (ऋ० १०।१६।२) । उपाजतु इतः प्रेरयतु, अर्वाक् प्रचोदयतु । पृश्निमेतामुपाजे (अथर्व० ५।११।२) । बृहस्पति विश्वरूपामुपाजत् (ऋ० १।१६१।६) । उपाजत् उपागमत् स्वीकृतवानित्यर्थः । विश्वरूपा नानारूपा । इह गौरुच्यते ।

—अञ्ज् (अञ्जू व्यक्तिम्रक्षणकान्तिगतिषु) । उपरिष्टादभ्यज्याधस्तादुपानक्ति (आप० श्रौ० २।३।११।४) । उपानक्ति म्रक्षयति उपलिम्पति उपदेग्धि । लेपेर्थे उपेन धातोः साहचर्यमितीदम्पर उपसर्गयोगोऽर्थे तु विशेषं न करोति । यथा ऽक्षो ऽनुपाक्तः (तै० सं० २।६।३।३) । अनुपाक्त उपाञ्जनरहितः । संमार्जनोपाञ्जनेन सेकेनोल्लेखनेन च । गवां च परिवासेन भूमिः शुध्यति पञ्चभिः (मनु० ५।१२४) ।। उपाञ्जनमुपलेपः ।

—अर्ज् (अर्ज प्रतियत्ने) । अथ वत्समुपार्जति (श० ब्रा० १४।२।१।६) । उपार्जति गामुपसप्तुमनुजानाति, गवा संसृज्यस्वेति दाम्न उत्सृजति ।

—अव् (अव रक्षणगतिकान्त्यादिषु) । पुत्रो न मातरा विचरन्नुपावसि (ऋ० १०।१४०।२) । उपावसि उपगतान् यजमानान् रक्षसीत्यर्थ इति सायणः । मित्रवदाचरसि उद्धर्षयसीति संस्कृतशार्मण्य कोषः । मातरा मातरौ मातृभूते अरण्यौ । सीसायाध्याह वरुणः सीसायाग्निरुपावति (अथर्व० १।१६।२) । स्वसमीपे स्थापयित्वा सततं रक्षतीत्यर्थं इति सायणः । अमुमन्यतेऽनुमत्या प्रोत्साहयतीत्यर्थ इत्यन्ये । शब्दमर्यादया तु नैष सुलभोऽर्थः, उपशब्दश्चापार्थक इति प्रसङ्गश्च ।

—अश् (अश भोजने, अशू व्याप्तौ) । कामादुपाश्नन्ति सहस्रशस्ते मुदान्विताः (रा० ६।१२४।१३) । उपाश्नन्ति उपभुञ्जते । उपशब्दो धात्वर्थस्य न बहूपकरोति । अनव्यवहितं यो वा नेदं वाक्यमुपाश्नुते (भा० शां० १४२। २४) । उपाश्नुतेऽङ्गी करोति ।

—अस् (असु क्षेपे)। अथ फलीकरणान्कपालेनाधोऽधः कृष्णाजिनमुपास्यति (श० ब्रा० १।६।२।३३)। **उपास्यति निक्षिपति निधत्ते। फलीकरणास्तण्डुलतुषाः।** अथ रुक्ममधस्तादुपास्यति (श० ब्रा० ५।४।१।१२)। **उक्तोऽर्थः।** अधान्यतस्तृणम्। पुरस्तादुद्गातृणामुपास्यति (श० ब्रा० ४।२।५।६)। **समीपे निक्षिपति।** अथो यद्यपि स्याद् उपैवान्यदस्येत्, अत्यन्यदस्येत् (जै० ब्रा० १।८६)। अमृतमसि मृत्यो र्मा पाहीति हिरण्यमुपास्यति (तै० ब्रा० १।७।८)। **उक्तोऽर्थः।** यदि सर्वमौपासनमाहरेदपूपं यवमयं व्रीहिमयं चौदुम्बरपर्णाभ्यां संगृह्यायतन उपास्येत् (आप० श्रौ० ५।१।४।१४)। **उपास्येत् क्षिपेत्।** श्रूयते तलनिर्घोष इष्वस्त्राणामुपासने (रा० २।६७।२१)। **उपासनमभ्यासः। स्यादुपासनमभ्यास** इत्यमरः।

—अस् (अस भुवि)। ये अन्तरिक्षे य उप द्यवि ष्ठ (ऋ० ६।५२।१३)। **उपष्ठ उपस्थ उपस्थिता भवथ।** बृहन्मित्रस्य वरुणस्य शर्मोप स्याम पुरुवीरा अरिष्टाः (ऋ० २।२७।७)। **उपस्याम उपगताः स्याम, समीपे भवेम।**

—आप् (आप्लृ व्याप्तौ)। य एवं विद्वानग्निहोत्रं जुहोति यावदग्निष्टोमेनोपाप्नोति तावदुपाप्नोति (तै० सं० १।६।६।१)। **उपाप्नोति प्राप्नोति।** यस्मै कामाय निरुप्यन्ते तमेवाभिरुपाप्नोति (तै० सं० ३।४।१०।३५)। एतन्मिथुनमुपाप्नवानि (श० ब्रा० ११।३।२।१)। **उदितचर एवार्थः।** तां नाम्नोपैप्सन् (मै० सं० २।१।११)। **उपैप्सन् अनुकूलयितुमभिमुखीकर्तुमावर्जयितुमैच्छन्नित्याह। अयमेवार्थ उत्तरत्र तां देवा एतेन यजुषा वृञ्जतेतिश्रवणात्।** ब्राह्मणान् भक्तेनोपेप्सन्ति (कौ० सू० १४०।२१)। अथ ब्राह्मणान् भक्तेनोपेप्सेत् (गो० गृ० १।६।५)। **तर्पयितुमिच्छेदिति टीकाकारः।** मङ्गलोपेप्सया नान्नामेव परिहाराय (श० वा० १३।८।१।१६)। **उपेप्सा प्राप्तीच्छा।** तदुपाप्तो विहारे कामः (ऐ० ब्रा० ६।२४)। **उपाप्तः प्राप्तः।** तेन हैवास्य स काम उपाप्तो यः…(सत्या० श्रौ० २३।२।४६)। सर्वेषां ह्यस्य वनस्पतीनां काम उपाप्तो भवति (ऐ० ब्रा० २।१।१)। **सर्वत्र प्राप्त इत्येवार्थः।** आग्नेयीरन्वाह। अग्निरूपाणामुपाप्त्यै कामवतीः कामानामुपाप्त्यै (श० ब्रा० ७।३।२।६)। **उपाप्तिः प्राप्तिः।** एतानि सह दुरुपापानि कैः तेषामुपाप्तिः (श० ब्रा० १०।१।२।६)। **दुरुपापानि दुष्प्रापानि दुरापाणि।**

—आस् (आस उपवेशने)। तदुदकुम्भे उपनिहितो भवति तद् ब्राह्मण उपास्ते (श० ब्रा० ३।३।२।५)। **उपास्ते समीप आस्त आसीदति उपविशति।** यदेव सायं प्रातर्हवनीयम् उप च तिष्ठत उप चास्ते (श० ब्रा० २।३।२।४)। **उक्तोऽर्थः।** तस्मादुपर्यासीनं क्षत्रियमधस्तादिमाः प्रजा उपासते (श० ब्रा०

१।३।४।१५)। **परायत्ता इति शुश्रूषव इति चाधोऽन्तिके तिष्ठन्तीत्याह।** तं घेमित्था नमस्विन उप स्वराजमासते (ऋ० १।३६।७)। **उपासतेऽर्चन्ति।** उपैतमाध्वं सुमनस्यमाना: (ऋ० ७।३३।१४)। **हे प्रतृद: तृत्सव एनं वसिष्ठमर्चत तत्र सादरा भवतेत्याह।** उपासते सुतं जातं शकुन्ता इव पिप्पलम् (व० धर्म० ११।३९)। **उपासते संश्रयन्ते, उपजीवन्ति।** अशक्ता: पौरुषं कर्तुं क्लीबा दैवमुपासते (शुक्र० १।४८)। **दिष्टं श्रयन्ते।** यथा श्रेयस्यागमिष्यावसथेनोपक्लृप्तेनोपासीत (श० ब्रा० २।३।१।८)। **उपासीत सत्कुर्यात्, संभावयेत्।** सुखं वा यदि वा दु:खं प्रियं वा यदि वाप्रियम्। प्राप्तं प्राप्तमुपासीतं हृदयेनापराजित:(भा० शां० २५।२६)॥ **उपासीत सेवेत अनुभवेत्।** उपासते ये गृहस्था: परपाकमबुद्धय: (मनु० ३।१०४)। **उपासते सेवन्ते।** सोम एकेभ्य: पवते घृतमेक उपासते (ऋ० १०।१५४।१)। **उपासत उपभुञ्जते।** विरोचनं सम्यगुपास्यताम् (सुश्रुत० २।१८७।१९)। **उपास्यताम् प्रयुज्यताम्, उपयुज्यताम्।** सर्वे स्वं भाग्यमुपासते (रा० २।२७।३)। **उक्तोऽर्थ:।** तस्मिंश्च लौकिके सानुबन्धकानां प्रयोगो नास्तीति कृत्वा द्वितीय: प्रयोग उपास्यते (पा० १।१।२१ सूत्रे भाष्ये)। **उपास्यत आश्रीयते।** उप ह वै ता (देवता:) आसते (श० ब्रा० १।९।२।२७)। **उपासते प्रतीक्षन्ते।** न श्व: श्वमुपासीत को हि मनुष्यस्य श्वो वेद (श० ब्रा० २।१।३।९)। **उक्तोऽर्थ:।** क्षमां कुर्वन्कालमुपासते य: (भा० वन० ५।१९)। **उपासते उपास्ते प्रतीक्षते।** ये चार्वतो मांसभिक्षामुपासते (ऋ० १।१६२।१२)। **उपासते काङ्क्षन्ति।** उपासते प्रशिषं यस्य देवा: (ऋ० १०।१२१।२)। **उपासते प्रार्थयन्ते।** देवा भागं यथा पूर्वे सञ्जानाना उपासते (ऋ० १०।१९१।२)। **उपासते स्वीकुर्वन्ति। भागं हविर्लक्षणम्।** तदलं परितापेन प्राप्तकालमुपास्यताम् (रा० ४।२५।११)। **उपास्यतामनुष्ठीयताम्।** यदहोपासते तेनेमां मानुषीं पुरं जयन्ति (श० ब्रा० ३।४।४।४)। **उपासत उपसीदन्ति वेष्टयन्ति।** वशामेवामृतमाहुर्वशां मृत्युमुपासते (अथर्व० १०।१०।२६)। **उपासते मन्यन्ते, जानन्ति, चिन्तयन्ति।** तन्मा नावमुपकल्प्योप:सासै (श० ब्रा० १।८।१।४)। **मामुपासासै मामवेक्षस्व, मामनुसरेति यावत्।** जाग्रद्धैवाध्वर्युरुपासीत (श० ब्रा० ३।९।३।११)। **उपासीत=अवतिष्ठेत।** मां ध्यायन्त उपासते (गीता० १२।६)। **उक्तोर्थ:।** चिराच्च पाकं वयस: करोति संशोधनं सम्यगुपास्यमानम् (अष्टाङ्ग० सूत्र० १८।६०)। **उपास्यमानं सेव्यमानम्।** इति पुत्रगतां चिन्तामुपासीनस्य भूपते: (बृ० श्लो० सं० ४।४७)। **उपासीनस्य संश्रितवत आस्थितवत:।** ऐन्द्रं स्थानमुपासीना: (मनु० ५।९३)। **उपासीना: प्राप्ता:।** न त्वयोपासिता वृद्धा: (भा०)। **युधिष्ठिरस्य भीमं प्रत्युक्ति:। नोपासिता न**

**सेविता न परिचरिता न विनीतवदुपेताः।** उपास्य रात्रिशेषं तु शोणकूले महर्षिभिः (रा० १।३५।१)। **उपास्य अवस्थाय उषित्वा।** कांचिद् वेलामुपास्यैव (बृ० श्लो० ५।२६६)। **उपास्य प्रतिपाल्य प्रतीक्ष्य।** शास्त्रं गुरुमुखोदीर्णमादायोपास्य चासकृत् (सुश्रुत० १।१४।११)। **उपास्य अभ्यस्य।** न कालादुत्तरं किं चित्कर्म शक्यमुपासितुम् (रा० ४।२५।३)। **उपासितुमनुष्ठातुम्।** दुःसहानि तु दुःखानि मया निन्दितभाग्यया। अनुभूतानि तेनाहं शक्ता दुःखमुपासितुम् (बृ० श्लो० सं० ५।१४)। **उपासितुं सोढुम्।** अलं ते पाण्डुपुत्राणां भक्त्या क्लेशमुपासितुम् (भा०)। **उपासितुम् उपभोक्तुम्। ल्यबर्थे तुमुन्।** आसनावसथौ शय्यामनुव्रज्यामुपासनम् (मनु० ३।१०७)। **उपासनं परिचर्या।** आचार्योपासनं वेदशास्त्रार्थेषु विवेकिता (याज्ञ० ३।१५६)। **उक्तोऽर्थः।** व्रण्युपासनम् (सुश्रुत० १।८।११)। **उपासनं सेवा।** तद्ध तद्वनं तद्वनमित्युपासितव्यम् (केनोप० ४।३)। **उपासितव्यं मन्तव्यं चिन्तयितव्यम्।** उपासिता ब्राह्मणानाम् (रा० ५।३२।६)। **उपासिता मानयिता संमानयिता पूजकः।**

—**इ (इण् गतौ)।** मिथो निघ्नाना उपयन्तु मृत्युम् (अथर्व० ८।८।२१)। **उपयन्तु प्राप्नुवन्तु। प्राप्तुमर्हन्तीत्यर्थः।** समन्या यन्त्युप यन्त्यन्याः (नद्यः) (ऋ० २।३५।३)। **उपयन्ति उपगच्छन्ति।** को विद्वांसमुप गात् प्रष्टुमेतत् (ऋ० १।१६४।४)। **उपगात्=उपागात् उपासीदत्।** मा मृत्योरुप गा वशम् (अथर्व०१९।७।२८)। तं वृक्षा अपसेधन्ति छायां नो मोपगा इति (अथर्व० ५।१९।६)। **मोपसृप इत्यर्थः।** तेन रोहमायन्नुप मेध्यासः (काण्वसं० १४।५)। **सामीप्येन प्राप्ताः। विलम्बमन्तरेण प्राप्ता इत्यर्थ इति सायणः।** यथा हि मे वचः कर्ण नोपैति हृदयं तव (भा० उ० १४३।४६)। **नोपैति नाभ्युपैति नाङ्गीकरोति।** पुरुषमेव स्वामिनं चित्तस्य भोक्तारमुपयन्ति (यो० सू० ४।२१ भाष्ये)। पारमार्थिकमेव बुद्धिचैतन्ययोः कस्मादैक्यं नोपेयते (यो० सू० २।२० वैशारद्याम्)। **उक्तोऽर्थः।** इदमहमनृतात् सत्यमुपैमि (वा० सं० २।५)। **सत्यं श्रयामीत्याह।** उप त्वायानि (बृह० उ० २।१।१४)। **शिष्य इत्युपसीदानि, शिष्यभावेनोपायानि।** नाग्निं चित्वा रामामुपेयात् (तै० सं० ५।६।८।३)। अग्निं चित्वा न रामामुपेयात्। रामा रमणायोपेयते न धर्माय (नि० १२।१३)। **उपेयात् संविशेत्, व्यवायं चरेत्, संभवेत्।** न मांसमश्नीयात्। न स्त्रियमुपेयात् (तै० ब्रा० १।१।९।७)। **उक्तोऽर्थः।** वाचयश्चानुपयन्पतिः (मनु० ६।४)। **अनुपयन् असंविशन्, मैथुनमनाचरन्, असंभवन्।** उपयन्नपयन्धर्मो विकरोति हि धर्मिणम् इति न्यायः। **उपयन् आगच्छन्।**

**अपयन् अपगच्छन्** । देवं हि मानुषोपेतं भृशं सिध्यति । **मानुषोपेतं पौरुषेण सहचरितम्** । यद्युपेतो भूमिजोषणादि समानमाहिताग्नेरोदकान्तस्य गमनात् (पा० गृ० ३।१०।१०) । **उपेत उपनीतः । गुरुं शिष्य इति प्रपन्न इत्यक्षरार्थः** । उपेतः स्त्रीणामनुपेतस्य चोच्छिष्टं वर्जयेत् (आप० ध० २।६।७)। **उक्तोऽर्थः** । भवा नो अग्ने सुमना उपेतौ (ऋ० ३।१८।१) । **उपेतिः प्राप्तिः । उपस्थितिः सान्निध्यम्** । का त उपेतिर्मनसो वराय (ऋ० १।७६।१) । **उपेतिरुपगमनम् । तवोचितमुपगमनम् इत्यर्थः** । उपायन उपसां गोमतीनाम् (ऋ० २।२८।२) । **उपायनमुपागमनम्** । अथोपायनमुपग्राह्यमुपहारस्तथोपदेत्यमरः । **उपायनमुपढौकनम्** । स ह्योपायनकीर्ताऽ उवास (श० ब्रा० १४।६।१।११) । **उपायनकीर्तिः=शिष्यभावेनोपैमीति संशब्दनम्** । अशूद्राणामदुष्टकर्मणामुपायनम् (आप० ध० १।१।१।६) । **उपायनमुपनयनम्** । अत्र वा व्रतोपायनम् (का० श्रौ० २।२।५) । **व्रतोपायनं व्रतग्रहणम् । अन्यत्राप्यस्मिन्सूत्रे** ६।२।४ **इत्यत्र व्रतोपायनमित्येतदर्थकः प्रयोगः** । उपायाः शिक्षमाणानां बालानामुपलालनाः (वा० प० २।२३८) । अथाग्नेरुपायि ह्येतत्कर्म यदग्निकर्म (श० ब्रा० ६।६।१।४) । **उपायि सहयोगि । सहचारि** । अनित्या गुणा अपायिन उपायिनश्च (भाष्ये) । **आगमोपायिन इति समुदितोर्थः** । सवर्णोपायी (का० श्रौ० १८।६।२६) । **सवर्णामुपैति संविशति न शूद्रामित्यर्थः** । एकोऽधः प्राङ्शायी मध्वाश्यृतुजायोपायी (का० श्रौ० ५।२।२१) । **उक्तोऽर्थः** । उपेतारमुपेयं च सर्वोपायांश्च कृत्स्नशः । एतत् त्रयं समाश्रित्य प्रयतेतार्थसिद्धये (मनु० ७।२१५) ॥ **उपेतारमात्मानम्, उपेयं प्राप्तव्यम् इति मेधातिथिः कुल्लूकश्च । संस्कृतशार्मण्यकोषे त्वन्यथाऽर्थापितम् । यः शत्रूयमाणः तर्जयमान उपैति स उपेतेत्युक्तम्** । वायवः स्थोपायवः स्थ (तै० सं० १।१।१) । **उपायव आगन्त्र्यो दोहनकाले** ।

— **ईक्ष्** (**ईक्ष दर्शने**) । किमुपैक्षिष्ठाः (श० ब्रा० ११।५।३।३) । **गार्हपत्यमग्निं किमैक्षिष्ठा इत्याह । इहोपसर्गो धात्वर्थानुवादी, नार्थेऽन्तरं करोति** । दमयन्त्यपि कल्याणी प्रासादस्था ह्युपैक्षत (भा० वन० ७४।५) । **साध्वपश्यदित्यर्थः** । तत्र यत् प्रीतिसंयुक्तं काये मनसि वा भवेत् । वर्तते सात्त्विको भाव इत्युपेक्षेत तत्तथा (भा० शां० २०५।२६) ॥ **उपेक्षेत उपेत्य ईक्षेत सम्यग्जानीयात्** । अथापिधायाक्षिणी उपेक्षेत तद्यथा बटरकाणि संपतन्तीव दृश्यन्ते (ऐ० ब्रा० ३।२।४) । **उपेक्षेत नेत्रसमीपं पश्येत्** । देवा वै पशून् व्ययजन्त ते रुद्रमन्तरायंस्तान् वामदेव्यस्य स्तोत्र उपेक्षते (पञ्च० ब्रा० ७।६।१३) । **उपेक्षत उपेत्य पश्यति (हन्तुकामो रुद्रः)** । नोपेक्षेत क्षणमपि राजा

साहसिकं नरम् (मनु० ८।३४४)। **नोपेक्षेत न तत्रोदासीत, न तस्मिन्प्रमाद्येत्। न तमवगणयेत्, न तत्रानादरः स्यात्।** यो मां विप्रकृतां क्षुद्रै रुपेक्षध्वम् (भा० वन० १२।२६)। **उपेक्षध्वमुपेक्षध्वे उदाध्वे मयि।** चारेण च सुप्रयुक्तेन शत्रोः शक्ति व्यपेक्षया। गूढेन चरता तत्त्वमुपेक्षितमिदं मया (रा० ५।३०।४)॥ **उपेक्षितमुपलब्धमन्विष्य विज्ञातम्।** शत्रोः शक्तिमवेक्षता।··· तावदवेक्षितमिदं मयेति पाठान्तरम्। तं ह पितोपेक्ष्योवाच (श० ब्रा० १२।२।१।६)। **उपेक्ष्य=विलोक्य अभिवीक्ष्य, तत्र पुत्रे विलोचने व्यापार्य।** न हि शक्ष्यामि कौरव्यान्नश्यमानानुपेक्षितुम् (भा० उ० १५७।३४)। **उपेक्षितुमुपद्रष्टुम्। अयमेवार्थ इति तस्माद् यास्यामि तीर्थानि सरस्वत्या निषेवितुम् इत्युत्तरार्धान्निश्चीयते।** तस्मादेतदुपेक्ष्यतममित्याहुः (ऐ० ब्रा० ३।२)। **एतत् प्रउगशस्त्रम्। अतिशयेनोप समीपे ईक्षणीयमादरणीयमित्यर्थ इति सायणः।** एवम् उच्चावचेष्वर्थेषु निपतन्ति त उपेक्षितव्याः (नि० १।११।३)। **उपेत्य ष्टव्याः। सम्यक् परीक्षणीयाः।** तदल्पमपि नोपेक्ष्यं काव्ये दुष्टं कदाचन काव्यादर्शे १।७)। **उपेक्ष्यमसूक्ष्यम्, अनादरणीयम्।** उपेक्षा ब्रह्मचर्यं च रित्यागश्च सर्वशः (भा० आश्व० ३८।८)। **उपेक्षा औदासीन्यम्।**

**—उक्ष् (उक्ष सेचने)।** आपो देवीरित्यधस्तादुपोक्षति (का० श्रौ० ६। ३।२९)। **उपोक्षति प्रोक्षति।**

**—उन्द् (उन्दी क्लेदने)।** आप उन्दन्तु ते तनुं दीर्घायुत्वाय वर्चसे (इत्युपोद्य (आप० श्रौ० ८।१।४।१)। **उपोद्य आर्द्रीकृत्य क्लेदयित्वा।**

**—ऊह् (ऊह वितर्के)।** ताः कुसिन्धमुपौहन् (तै० ब्रा० २।३।६।१)। **उपौहन् प्राप्नुवन्। कुसिन्धं शिरोव्यतिरिक्तं देहम्।** चतुर्धा बह्मौदनं व्युद्धृत्य सर्पिषोपसिच्य···ऋत्विग्भ्य उपोहति (आप० श्रौ० ५।१।५।६)। **उपोहति समर्पयति प्रापयति प्रयच्छति।** तमाज्येन सन्तार्य ध्रुवाया उपोहति (आप० श्रौ० ३।१।१।१०)। **ध्रुवायाः समीपं गमयतीत्यर्थः।** साक्षादिव व्यवहितं शब्देनार्थमुपोहते (वा० प० २।२१५)। **उपोहते समर्पयति।** पश्चाच्छम्यामुपोहति (का० श्रौ० २।५।४)। **(दृषदो) ऽधस्तात्प्रवेशयतीत्यर्थः।** उपोह्यन्ते स्वरा येन यस्माद् गीतं प्रवर्तते। तस्मादुपोहनं प्रोक्तं शुष्काक्षरसमन्वितम् (ना० शा० ३१।१२५)॥ उपोह्यमाने द्यूते (भा० सभा० २०५१)। **उपोह्यमाने प्रक्रम्यमाणे प्रारभ्यमाणे।** उपोह्य रुचिरां नावम् (रा० २।५२।६)। **उपोह्य इतः प्रेर्य।** महद् धनुः सज्जमुपोह्य लक्ष्मणः (रा० २।८७।२३)।

उपोढशब्दा न रथाङ्गनेमयः (शा० ७।१०) । **उपोढो जातः** । उपोहश्च समूहश्च क्षत्तारौ ते प्रजापते (अथर्व० ३।२४।७) । **उप समीपम् ऊहति प्रापयति धान्यादिक मित्युपोहः । एतत्संज्ञको देव इति सायणः ।**

—**ऋ (ऋ गतिप्रापणयोः)** । मोष्वन्याँ उपारतम् (ऋ० ८।५।१३) । **मोपारतं मोपगमतम्** । युवं शिञ्जारमुशना उपारथुः (ऋ० १०।४०।७) । **अभ्युपपत्तुकामावुपससृपथुः** । यदाशसा निःशसाऽभिशसोपारिम जाग्रतो यत्स्वपन्तः (ऋ० १०।१६४।३) । **उपारिम प्रामदाम, अस्खालिष्म** । यदस्मृति चकृम किञ्चिदग्न उपारिम चरणे जातवेदः (अथर्व० ७।१०६।१) । **उपार्तं लुप्तमकार्ष्म । यत्कर्मानुष्ठाने मूढा अभूमेत्यर्थः** । मोपाराम जिह्वयेयमानम् (रुद्रम्) (अथर्व० ११।२।१७) । **मोपाराम मा उपगच्छाम इति सायणः । मा विरुधाम मा तं रुद्रं पर्यवस्थिष्महि इति केचित् साम्प्रतिकाः ।**

—**ऋच्छ** (ऋच्छ गतीन्द्रियप्रलयमूर्तिभावेषु) । स इन्न्वै तमपार्च्छति (तै० सं० १।५।९।६)। **उपार्च्छति उपरुध्य पीडयति ।**

—**ऋध् (ऋधु वृद्धौ)** । तस्मादेतत् क्षत्रिय एव नक्षत्रमुपेर्त्सेत् (श० ब्रा० २।१।२।१७) । **अस्मिन्नेव नक्षत्रे (चित्रायाम्) ऽग्न्याधानमिच्छेन्निर्वर्तयितुमित्याह । उपपूर्वादृधेः सन्नन्ताल्लिङि रूपम् इडभावपक्षे ।**

—**ऋष् (ऋष गतौ)** । अथ दक्षिणा युग्यमुपार्षति (श० ब्रा० ५।४।३।८) । **उपार्षति प्राजति ।**

—**एष् (एषृ गतौ)**। पराङ् मित्र एषत्वर्वाची गौरुपेषतु (अथर्व० ६।६७।३)। **उपेषतु उपेषतामुपैतु** । उपेषन्तमुदुम्बलम् (अथर्व० ।८।६।१७) । **छद्मनोपयन्तम्, त्सरन्तम् । सायणस्तु सर्वत इच्छन्तम् । गर्भिणी कुत्रास्त इत्यन्विष्यन्तम् इत्याह ।**

—**कूज् (कूज अव्यक्ते शब्दे)** । चक्रवाकोपकूजिताम् (ह्रदिनीम्) (भा० वन० २५१२) । **चक्रवाकविरुताकुलामित्याह ।**

—**कृ (डुकृञ् करणे)** । अल्पं वा बहु वा यस्य श्रुतस्योपकरोति यः । तमपीह गुरुं विद्याच्छ्रुतोपक्रियया तया (मनु० २।१४९) ।। **श्रुतस्योपकरोति श्रुते प्रकर्षं करोति, श्रुतमुपबृंहयति** । उपैनामितः कुर्वीमहि (श० ब्रा० ११।१।६।२१)। **एनां प्राचीं दिशमुपकुर्वीमहि वर्धयेम सबलां कुर्याम श्रेयसीं चरेम ।**

धृष्टद्युम्नं तु पाञ्चाल्यमानीय स्वं निवेशनम् । उपाकरोदस्त्रहेतोः (भा० आदि० ६४०८) । **उपाकरोत् समवर्धयत्** । न पूर्वं गुरवे किञ्चिदुपकुर्वीत धर्मवित् (मनु० २।२४५) । **नोपकुर्वीत न दद्यात्** । हरिमुपकरुते (१।३।३२ सूत्रे कौमुद्यां दीक्षितः) । **उपकुरुते सेवते** । ते (भृत्याः) प्राणैरप्युपकुर्वते (पञ्चत० १।९५) । **उक्तोऽर्थः** । सा लक्ष्मीरुपकुरुते यया परेषाम् (कि० ७।२८) । **उपकुरुते साहाय्यमाचरति** । उप ते गा इवाकरं वृणीष्व दुहितर्दिवः (ऋ० १०।१२७।८) । **उपाकरमुपेत्य त्वां स्तुतिभिरभिमुखी करोमीत्याह** । गायत्रस्तूपकुर्वाणः (गौ० ध० १०।११) । उपकुर्वाणो ब्रह्मचारी यो गृहस्थो बुभूषति । एधो दकस्योपस्कुरुते (६।१।१३९ सूत्रे वृत्ती) । **एध उदके गुणान्तरमौष्ण्यमाधत्ते इत्यर्थः** । **कन्यामुपस्कुरुते** । **अलं करोतीत्यर्थः** । **उपस्कुर्वन्ति ब्राह्मणाः समवयन्तीत्यर्थः** । अत्रानुक्तं स्मृत्यन्तरवशादुपस्क्रियते (आप० ध० १।१६।२ इत्यत्र उज्ज्वलायां हरदत्तः) । **उपस्क्रियतेऽध्याह्रियते** । क्रीत्वा स्वयं वाप्युत्पाद्य परोपकृतमेव वा (मनु० ५।३२) । **परोपकृतं परेण दत्तम्** । गता नाशं तारा उपकृतमसाधाविव जने (५।२५ मृच्छ०) । **उपकृतमुपकारोऽनुग्रहः** । यन्ममोपकृतं शक्यं प्रतिकर्तुं न तन्मया (रा० ४।३२।८) । **उक्तोऽर्थः** । उपस्कृतं ब्रूते । **साध्याहारमाह** । सितातपत्रव्यजनैरुपस्कृतः (भा० पु० १।११।२७) । **उपस्कृतोऽलङ्कृतः** । उपस्कृता ब्राह्मणाः । **समुदिताः समवेता इत्यर्थः** । सम्पीड्यात्मानमार्यत्वात्त्वया कश्चिदुपस्कृतः (भा० अनु० १२४।१४) । **उपस्कृतो गुणान्तरं प्रापितः, उन्नमितः** । अकृत्रिममसंहार्यं प्राकृतं निरुपस्कृतम् । अध्यात्मं सुकृतम्···(भा० शां० २१५।१६) ।। **निरुपस्कृतं गुणाधानमलापकर्षणसंस्काररहीनम्** । एषोऽनुपस्कृतः प्रोक्तो योधधर्मः सनातनः (मनु० ७।९८) । **अनुपस्कृतोऽविकृतोऽविगर्हितः** । मांसं यच्चानुपस्कृतम् (मनु० ३।२५७) । **अनुपस्कृतमविकृतम्** । **पूतिगन्धादिरहितम्** । न हीदानी सहाया मे परीप्सन्त्यनुपस्कृताः (भा० द्रोण० १५०।२९) । तस्मात् सर्वधर्ममास्थाय सुव्रताः सत्यवादिनः । लोकस्य गुरवो भूत्वा ते भवन्त्यनुपस्कृताः (भा० शां० ११।२५) ।। **अनुपस्कृता निःसंशया इति नीलकण्ठः** । **शब्दमर्यादयायमर्थः कथं लभ्यत इति न सुज्ञानम्** । अनुपस्कृता रतिः । **अकृत्रिमेत्यर्थः** । शास्त्रोपस्कृतशब्दसुन्दरगिरः (कवयः) (भर्तृ० २।१२) । **उपस्कृताः संस्कृताः** । राजतं चानुपस्कृतम् (मनु० ५।११२) (अद्भिरेव शुध्यति) । **अनुपस्कृतं रेखादिगुणान्तराधानरहितमिति कुल्लूकः** । प्रादेशमात्रं भूमेस्तु यो दद्यादनुपस्कृतम् (भा० अनु० ३३३५) । **अनुपस्कृतं कण्टकगुल्माद्यपहारेण समीकरणेन च यन्न प्रसाधितम्** । आभिषेचनिकं चैव सर्वमेतदुपस्कृतम् (रा० ) । **उपस्कृतं सज्जीकृतम्** । सत्योऽयं प्रतितर्को मे परेण त्वमुपस्कृतः (रा०

६।१०४।७) । **उपस्कृत उत्कोचादिना विकारं प्रापित इति तिलकः ।** ब्राह्मणार्थे गवार्थे च देहत्यागोऽनुपस्कृतः (मनु० १०। ६२)। **अनुपस्कृतः प्रयोजननिरपेक्षः । निष्कारणः ।** शक्तिश्चेच्छयनं दद्यात्सर्वोपस्करसंयुतम् (मात्स्य पु० ६६। १८) । **उपस्करो गृहोपकरणम् ।** रमणीयाश्च ये केचित् क्रीडार्थाश्चाप्युपस्कराः (रा० २।३०।४४) । **क्रीडार्था उपस्कराः स्वर्णमयपुत्रिकाद्युपकरणानीति तिलकः ।** जातरूपमयादिपुत्रिका भोजनोपस्करैः सह (भा० अनु० ५३।२२) । **उपस्करो व्यञ्जनम् ।** सश्रवणचित्रकृत्तिकोपस्करवाहिभिः पार्पर्द्धिकपरिजनैः (नलचम्पवाम् १) । **उपस्करो मृगयोपयोगि साधनम्, समूहश्च ।** मङ्गलालम्भनीयानि प्राशनीयान्युपस्करान् । उपानिन्युः··· (रा० २।६५।६) ।। **उपस्करा दर्पणवस्त्राभरणादयः ।** अद्य स्त्रिय उपरता इति मन्य इत्युपस्कार्यम् (रा० २।८६।१४) इत्यत्र गोविन्दराजो भूषणे । **उपस्कार्यमध्याहार्यम् ।** उपस्करो रथस्यासन्नापः सर्वाश्च निम्नगाः (भा० कर्ण० ३४।२४) । **उपस्करो बन्धादिसामग्रीति नीलकण्ठः ।** उपस्करैरधिष्ठानैः (भा० द्रोण० १४८। ४२) । सूपस्करेषु शुभ्रेषु महत्सु च महारथाः (भा० वि० ३१।१७) । **उपस्करो रथाङ्गं चक्रम् ।** पञ्च सूना गृहस्थस्य चुल्ली पेषण्युपस्करः (मनु० ३। ६८) । **उपस्करो गृहोपकरणं कुशसंमार्जन्यादि ।** वेदोपकरणे चैव स्वाध्याये चैव नैत्यके (मनु० २।१०५) । **वेदोपकरणे वेदाङ्गे ।** भोजनान्यथ पानानि सर्वोपकरणानि च (भा० वन० १०३८) । **उपकरणानि उपेयोपायाः ।** पुरुषः प्रधानं तस्योपकरणमन्यत् । (सुश्रुत० १।४।५) । **उपकरणमङ्गभावं गतं साधनम् ।** वीतंसस्तूपकरणं बन्धने मृगपक्षिणाम् (अमरः) । **उपकरणं करणं साधनम् ।** स्वायत्तसिद्धे राज्ञो हि प्रजोपकरणं मता (कथा० १५।५८) । **उपकरणं परिच्छदः ।** कर्मोपकरणाः शूद्राः शिल्पिन कारवस्तथा (मनु० १०।१२०) । **कर्मणैव स्वव्यवसायेनैवोपकुर्वन्ति सेवन्त इति कर्मोपकरणाः ।** सौधोऽस्त्री राजसदनमुपकार्योपकारिका (अमरः) । **उपकार्येति चोपकारिकेति चोभे राजसदनस्य पटमण्डपस्य नामधेये ।** पुन्नागनागकरवीरकृतोपकारे तस्मिन्गृहे (सुश्रुत०) । **उपकारः संस्कारो ऽलङ्कारः ।** सर्वोपि जनो विरूपकरणे समर्थो भवति नोपकरणे (पञ्चत०) । **उपकरणं साधूकरणं समाधानम् । अनुग्रह इति संस्कृतशार्मण्यकोषः । सोऽयं प्रकरणविरुद्धः, अनन्तरपूर्वं विरूपकरण इति श्रवणात् ।**

**—कृत् (कृती छेदने) ।** अपृष्ट्वा बुद्धिसम्पन्नान् वैद्यान्वानरचापलात् । यत्किञ्चनप्रलापी त्वं वाक्शरैरुपकृन्तसि (रा० ४।१८।५)।। **उपकृन्तसि तुदसि विध्यसि । निर्णयसागरमुद्रिते पुस्तके वाक्शरैरुपकृन्तसीति नास्ति ।**

—कृष् (कृष विलेखने)। उत्सादयति लोकांस्त्रीन् स्त्रियश्चाप्युपकर्षति (रा० १।१९।७)। **उपकर्षति बलादात्मसमीपं प्रापयति।** पाण्युपकर्षं पाणिनोपकर्षं धानाः संगृह्णाति (पा० ३।४।४९ सूत्रे वृत्तौ)। **पाणिना संनिकृष्येत्यर्थः।** चक्रे विसृष्टमजयेश्वर षोडशारे निष्पीड्यमानमुपकर्ष विभो प्रपन्नम् (भा० पु० ७।९।२२)॥ **उपकर्ष उद्धृत्यात्मसमीपं प्रापयेत्यर्थः।**

—कॄ (कॄ विक्षेपे)। नोपकिरन्त्युत्तरवेदिम् (श० ब्रा० २।५।१।१८)। **उत्खाय न कुर्वन्ति।** तमाखूत्कर उपकिरति (श० ब्रा० २।७।२।१०)। **उपकिरति निक्षिपति, उपक्षिपति।** तेषां वा अर्धान् उपकिरन्ति (रा० ब्रा० ३।६।२।२२)। **उपकिरन्ति मृदोपचिन्वन्ति।** अथोत्तरतः सिकता उपकीर्णा भवन्ति (श० ब्रा० १४।१।३।१४)। **उपकीर्णाः समीपे कीर्णाः।** रत्नोपकीर्णां वसुधाम् (भा० अनु० ३१६२)। **रत्नोपकीर्णां रत्नाचिताम्।** उपस्कीर्णं हन्त ते वृषल भूयात् (पा० ६।१।१४१ सूत्रे वृत्तौ। **हे वृषल तथा ते विक्षेपोऽस्तु यथा हिंसामनुबध्नीयादित्यर्थः।** उपस्कारं काश्मीरका लुनन्ति (पा० ६।१।१४० सूत्रे वृत्तौ)। **विक्षिप्य लुनन्तीत्यर्थः।**

—क्लृप् (कृपू सामर्थ्ये)। सर्वत्रातिकृतं भद्रे व्यसनायोपकल्पते (रा० ५।२४।२१)। **उपकल्पते कल्पते ऽलं भवति समर्थो भवति।** वार्यपि श्रद्धया दत्तमक्षयायोपकल्पते (मनु० ३।२०२)। **अक्षयाय अक्षयसुखाय। उपक्लृपिः पूर्वत्रार्थ एव।** यथा दुग्धेस्थितं सर्पिर्न स्वादायोपकल्पते (भा० पु० १।२।६९)। **स्वादाय नोपकल्पते स्वादितुं न लभ्यते।** वधं नार्हति चेन्द्रोपि तत्रेदमुपकल्पते (भा० ६।१८।४३)। **इदमुपल्पते इदं युक्तं भवति।** अतो यतमदस्य कर्मोपकल्पेत् (श० ब्रा० ६।२।२।१५)। **अस्य योग्यं भवेत्, एतदर्हं स्यात्।** धर्मस्य ह्यापवर्ग्यस्य नार्थोऽर्थायोपकल्पते (भा० पु० १।२।९)। **नार्थायोपकल्पते प्रयोजनवान्भवितुं नार्हति।** केशश्मश्रु लोमनखानि वापयित्वोपकल्पयते (बौ० ध० २।१०।१७।६१)। **उपकल्पयते ऽर्जयति।** तानि दक्षिणपार्श्वे तु भुञ्जानस्योपकल्पयेत् (सुश्रुत० १।४६।५०२)। **समीपं ढौकयेदित्यर्थः।** महोक्षं वा महाजं वा श्रोत्रियायोपकल्पयेत् (याज्ञ० १।१०९)। तस्यैते पुरस्ताद् रक्षितार उपक्लृप्ता भवन्ति (श० ब्रा० १३।४।२।५)। **उपक्लृप्ताः सज्जाः।** चतस्रो जाया उपक्लृप्ता भवन्ति (श० ब्रा० १३।४।१।८)। **सेवायामुपस्थिता भवन्तीत्याह।** यस्त्वेतान्युपक्लृप्तानि द्रव्याणि स्तेनयेन्नरः (मनु० ८।३३३)। **उपक्लृप्तानि उपयोगार्थं कृतसंस्काराणीति कुल्लूकः।** रन्तिदेवस्य यज्ञे ताः पशुत्वेनोपकल्पिताः (भा० अनु० ३३५१)। **उपकल्पिताः संकल्पिता निश्चिता नियताः।** सदश्वैरुपकल्पितान् रथान् (भा० आदि० ४०९८)। **उपकल्पितान् युक्तान्।**

आसनेषूपक्लृप्तेषु बर्हिष्मत्सु (मनु० ३।२०८) । **उपक्लृप्तेषु न्यस्तेषु ।** वक्ष्याम्यत: परं कृत्स्नामाहारस्योपकल्पनाम् (सुश्रुत० १।४६।५०४) । **उपकल्पना समीपे ढौकना ।**

—**क्रम् (क्रमु पादविक्षेपे) ।** नयेन विधिदृष्टेन यदुपक्रमते परान् (भा० सभा० १७।३) । **उपक्रमत उत्सहत इति नीलकण्ठ: । एवं सति परानिति द्वितीया नोपपद्यते । संस्कृतशार्मण्यकोषस्तु उपैति आचरतीत्येवं व्याख्याति । तदेवादोषं भाति ।** उपचक्राम तौ वाग्भिर्मृद्वीभि: (रा० ४।२।२) । **व्यवजहार, उपेयायेति वा ।** राज्ञस्तस्याज्ञया देवी वसिष्ठमुपचक्रमे (भा० आदि० १७७।४३)। **उपचक्रमे उपचक्राम उपेयाय ।** उपक्रामति जन्तूंश्च उद्वेगजनन: सदा (भा० अनु० १४५।३४) । **उपक्रामति उपद्रवति ।** उप क्रमस्व पुरुरूपमाभर वाजं नेदिष्ठमूतये (अथर्व० २०।८५।४) । **उपक्रमस्व उपक्राम उपगच्छ ।** धर्मो यत: स्यात् तदुपक्रमेत (रा० २।२१।५८) । **उपक्रमेत प्रारभेत ।** उपाक्रामत काकुत्स्थ: कृपणं बहु भाषितुम् (रा० २।१०३।६) । **उपाक्रामत उपाक्रमत प्रकान्तवान् प्रारब्ध ।** तानादाय कुमारांस्तु नगरायोपचक्रमे (हरि० १।२६। ४२) । **नगरं गन्तुमारेभ इत्याह ।** गृहीत्वा तानि वैदेही गमनायोपचक्रमे (रा० ७।४६।११)। **उक्तोऽर्थ: ।** सरुजमात्मवन्तमुपकरणवन्तमुपक्रमेत् (सुश्रुत० चि० ५।२८) । **उपक्रमेत् उपक्रामेत् उपचरेत्, चिकित्सेत् ।** नोपक्रमेदविदितं रोगं किञ्चिच्चिकित्सक: (का० सं० खिल० रक्तगुल्म० श्लो० ६५) । **उक्तोऽर्थ: ।** साध्यासाध्यं विदित्वोपक्रमते स भिषक् स्मृत: । (शुक्र० २।१८४) । **साधु: प्रयोग:, आत्मनेपदं तु दुष्प्रयुक्तम् ।** ममापि चर्मरत्नमुपायोपक्रान्तो यदि प्रयच्छेत् (दशकु०) । **उपक्रान्तो वशे कृत: ।** उपक्रान्ते प्रमुञ्चति (का० श्रौ० ८।४।२०) । **उपक्रान्ते समाप्ते (सीवनकर्मणि) ग्रन्थि विस्रंसयतीत्याह । अन्यत्र दुर्लभोऽयमर्थ: ।** उपक्रम्य: कथमयं कश्चास्योपक्रम: (का० सं० खिल० रक्तगुल्म० श्लो० १२) । **उपक्रम्य: चिकित्स्य: ।** वयस्य, एवमादिभिरनुपक्रम्योऽयमातङ्क: (विक्रम० ३) । **उक्तोऽर्थ: ।** पप्रच्छ प्रयोजनमुपक्रमे (भा० वन० ९८।८) । **उपक्रम आगमनम् ।** ज्ञात्वाऽऽरम्भ **उपक्रम** इत्यमर: । **उपक्रमो** वशीकारे समारम्भे चिकित्सने इति कोषान्तरम् । मूत्रप्रभातंवविट्प्रभा तंवयोरप्यसाध्यत्वादेवोपक्रमं नाम्यधादिति (अष्टाङ्ग० शारीर० १।१५-१६ सूत्रे हृदयबोधिकाकारस्य वचनम्) । **अर्थस्तूदितचर: ।** शरीरपतितानां तु शारीरवदुपक्रम: (सुश्रुत० १।१।२६) । तस्य चायमुपक्रम:

(महावीर० ४।४)। **उपक्रमो बुद्धिपूर्वं आरम्भः।** तानानयेद् वशं सर्वान्सामादिभिरुपक्रमैः (मनु० ७।१०७)। **उपक्रमा उपायाः।** क्रमशो मण्डलं चिन्त्यं सामादिभिरुपक्रमैः (याज्ञ० १।३४५)। अशोचन् प्रतिकुर्वीत यदि पश्येदुपक्रमम् (भा० शां० ३३०।१५)। **उक्तोऽर्थः।** किं वा मम वधायैष उपक्रमो मन्थरकस्य (पञ्चत०)। **उपक्रमः प्रारम्भः।** उपायतः समारब्धाः सर्वे सिध्यन्त्युपक्रमाः (वि० पु० १।१३।७८)। **उपक्रमा आरम्भाः कर्माणि। हरिवंशे (२।५।५३) प्येषोऽन्यूनातिरिक्तः पाठः स्थितः।** यद्यप्यकृतकृत्यानामीदृशः स्यादुपक्रमः (रा० ५।६४।३०)। **उपक्रम आचारो व्यवहारो वृत्तिः।**

**—क्री (डुक्रीञ् द्रव्यविनिमये)।** घटादीनुपक्रीय (हितोप०)। **क्रयेण प्राप्य।**

**—क्रीड् (क्रीडृ विहारे)।** उपक्रीडन्ति तान्राजन् शुभाश्चाप्सरसां गणाः (भा० अनु० ८१।३०)। **उपक्रीडन्ति उपेत्य क्रीडन्ति समीपे क्रीडन्ति। उपसर्गवशात् सकर्मकत्वम्।**

**—क्रुश् (क्रुश आह्वाने रोदने च)।** उपक्रुष्टं जीवितं सन्त्यजेयुः (भा० उ० २५।८)। **उपक्रुष्टं निन्दितं सापवादम् अवगीतम्।** बोधिसत्वः किल कस्मिंश्चिदनुपक्रुष्टगोत्रचारित्रे···महति ब्राह्मणकुले जन्म-परिग्रहं चकार (अवदा० ब्राह्मणजा०)। **अनुपक्रुष्टे अनवगीते गोत्र-चारित्रे यस्य तस्मिन्।** न शक्नोम्युपक्रोशं पृथिव्यां धातुमात्मनः (रा० ३।६२।२६)। **उपक्रोशोऽपवादः।** प्राणैरुपक्रोशमलीमसैर्वा (रघु० २।५३)। **उक्तोऽर्थः।**

**—क्लिद् (क्लिदू आर्द्रीभावे)।** विरुद्धानामुपक्लिन्नपूतीनां भक्षणेन च (चरक० सू० २४।८)। **उपक्लिन्नं शुच्यत् कालपरिवासेन निर्यद्रसम्।**

**—क्षर् (क्षर संचलने)।** उप क्षरन्ति सिन्धवो मयोभुव ईजानं यक्ष्यमाणं च धेनवः (ऋ० १।१२५।४)। **समीपे क्षरन्ति स्रवन्ति स्यन्दन्ते। प्रीणयन्तीत्यर्थः।** सर्वतो वा एताः स्वधा यजमानमुपक्षरन्ति। यदेतानि हवींष्याज्यं धानाः करम्भः परिवापः पुरोडाशः पयस्येति (ऐ० ब्रा० ८।५)। **उक्तोऽर्थः।**

**—क्षि (क्षि क्षये)।** नू नो रास्व···द्युमदग्ने सुवीर्यं वर्षिष्ठमनुपक्षितम् (ऋ० ३।१३।७)। **अनुपक्षितं व्यये क्रियमाणेऽप्यनुपक्षीणम्। अक्षय्यमित्यर्थः।**

**—क्षि (क्षि निवासगत्योः)।** देवो न यः पृथिवीं विश्वधाया उपक्षेति हितमित्रो न राजा (ऋ० १।७३।३)। **पृथिवीमुपक्षेति पृथिव्यां निवसति।** शुचिरपस्सूयवसा अदब्ध उपक्षेति (तै० सं० २।१।११।११)। **उपक्षेति उपक्षियति उपगच्छति प्राप्नोति।** उग्रा त इन्द्र स्थविरस्य बाहू उप क्षयेम शरणा बृहन्ता (अथर्व० १९।१५।४)। **उपक्षयेम प्राप्नुयाम।**

**—क्षिप् (क्षिप प्रेरणे)।** कशयोपक्षिपति (श० ब्रा० १।४।४।१५)। **उपक्षिपति क्षिपति प्रेरयति। नार्थ उपेन।** परस्परं वाग्भिरुपक्षिपन्ति (रा० ५।११।११)। **उपक्षिपन्ति प्रेरयन्ति समुत्साहयन्ति समुद्धर्षयन्ति।** छन्नं कार्यमुपक्षिपन्ति न्यायेन दूरीकृतम् (मृच्छ० ९।३)। **मन्दमुपन्यस्यन्ति, आरात् प्रस्तुवन्तीत्यर्थः।** वपुषि वधाय तत्र तव शस्त्रमुपक्षिपतः (मालती० ५।३१)। **उपक्षिपतः प्रास्यतः। शत्रन्तात् षष्ठी।** ततः परस्ताल्लोकालोकनामाऽचलो लोकालोकयोरन्तराले परित उपक्षिप्तः (भा० पु० ५।२०।३४)। **उपक्षिप्तः स्थितः।** चरणानुरूपः खलु तत्र भवत्या अधिकार उपक्षिप्तः (माल० ३)। **उपक्षिप्तः प्रारब्धः।** गोमुखेन स्मितं सद्य उपक्षिप्तं कथान्तरम् (बृ० श्लो० सं० ८।२०)। **उक्तोऽर्थः।** त्वयि उपक्षिप्त आत्मा (माल० २)। **उपक्षिप्तो निक्षिप्तो न्यस्तः समर्पितः।** उपक्षिप्तस्य चान्नस्य वाष्पेणोर्ध्वं प्रसर्पता (सुश्रु त० कल्प० १।११)। **उपक्षिप्तस्य भोक्तुं दत्तस्य।** ननु भणामि तस्मिन् साधनीये कृत उपक्षेपः (माल० ३)। **उपक्षेपः प्रारम्भः।** प्रस्तावः स्यादुपक्षेप इति **वैजयन्ती।** कर्णनासाच्छेदोपक्षेपभीषिताभ्याम् (दशकु०)। **उपक्षेपः प्रस्तावः कीर्तनम्।** नाट्यार्थोपक्षेपः पूर्वं प्रस्तावनाऽऽमुखं च स्यात् (१।६।३९ अमरोद्घाटने स्वामी)। **उपक्षेपः संक्षेपेण कथनम्।**

**—ख्या (ख्या प्रकथने, चक्षिङ आदेशो वा)।** तस्मादपि सुतमिस्राया-मुपैव किंचित् ख्यायते (श० ब्रा० ४।१।२।१३)। **उपाख्यायते उपदृश्यते प्रज्ञायते।**

**—गम् (गम्लृ गतौ)।** उताशितमुप गच्छन्ति मृत्यवः (ऋ० १०।११७। १)। **उपगच्छन्ति प्राप्नुवन्ति। आशितस्तृप्तः।** उप वायवः शरणं गमेयम् (ऋ० १।१५८।३)। अग्नेः प्रियं धामोपजगाम (श० ब्रा० २।२।३।४)। आशिष उपगच्छति (श० ब्रा० ४।५।७।९)। **उक्तोऽर्थः।** आत्मेति तूपगच्छन्ति ग्राहयन्ति च (ब्रह्म सू० ४।१।३)। **उपगच्छन्ति अभ्युपगच्छन्ति।** सुप्तां मत्तां प्रमत्तां वा रहो यत्रोपगच्छति (मनु० ३।३४)। नोपगच्छेत्प्रमत्तोपि स्त्रियः मार्तवदर्शने (मनु० ४।४०)। **उपगच्छति गच्छति मैथुनाय प्रवर्तते।** यं सनातन-

पितरमुपागमत् स्वयम् ( )। **उपागमत् पर्यग्रहीत्, अवृत**। सह पत्न्या विशालाक्ष्या नारायणमुपागमत् (रा० २।६।१)। **उपागमत् उपासिष्ट**। ग्रहास्तमुपगच्छन्ति सारमेया इवामिषम् (भा० स्त्री० ४।६)। **उपगच्छन्ति वेगेनोपयान्ति**। यन्मामधर्मेणोपगच्छत (भा० कर्ण० ४५।१२)। **मय्यन्याय्यमाचरतेत्याह**। प्रतिकूलतामुपगते हि विधौ विफलत्वमेति बहुसाधनता (शिशु० ९।१६)। **उपगते गते प्राप्ते**। पादन्यासो लयमुपगतः ( माल० २।८ )। **उपगतोऽनुसृतवान्**। स वै सर्वमवाप्नोति वेदान्तोपगतं फलम् (मनु० २।१६०)। **वेदान्तोपगतं वेदान्तेष्वभ्युपगतम्**। दृष्टान्तोपगत (भा० अनु०४९।१७)। **उपगतं प्रतिज्ञातम्**। हेम्नैवोपगतं मणिम् (भा० शां० ४५।१४)। **उपगतं प्रत्युप्तम्**। गृहीत्वोपगतं दद्यादृणिकायोदयं धनी (ना० मनु० १।९८)। **मयाऽधिगतमिति विन्यस्ताक्षरं पत्रं दद्यादित्यर्थः**। धनी वोपगतं दद्यात्स्वहस्तपरिचिह्नितम् (याज्ञ० २।९३)। **उपगतं प्रवेशपत्रमिति मिताक्षरा**। अलङ्कारत्रयं सत्यवता यदनुप्रेषितं तदुपगतम् (मुद्रा० ६)। **उपगतमधिगतम्**। मयापि लेखस्याशून्यार्थं किञ्चिदनु प्रेषितं तदुपगमनीयम् (मुद्रा० ६)। **उपगमनीयमुपगतं प्राप्तमिति निवेद्यम्**। सीमन्ते च त्वदुपगमजं यत्र नीपं वधूनाम् (मेघ० ६७)। **उपगम आगमः**। व्यावर्ततान्योपगमात् कुमारी (रघु० ६।६० भा०)। **उपगमः समीपगमनम्**। अप्राप्तस्य हि प्रापणमुपगमनम् (मी० १२।१।२१ शा० भा०)। **उपगमनं कल्पना**।

—**गाह् ( गाहू विलोडने )**। सारथेर्बहुशश्चास्य पृतनामुपगाहतः (रा० ६।३१।३९)। **उपगाहतः=अन्तः प्रविशतः**।

—**गुप् (गुपू रक्षणे)**। गम्भीरवेधा उपगुप्तवित्तः (पृथुः) (भा० पु० ४।१६। १०)। **उपगुप्तवित्तः सम्यक् प्रच्छन्नधनः**।

—**गुह् (गुहू संवरणे)**। यजमानस्य पशुन्पाही त्यग्निष्ठेऽनस्यग्न्यगारे वा पुरस्तात्प्रतीचीं शाखामुपगूहति पश्चात्प्राचीं वा (आप० श्रौ० १।१।२।१०)। **उपगूहति अप्रकाशां करोतीति धूर्तस्वामी**। औदुम्बरीं शाखामुपगूहति (श० ब्रा० ५।४।३।२५)। **उपगूहति तिरस्करोति संवृणोति प्रच्छादयति गोपायति**। सोपागूहद् भुजाभ्यां तु ऋषिं प्रीत्या नरर्षभ (भा० अनु० १९।७९)। **उपागूहत् आश्लिष्यत्, उपाश्लिष्यत्, आलिङ्गत्, पर्यरभत**। तरङ्गहस्तैरुपगूहतीव (रघु० १३।६३)। अपूजयन्कुलज्येष्ठान् उपागूहन्त बालकान् (भट्टि० १७।२)। **उक्तोऽर्थः**। साऽयोध्यामुपगूहते (रा० १।२४।९)। आवृत्य प्रवहतीत्यर्थः पुण्याश्च नद्यः सलिलोपगूढाः (हरि० ३।३५।५०)। **सलिलेन**

**च्छन्नाः सलिलस्य पूर्णा इत्यर्थः ।** पृथिव्यां पृथिवीहेतोः पृथिवीपतयो हताः । पृथिवीमुपगुह्याङ्गैः सुप्ताः कान्तामिव प्रियाम् (भा० द्रोण० १४८।४८-४९) ॥ **उपगुह्य=आलिङ्‌ग्य ।** उपगूहनशेषो वा पूर्वः ( का० श्रौ० ६।१०।६ ) । **संवरणमन्त्रस्यायं शेष इत्यर्थः ।**

**—गॄ (गॄ शब्दे)** । उप ये त्वा गृणन्ति वह्नयः (ऋ० १।४८।११) । **उपगृणन्ति स्तुवन्त आकारयन्ति उपह्वयन्ते । वह्नयो यज्ञनिर्वाहकाः ।** दयानुवृत्त्या च नाम ते कृत्यपक्षम्...उपगृणीते ( अवदा० जा० २३ ) । **उपगृणीत उपदिशति ।**

**—गॄ (गॄ निगरणे)** । स्नेहनस्यं न चोपगिलेत् (सुश्रुत० २।२३७।८) । **उपगिलेत् निगिलेत् ।**

**—गै (कै गै शब्दे)** । उपगायन्ति बीभत्सुं नृत्यन्त्यप्सरसां गणाः (भा० आदि० १२३।५३) । **उपगायन्ति समीपे पुरो वा गायन्ति ।** उपास्मै गायता नरः (ऋ० ९।११।१) । गणास्त्वोप गायन्तु मारुताः (अथर्व० ४।१५।४) । **त्वां (पर्जन्यम्) उपश्लोकयन्त्वित्याह ।** तान् हैतदुपजगौ (श० ब्रा० ११।५।५।८) । **इह प्रजापतिः कर्ता । धातुः क्रियासामान्ये संशब्दने व्याहरणे वर्तते ।** अतिरेचयेद् यदन्य उपगायेद् यदन्य उपशृणुयात् तस्मात्स्वयम्प्रस्तुतमनुपगीतम् (श० ब्रा० ४।६।९।१७) । **उपगायेत्=गायेत् ।** उपगीयमाना भ्रमरै राजन्ते वनराजयः (भा० वन० ११६०६) । **उपगीयमाना गानशब्देन पूर्णाः ।** उपगीयमानो गन्धर्वैर्बुभुजे विषयान् प्रियान् (वि० पु० १।१७।६) । **उपगीयमान उपश्लोक्यमानः, स्तूयमानः ।** उपगीतोपनृत्तश्च गन्धर्वाप्सरसां गणैः (भा० उ० १२३।४) । **उपगीतः समीपे कृतगानः ।** उपगानं कृत्वा ( माल० २। ) । **प्रारम्भिकं गानमुपगानम् ।** उपगादर्शनाच्च (का० श्रौ० ६।७।३) । **उद्गातरि गायति सति तमनुसृत्य ये गायन्ति त उपगाः ।**

**—ग्रह् (ग्रह उपादाने)** । अथोपयमन्योपगृह्णाति (श० ब्रा० १४।२।१।१७) । **उपगृह्णाति आदत्ते ।** स मृत्युमुपगृह्णाति गर्भमश्वतरी यथा (भा० आदि० ५६२२), तन्त्रा० २।२९, पञ्चत० १।४१५ चाणक्य सू० १९) । **उपगृह्णाति धत्ते ।** अथास्या उदपात्रमूधसि च मुखे चोपगृह्णीयात् (ऐ० ब्रा० ५।२७) । **उपगृह्णीयात् समीपे गृह्णीयात् ।** तस्याञ्जलिना ब्रह्महत्यामुपागृह्णात् (तै० सं० २।५।१।२) । तस्यै रसः परापतत् तं बृहस्पतिरुपागृह्णात् (तै० सं० २।१।७।६) । **निर्गमनकाल एव ग्रहणमुपग्रहणमिति भट्टभास्करः ।** कृतोपसंग्रहणौ तौ सावित्री...आतिथ्येन यथाक्रममुपजग्राह

(हर्ष०) । **उपजग्राह प्रतिजग्राह, सच्चकार ।** यथासम्भाषितं च कृत्यपक्षमुपग्राहयेत् (कौ० अ० १३।५।५)। **धनादिदानेन प्रीणयेदित्यर्थः ।**···अरविन्दनाभम् । धियोपगृह्णन् (भा० पु० ३।२२।२१) । **मनसा ध्यायन्नित्यर्थः ।** तदुपगृहीतेन म्लेच्छराजबलेन (मुद्रा० १) । **उपगृहीतेन उद्बलितेन अवष्टब्धेन समर्थितेन ।** अमर्षोपगृहीतानां मन्युसन्तप्तचेतसाम् (का० नी० सा० १०।१) । **अमर्षेण वशीकृतानामित्यर्थः । विग्रहो भवतीति शेषः ।** दक्षिणेन वा सव्योपगृहीतेन (पाणिना) (आश्व० गृ० ४।७।१०) । **उपगृहीतोऽधस्तान्निहितेन हस्तेन कृतालम्बः ।** तवैव पादानुपगृह्य संमता (रा० २।२७।२२)। **उपगृह्य उपसङ्गृह्य गृहीत्वा ।** उपगृह्य तु वैराणि सान्त्वयन्ति नराधिप (भा० शां० १३९।७३) । **उपगृह्य अवसाय्य, अन्तं नीत्वा ।** उपगृह्य शिरो राज्ञः कैकेयीं प्रत्यभाषत (रा० २।६६।२) । **उपगृह्य अङ्के कृत्वा ।** मणिवरमुपगृह्य (रा० ५।३६।७७) । **उपगृह्य वशे कृत्वा, अधिकृत्य, स्वीकृत्य ।** तेजो वा अद्भ्यो भूयस्तद्वा एतद् वायुमुपगृह्याकाशमभितपति (छां० उ० ७।११।१) । **उपगृह्य सहायमादाय ।** अथ व्रजत्सु दिवसेष्वेकदा भैरवाचार्यो राजानमुपह्वरे सोपग्रहमवादीत् (हर्ष० तृ० उ०) । **सोपग्रहं साभ्यर्थनमिति शङ्करमिश्रकृतः सङ्केतः ।** अमित्रोपग्रहं चास्य ते कुर्युः क्षिप्रमापदि (भा० शां० ९८।१४) । **उपग्रह आनुकूल्यमुपकारः साहायकम् ।** वशंगतो रिपुर्यश्च विचलेद् दुरुपग्रहः (का० नी० सा० ८।६८) । **दुरुपग्रहः कथमप्यात्मसात्कर्तुं न शक्यः । वंशागत इति पाठान्तरम् ।** क्रियते प्राणरक्षार्थं सर्वदानमुपग्रहः (का० नी० सा० ९।१७) **इति सन्धिविशेषस्योपग्रहाख्यस्य लक्षणोक्तिः । सर्वथा शत्रूपग्रहहेतुत्वादुपग्रह इति तदाख्योपपत्तिः । कौटल्यस्तु—योऽहं स भवान्, मम यद् द्रव्यं तद्भवत इत्युपग्रहः सान्त्वमितीत्थं तत्स्वरूपमाह** (कौ० अ० २।२८।१०) । सुप्तिङुपग्रहलिङ्गनराणाम् (पा० ३।१।८५ सू० भा०) । **अत्र न्यासः**—लादेशव्यङ्ग्यक्रियाविशेषो मुख्य **उपग्रहः** । इह तद् व्यक्तिनिमित्तत्वात्परस्मैपदात्मनेपदयोरुपग्रहशब्दो वर्तते । चूर्णादीन्यप्राणिषष्ठ्याः (पा० ६।२।१३४) । अत्र चूर्णादीन्यप्राण्युपग्रहादिति पाठान्तरम् । उभयथा ह्याचार्य्येण शिष्याः सूत्रं प्रतिपादिताः । उपग्रह इति षष्ठ्यन्तमेव पूर्वाचार्य्योपचारेण गृह्यत इति **काशिका ।** पूर्वाचार्य्या हि षष्ठ्यन्तमुपग्रह इत्येवमुपचरन्ति स्मेति न्यासः । प्रग्रहोपग्रहौ वन्द्याम् इत्यमरः । उच्चावचान् उपग्राहान् राजभिः प्रापितान् बहून् (भा० सभा० ५२।४०) । **उपग्राह उपहारः ।** उपग्राह्यमुपदा भवति । तदत्र वस्तुनि नोपालम्भनीयो राक्षसः । आ नन्दराज्यलाभादुपग्राह्यश्च ( मुद्रा० ५ ) । **उपग्राह्यः सङ्ग्राह्य आत्मीयः करणीयः ।** एकद्रव्ये साज्ये वेदेनोपग्रहणम् (का० श्रौ० १।१०।६) । **उपग्रहणं ग्रहणम् । वेदो दर्भमुष्टिः ।** वेदोपग्रहणार्थाय

तावग्राहयत् प्रभुः । काव्यं रामायणम्···(रा० १।४।४) ॥ **वेदोपग्रहणं वेदार्थविबोधनम् । वेदोपबृंहणार्थायेति पाठान्तरम् ।** स राजा जनप्रकाशेनाडम्बरेण प्रत्ययितानमात्यान् पापजनोपग्रहणार्थं जनपदं नगराणि च प्रेषयामास (अवदा० जा० १०) । **उपग्रहणम् बन्धनम् ।**

—**घ्रा (घ्रा गन्धोपादने)** । ययातिरुपजिघ्रन् (धूम) वै निपपात महीं प्रति (भा० उ० १२१।१२) । आमोदमुपजिघ्रन्तौ (रघु० १।४३) । **उपेत्य घ्राणमुपघ्राणम् ।**

—**चर् (चर गतिभक्षणयोः)** । उपाचरद् घोरतपो जितात्मा (भा० आश्रम० १९।१८) । **उपाचरद् आचरत् । अचरत् । उपेन नार्थः ।** सर्वोपि महार्हैस्तमुपचारैरुपाचरत् (कथा० ६१।२२५) । **उपाचरत् असेवत ।** सममुपचर भद्रे सुप्रियं चाप्रियं च (मृच्छ० १।१३१) । **उपचर भजस्व सेवस्व ।** गिरिशमुपचचार प्रत्यहं सा सुकेशी (कु० १।६०) । **उपचचार सिषेवे, वरिवसामास ।** अभ्युत्थानादिभिरुपचारैरुपाचरन् (शि० पु० ६।१।२९) । **उपाचरन् सदकुर्वन्, समभावयन् ।** स्थान इयमपि देवीशब्देनोपचर्यते (विक्रम० ३) । **उपचर्यते सत्क्रियते भूष्यते ।** गात्राणि कुङ्कुमालेपैरुपाचर्यन्त च स्वयम् (राज० ८।१८९७) । स्वादु सुगन्धि सलिलममृतमुपचरन्ति लोकाः । **अमृतशब्देन व्यपदिशन्ति, अमृतशब्दं तत्रार्थे व्यवहरन्ति भाक्तम् ।** ईदृशे हि लौकिकाः स्तोभशब्दमुपचरन्ति (मी० ९।२।३९ सूत्रे शा० भा०) । **उपचरन्ति व्यवहरन्ति, प्रयुञ्जते ।** उदाहरति च शवरः—देवदत्तेन सभायां परं प्रलपता वहुस्तोभं कथितम् इति । क्रियां हि लोके कर्मेत्युपचरन्ति (पा० १।३।१४ सूत्रे भाष्ये) । **उपचरन्ति व्यपदिशन्ति ।** सूपचरणाह तेऽसावस्तु यामधस्तादुपचरसि (श० ब्रा० १।९।१।८) । **अधस्तादुपचरसि नीचैः स्पृशसि ।** निकृत्योपचरन्वध्य एष धर्मः सनातनः(भा० वन० ११।७) । **निकृत्योपचरन् छलेन वर्तमानः, छद्मनाऽऽचरन् ।** नूनं मित्राणि ते रक्षः साधूपचरितान्यपि (भा० अनु० १२४।१०) । **साधूपचरितानि सम्यक् सेवितानि ।** यस्मान्मिथ्योपचरितं ह्यस्त्रलोभादिह त्वया (भा० शां० ३।३०) । **मयि मिथ्या व्यवहृतं त्वयेत्याह ।** मिथ्योपचरितास्तात जन्मप्रभृति वान्धवाः ( भा० उ० १२४।३२ ) । **मिथ्योपचरिताः प्रतारिताः ।** मिथ्योपचर्य ते तं तु (हरि० १।२१।१५) । **वञ्चयित्वेत्यर्थः । अनृजु व्यवहृत्येति त्वक्षरार्थः ।** विविक्तशिशिरोपचारान्नात्यच्छरणम् अस्ति (विक्रम०) । **उपचारः प्रयोगः ।** तेन वाक्योपचारेण विस्मिता राजसत्तमाः (भा० उ० १६२।४५) । **वाक्योपचारो वाक्यप्रयोगः ।** एष उ तत्र दीक्षितस्योपचारः (श० ब्रा० ३।१।१।१०) । **उपचार आचार आचरणं वृत्तं वृत्तिः, व्यवहारः ।**

नानृतं वदेत्तावत्सत्यमेवोपचारः (श० ब्रा० २।२।२।२०)। **उक्तोऽर्थः।** हृदय-विहित वैरा गूढमन्त्रोपचाराः (पञ्चत० )। हितोपचारमूलं जीवितमतो विपर्य्यासान्मृत्युः (चरक० विमान० ३।३८)। **हितोपचारः पथ्यसेवनम्।** अधः शयीताधस्तादिव हि श्रेयस उपचारः (श० ब्रा० १०।१।१।११)। **उपचारः सेवाऽऽदरो वा।** उपचाराभिचाराभ्यां धर्ममावाहयस्व वै (भा० आदि० १२२। ४३)। **उपचारः समादरः।** मिथ्योपचारैश्च वशीकृतानाम् (हितोप० १।७५)। **उपचारो दाक्षिण्यमभ्युत्थानादिः सत्कारश्च।** व्रतचर्योपचारं च (मनु० १। १११)। **उपचारो गुर्वादीनामभिवादनोपासनादि।** अवैरकृत्सूपचारः समो निन्दाप्रशंसयोः (भा० शां० २२०।१२)। **सूपचारः शाठ्यवर्जितादरः।** अलमुपचारयन्त्रणया (माल० ४। )। **उपचारोऽभ्युत्थानादिलक्षणः समुदाचारः।** न ते गात्राण्युपचारमर्हन्ति (शा० ३।१७)। **उक्तोऽर्थः।** पुरस्तादुपचारस्तस्य यत्प्रतिषेधति (नि० १।४।९)। उपरिष्टादुपचारस्तस्य येनोपमिमीते (नि० १।४।९)। **उपचारः प्रयोग इति स्कन्दस्वामी। प्रयोग उच्चारणं वा विन्यासो वा।** उपचारपदं न चेदिदं त्वमनङ्गः कथमक्षता रतिः (कु० ४।९)। **परस्य रञ्जनार्थं यदसत्यभाषणं स उपचार इति मल्लिः। प्रसादनाराधनोपचाराश्चेति हलायुधः।** रामभद्र इत्येव मां प्रत्युपचारः शोभते तातपरिजनस्य (उत्तर० १)। **उपचार आलाप आभाषणं सम्बोधनम्।** अचेतनेष्वपि चेतनवदुपचारा दृश्यन्ते (पा० ४।३।८६ सूत्रे भाष्ये)। **उपचारो गुणक्रियादिकथनम्।** भारतप्रसिद्धे ऽनन्तरापत्येऽश्वत्थाम्नि द्रौणायन इति प्रयोगस्तूपचारात् (पा० ४।१।१०३ सूत्रे वृत्तिः)। **उपचारो लक्षणा, गौणी वृत्तिः।** इत्थं विधिज्ञेन पुरोहितेन प्रयुक्तपाणिग्रहणोपचारा (कु० ७।८६)। **उपचारो विधिः, संस्कारः।** एष इष्टेरुपचारः (श० ब्रा० १।३।५।१०)। **उपचारो विधिः, प्रचरणविधा।** यो वाव कर्म करोति स एव तस्योपचारं वेद (श० ब्रा० ६। ५।५।१७)। **उक्तोऽर्थः।** प्रकीर्णाभिनवोपचारं (राजमार्गम्) (रघु० ७।४)। **उपचारः पुष्पप्रकरादिः।** स ददर्शाथ मञ्चेषु···उपचारवत्सु (रघु० ६।१)। **उपचारो राजोपकरणम्** इति मल्लिः। उत्तरतउपचारो वै यज्ञः (श० ब्रा० ३।४।३।१९)। उत्तरत उपचारो विहारः (बौ० ध० १।७।१।१)। **उपचारः संचारः।** समन्त्रं सोपचारं च समोक्षविनिवर्तनम् (अस्त्रं प्रतिजग्राह) (भा० वन० )। **सोपचारं सेतिकर्तव्यताकमिति नीलकण्ठः। एवं व्याख्यानेप्यर्थस्तु न स्फुटति। मोक्षविनिवर्तनयोः प्रयोगप्रतिसंहारयोरुक्तयोः सतोः किं स्विदन्यदवशिष्यते यदितिकर्तव्यतेत्युच्येत।** विसर्जनीयस्थानिकस्य सकारस्योपचार इत्येषा संज्ञा पूर्वाचार्यकृता (पा० १।४।६७ सूत्रे न्यासे)। सहचरणादिनिमित्तेनातद्भावे तद्वदभिधानमुपचारः (१।२।१४ सूत्रे न्यायभाष्ये)। उपचार-

स्तत्त्वचिन्तायामनुपयोगीति प्रेक्षवतामनुपादेय: (स्याद्वाद० १५ हेम०)। **उपचार आरोप:**। अनन्तलोकाप्तिमथो प्रतिष्ठां विद्धि त्वमेतं निहितं गुहायाम् (कठोप० १।१।१४)। अनन्तलोकाप्तिसाधनमिति यावत्। कारणे कार्योपचार:। आयुर्वै घृतमित्यत्र यथा। **उपचार आरोप:**। अस्ति त्रयोदशो मास उपचार: (शां० ब्रा० ७।१०)। **उपचार आवापिक:**। उपचर्य: स्त्रिया साध्व्या सततं देववत् पति:।(मनु० ५।१५४)। **उपचर्य उपचार्य: सेव्य:**। अग्निवच्चोपचर्या वै ब्राह्मणा: (भा० अनु० ८।२३)। **उपचर्या: पूज्या:**। त्वग्भेदी व्रण: सूपचर: (सुश्रुत० १।८३।१२)। **सूपचर: सुलभचिकित्स:**। पिता पुत्राय सूपचर: (श० ब्रा० २।३।४।३०)। **सूपायनशब्दव्याख्यायामिदमुक्तम्। सूपचर: सुखेन गम्य:**। उष्णोदकोपचारी स्यात् (अष्टाङ्ग० सूत्र० १६।२६)। **उष्णजलस्योपयोक्तेत्यर्थ:**।

-- **चाय्** (**चायृ पूजानिशामनयो:**)। इष्टाँल्लोकानवाप्स्यामो गुरुवृद्धोपचायिन: (भा० शां० १८।३६)। **गुरुवृद्धोपसेविन इत्यर्थ:**।

—**चि** (**चिञ् चयने**)। यानि घर्मे कपालान्युपचिन्वन्ति वेधस: (तै० सं० १।५।१०।३)। **उपचिन्वन्ति उपदधति, उपस्थापयन्ति**। तद्व्यसनसक्तस्य वैचित्यमुपचीयते (शि० भा० १६।३४)। **उपचीयते वर्धते प्रकृष्यते। निदिग्धोपचिते** इति पर्यायौ पठत्यमर:। **भवेदुपचितं दिग्धे समृद्धे वाच्यलिङ्गवदिति च मेदिनी**। स्थैर्यमाधुर्यधैर्याद्यैर्गुणैरुपचितो हित: (स्कन्दपु० का० ४।१२। ६३)। **उपचित: समृद्ध:, व्याप्त इत्यर्थ:**। अगारादभिनिष्क्रान्त: पवित्रोपचितो मुनि: (मनु० ६।४१)। **उपचितो युक्त:**। नास्ति क्षितिर्नोपचिति: कदापि पयोदवृत्ते: खलु चातकस्य। **उपचितिर्वृद्धि:**। **यच्च** न: प्रेक्षमाणानां सर्वधर्मोपचायिनाम् (भा० उ० १३७।१६)। **धर्मोपचायिनां धर्मवर्धनशीलानाम्**।

—**चिन्त्** (**चिति स्मृत्याम्**)। तत्तथैवास्तु भद्रं ने स्वार्थमेवोपचिन्तय (भा० उ० ९६।५२)। **उपचिन्तय चिन्तय। उपेन नार्थ:**।

—**जन्** (**जनी प्रादुर्भावे**)। इहैव सा शुनी गृध्री सूकरी चोपजायते (याज्ञ० ३।२५६)। **उपजायते पुनर्जायते**। य: शब्द उपजायते तस्यासावर्थो योऽर्थ उपजायते (पा० १।२।४५ सूत्रे भाष्ये)। **उपजायतेऽधिको जायते**। यस्य चागमे यदुपजायते स तस्यार्थ इति गम्यते (मी० ४।१।१५ शा० भा०)। **उक्तोऽर्थ:**। पञ्चमे पञ्चमे वर्षे द्वौ मासावुपजायत: (भा० वि० ५२।३)।

**उपजायत उपजायेते**। वेद मासो धृतव्रतो द्वादश प्रजावतः। वेदा य उपजायते (ऋ० १।२५।८)। **उपजायतेऽधिको जायते**। नोपजनं स्मरन् इद शरीरं स यथा प्रयोग्य आचरणे युक्त एवमेवायमस्मिञ्छरीरे प्राणो युक्तः (छां० उ० ८।१२।३)। **उपजनं सहजातमनुषक्तं स्वेन। स्मरन्नित्यस्य प्राणः कर्ता**। अथोपजनाश्रयं कर्मवैगुण्यं मिथ्यासम्प्रयोगः (न्याय० २।१।५८)। **उपजन उत्पत्तिः**। गुरुरेवैनमनुशास्ति आतदुच्चारणसामर्थ्योपजनम् (न्याय-मं०)। **उक्तोऽर्थः**। कृत्वाय सा महीमुखां मृन्मयीं योनिमग्नये (वा० सं० ११।५६)। **कृत्वाय क्त्वो यक्। छान्दस उपजनः** (उवटः)। **उपजन आगमः**। यदर्थो निर्जल्पतिस्तदर्थ एव विनिर्जल्पतिः। शब्दोपजनो नार्थोपजनः। **उपजन उपचयो वृद्धिः। आधिक्यम्**। पितामहाः पितरः प्रजोपजा (अथर्व० ११।१।१९)। **प्रजा पुत्रदुहित्रादिरूपा, उपजा तत्पुत्रादिरूपा** (सायणः)। विक्रये पण्यानामर्घवृद्धिरुपजा (कौ० अ० २।२४।६)। व्रीहियवयोर्वा एतदुपजं यच्छमी धान्यम् (श० ब्रा० १।१।१।१०)।

**—जप् (जप जल्प व्यक्तायां वाचि जप मानसे च)**। क्षेत्रस्थेषु च सस्येषु शत्रोरुपजपेन्नरान् (भा० शां० ६९।३८)। **उपजपेद् भेदयेत्**। उपजप्यानुपजपेत् (मनु० ७।१९७)। **उक्तोऽर्थः**। तेषु तेषु चाकृत्येषु प्रासरन् परोपजापाः (दशकु०)। **उपजापः स्वपक्षं प्रति प्रच्छन्नं प्रेरणम्**।

**—जल्प् (जल्प व्यक्तायां वाचि)**। अन्योन्यमुपजल्पन्तः शनैश्च मिथः कथाः (रा० २।११६।३)। **उपजल्पन्त उपेत्य जल्पन्तः**। अनाहूतोपसृष्टानामनाहूतोपजल्पिनाम्। ये लोकास्ताञ्हतः कर्ण मया त्वं प्रतिपत्स्यसे (भा० आदि० १३६।१८)।

**—जीव् (जीव प्राणधारणे)**। इतः प्रदानमुत देवा उपजीवन्ति, अमुतः प्रदानं मनुष्या उपजीवन्ति (तै० सं० ३।२।९।७)। **उपजीवन्ति आश्रित्य जीवन्ति, संश्रयन्ते**। एतस्यैवानन्दस्यान्यानि भूतानि मात्रामुपजीवन्ति (बृह० उ० ४।३।३२)। **उक्तोऽर्थः**। सुजीवं नित्यशस्तस्य यः परैरुपजीव्यते। राम तेन तु दुर्जीवं यः परानुपजीवति (रा० २।१०५।७)॥ **उपजीवति उपाश्रित्य जीवति**। इदं कविवरैः सर्वैराख्यानमुपजीव्यते (भा० आदि० २।८९)। **उपजीव्यते आश्रीयते**। मनुष्याश्चोपजीवन्ति यस्य शिल्पं महात्मनः (हरि० १।३।४८)। **उक्तोऽर्थः**। उपजीवा स्थोपजीव्यासं सर्वमायुर्जीव्यासम् (अथर्व० १९।६९।२)। **उपशब्दोऽधिकवचनः। उपजीवा अधिकजीवनवन्तः**। स निर्भाज्यः

स्वकादंशात् किञ्चिद् दत्त्वोपजीवनम् । (मनु० ६।२०७)। **उपजीवनं लोकयात्रार्थं धनम्** ।

—**जुष्** (**जुषी प्रीतिसेवनयो:**) । उपेमं यज्ञं पितरो मे जुषन्ताम् (अथर्व० १८।४।४०) । **उपजुषन्तामुपेत्य सेवन्ताम्** । इत्याचारादसि यदि मया प्रश्रयेणोपजुष्ट: (महावीर० ३।२६) । **उपजुष्ट: सेवित:** ।

—**ज्ञा** ( **ज्ञा अवबोधने** ) । पिशाचास्तस्मान्नश्यन्ति न पापमुपजानते (अथर्व० ४।३६।८) । **उपजानते जानते** । **शब्दोपजनो नार्थोपजन:** । किम्वेतावन्मात्रमुपजानीत यथेदमितो ऽन्यथा ऽसत् (श० ब्रा० १।६।१।४) । **उपजानीत उपायं चिन्तयेत्** । ता: प्रजा: प्रजापतिं पितरमेत्योपाधावन्नुप नं यज्ञक्रतुं जानीहि येनेष्ट्वा··· वरुणपाशेभ्य:···सम्प्रमुच्येमहि (शां० ब्रा० ५।३) । **उपजानीहि नूतनमुपायमुपलभस्व** । ते ह्यादित्या ऊचु: । उपजानीत यथाऽस्मानेवाङ्गिरसो यजान् (श० ब्रा० ३।५।१।१४) । उपतज्जानीत यथेयमस्मास्वेव राद्धिरसदिति ( श० ब्रा० ८।६।३।२ ) । **उदितचरएवार्थ:** । उपज्ञाते (पा० ४।३।११५) । **विनोपदेशेन ज्ञातमुपज्ञातमिति वृत्ति:** । **उपज्ञा** ज्ञानमाद्यं स्यात् (अमर:) । अथास्य सांवत्सरिकस्य चौलं कुर्वन्ति यथर्षि यथोपज्ञं वा (भा० गृ० १।२८) । **यथोपज्ञम्—यथा स्वकुले पितृपितामहप्रपितामहानामाचार इति भाष्यम्** । यज्ञ इति किमुपज्ञ: । यज्ञ: श्रद्धोपज्ञ: (बौधायनीये कर्मान्तसूत्रे १। २) । **श्रद्धोपज्ञ: श्रद्धोपक्रम इति तत्रस्थं भाष्यम्** । तां बुद्धिमुपजिज्ञासुस्तम् (भा० शां० १०४।३७) । **उपजिज्ञासुरुपलिप्सु:** । तेऽसुरा आत्तवचस:···तत्रैतामपि वाचमूदुरुपजिज्ञास्याम् । स म्लेच्छ: (श० ब्रा० ३।२।१।२३-२४) । **उपजिज्ञास्यां दुरवगमाम् अर्थहीनाम्** ।

—**तप्** (**तप संतापे**) । आहिताग्निश्चेदुपतपेत् (आश्व० गृ० ४।१।१) । **उपतपेत्=उपतप्येत, उपतप्तो रुग्ण: स्यात्, आमयश्चेत्तं विन्देत्** । स किं मामेतदुपतपसि योऽहमनेन न प्रेष्यामि (छां० उ० ३।१६।७) । **उपतपसि रुजसि सामयं करोषि, अकुशलिनं सम्पादयसि मान्द्यं मे जनयसि** । तं चेदस्मिन्वयसि किं चिदुपतपेत् (छां० उ० ३।१६।२) । यदि दीक्षितस्योपतपेत् (श० ब्रा० १२।३।५।२) । **यदि दीक्षितस्य सतो यजमानस्य शरीरावयवे रुजा स्यादित्याह** । मानसेन हि दु:खेन शरीरमुपतप्यते । अय:पिण्डेन तप्तेन कुम्भसंस्थमिवोदकम् (भा० वन० २।२५) ।। **उपतप्यते रुज्यते, उष्णी भवति** । उपतप्यामहे तप: (अथर्व० ७।६१।२) । **उपतप्यामहे=तप्यामहे=अर्जयाम:** । उपतप्तोदका नद्य: पल्वलानि सरांसि च (रा० २।५९।५) । **उपतप्तोदका: शुष्कोदका:** । तानीषद् इवोपतप्य (श० ब्रा० २।५।२।१४) । **तानतुषान्**

यवान् किंचित्सोष्मणः सम्पाद्य। बन्धोपतापैश्च भवेद् विशेषः (सुश्रुत० २।३७६।८)। उपतापस्तापनम्। विवक्षितं ह्यनुक्तमुपतापं जनयति (शा० ३)। उपताप आधिः, मानसी व्यथा। आप्ता ह्यवितर्कस्मृतिविभागविदो निष्प्रीत्युपतापदर्शिनश्च (चरक० विमान० ४।४)। उपतापो द्वेषः। उपतापी वसीयान्भूत्वा ऽन्नमिच्छति (श० ब्रा० ८।५।२।१)। उपतापी उपतापवान्, रुग्णः, आतुरः। गा लवणं पाययत्युपतापिनीः (कौ० सू० १९)। उक्तोऽर्थः।

—तृद् (उतृदिर् हिंसानादरयोः)। ऊर्जे त्वेति तनिष्ठेऽन्तत एकशूलयोपतृणत्ति (आप० श्रौ० ७।६।१९।१) उपतृणत्ति भिनत्ति।

—त्सर् (त्सर छद्मना गतौ)। एतेनोपांशुयाजेन पाप्मानं द्विषन्तं भ्रातृव्यमुपत्सर्य वज्रेण वषट्कारेण हन्ति (श० ब्रा० १।६।३।२८)। उपत्सर्य चौरवदुपेत्य।

—दंश् (दंश दशने)। मूलकेनोपदंशं भुङ्क्ते (पा० उपदंशस्तृतीयायाम् ३।४।४७ सूत्रे वृत्तौ)। (मूलकेन) उपदश्य दशनैः खण्डयित्वा व्यञ्जनमिति कृत्वा। दश्यमानस्य मूलकस्य भुजिं प्रति करणत्वात् तृतीया। भुक्त्वाऽशनं विशालाक्षी सूपदंशान्वितं शुभम् (रा० २।६१।५)। उपदंशो व्यञ्जनम्। उपदंशार्थं मृगया (का० नी० सा० १५।५८ इत्यत्रोपाध्यायनिरपेक्षायाम्)। उपदंशार्थं दीपनार्थं जाठराग्नेः। ग्रन्थिवृद्ध्युपदंशानाम् (सुश्रुत० १।३।५)। उपदंशः शिश्नरोगविशेषः। हस्ताभिघातान्नखदन्तपातात्प्रधावनाद्वात्यतिसेवनाद्वा। योनिप्रदोषाच्च भवन्ति शिश्ने पञ्चोपदंशा विविधापचारैः (माधव० ४७।१)॥

—दय् (दय दानगतिरक्षणहिंसादानेषु)। नवेन पूर्वं दयमानाः स्याम (नि० ४।१७।२)। इत्युपदयाकर्मा। उपदया रक्षेति दुर्गः।

—दस् (दसु उपक्षये)। तत्ते सहस्व ईमहे दात्रं यन्नोपदस्यति (ऋ० ८।४३।३३)। नोपदस्यति न क्षीयते। सहस्वः=बलवन् (सम्बुद्धौ)। दात्रं दानं रातिः। न ते वाय उप दस्यन्ति धेनवो नाप दस्यन्ति धेनवः (ऋ० १।१३५।८)। नोपदस्यन्ति रोगादिना क्षीणा न भवन्ति। नापदस्यन्ति चौराद्यपहारेण नष्टा न भवन्ति। मा ते प्राण उपदसन्मो अपानोऽपि धायि ते (अथर्व-

५।३०।१४) । **मोपदसत् क्षयं मा गमत्** । कुर्वतो मे मोपदसत् (तै० सं० १।६।३।२) । **उक्तोऽर्थः । सामर्थ्यं कर्तृ, श्रद्धा वा कर्त्री** । स यदि राजोपदस्येत् (श० ब्रा० ४।२।२।५) । **उपदस्येत् निःशेषमुपयुक्तः स्यात् । राजा सोमः** । अनुपदासुकाऽस्य वाग्भवति (तै० सं० ६।१।८।५३) । **अनुपदासुका ऽनुपक्षयशीला** ।

**—दह् (दह भस्मीकरणे)** । स य उपदग्धेन हविषा यजते (श० ब्रा० ११।४।४।२) । **उपदग्धेन ईषद् दग्धेन अवदग्धेन** । अशान्तमुपदग्धं च यथा स्वादु न लक्ष्यते (सुश्रुत० सूत्र० ४६।४७८) ।

**—दा (डुदाञ् दाने)** । इन्द्रो यज्वने पृणते च शिक्षत्युपेद् ददाति न स्वं मुषायति ( ऋ० ६।२८।२ ) । **उपददाति दाशते प्रदिशति राति** । पुरा त उपेन्द्रो वीर्यं ददौ (अथर्व० १९।३४।८) । उत्कृत्य मेषवृषणाविन्द्रायोपददुः (रा० गोरे० १।५०।९) । तस्य चोपददौ पुत्रान् सहस्रं क्रतुसंमितान् (भा० अनु० १४।८८) । तस्य ते शर्मन्नुपदद्यमाने राया मदेन तन्वा तना च (ऋ० ६।४९।१३)। **उपदद्यमाने उपदीयमाने । दीयमाने । ते=तवेति तृतीयार्थे षष्ठी । तव=त्वया** । उपायनमुपग्राह्यमुपहारस्तथोपदेत्यमरः । बलायोपदाम् (वा० सं० ३०।९) । **उपदामुपदाया दातारम्** ।

**—दिश् (दिश अतिसर्जने, दिशिरुच्चारणक्रिय इति भाष्यम्)** । अभिधानस्य चोदकेष्वेवञ्जातीयकेष्वभियुक्ता उपदिशन्ति मन्त्रानधीमहे मन्त्रानध्यापयामः मन्त्रा वर्तन्त इति ( मी० २।१।३२ शा० भा० ) । **उपदिशन्ति कथयन्ति** । उपदेशं महाप्राज्ञ शमस्योपदिशस्व माम् (भा० शां० १७८।५) । उपदिशस्व=कथय ब्रूहि । पुरुषाणां तु पाण्डित्यं शास्त्रेणैवोपदिश्यते (मृच्छ० ) । **उपदिश्यते शिक्ष्यते शिष्यते** । नाशिष्यायोपदिश्यते ( पञ्चत० १।४३० ) । **उपदिश्यते शिक्षा ऽनुशासनं क्रियते** । निष्कामं ज्ञानपूर्वं तु निवृत्तमुपदिश्यते (मनु० १२।८९) । **उपदिश्यते व्यपदिश्यते कीर्त्यते संज्ञायते समाख्यायते** । न द्वितीयश्च साध्वीनां क्वचिद्भर्तोपदिश्यते ( मनु० ५।१६२ ) । **उपदिश्यते विधीयते शास्त्रेण** । उपदिशति कामिनीनां यौवनमद एव ललितानि (सा० द० ) **उपदिशति शिक्षयति** । स किंमन्त्री यः प्रथमं भूमित्यागं युद्धोद्योगं वोपदिशति (हितोप० ) । मूर्धानमुपदिशन् (श० ब्रा०, १०।६।१।११) । **उपदिशन् निर्दिशन्** ब्राह्मणस्यैव कर्मैतद् उपदिष्टं मनीषिभिः (मनु० २।१९०) । **उपदिष्टं विहितम्** । व्रतं यथोपदिष्टं वै यथावत् पारितं त्वया (सावित्र्युप० ४।१६) ।

**उक्तोऽर्थः ।** पृथूपदिष्टां दुदुहुर्धरित्रीम् (कु० १।२) । **इयं सा गोरूपधरा पृथिवीत्येवं निर्दिष्टाम् इत्यर्थः । उपदिष्टामादिष्टामिति तात्पर्यमिति तु संस्कृतशार्मण्यकोषः ।** केनेदमुपदिष्टं ते मृत्युद्वारमपावृतम् (रा० ३।४३।४०) । **उपदिष्टं वेदितं बोधितम् ।** उपदिष्टमिहेच्छामि तापस्यम् (भा० उ० १७५।४४) । **उपदिष्टमनुशिष्टम् ।** पृषोदरादीनि यथोपदिष्टम् (पा० ६।३।१०९) । **यथोपदिष्टं यथोच्चारितानि ।** अनर्थमिममर्थाभं केन त्वमुपदेशिता (रा० २।१२।५७) । **उपदेशिता उपदिष्टा बोधिता । स्वार्थे णिच् ।** किं कुलेनोपदिष्टेन शीलमेवात्र कारणम् (मृच्छ० ८।२९) । **उपदिष्टेन कीर्तितेन ।** विद्वानेवोपदेष्टव्यो नाविद्वांस्तु कदाचन । नरानुपदिश्याज्ञान् स्थानभ्रष्टाः खगा ययुः (हितोप० ३।५) । **उपदेष्टव्यः शासितव्यः ।** अपरिनिष्ठितस्योपदेशस्यान्याय्यं प्रदर्शनम् (माल० १) । **उपदेशः शिक्षा ।** उपदेशे ऽजनुनसिक इत् (पा० १।३।२) । **उपदेश आद्यमुच्चारणम् (आचार्यस्य) । धातुसूत्रगणोणादिनामलिङ्गानुशासनम् । आगमाः प्रत्ययादेशा उपदेशाः प्रकीर्तिताः ।।** शब्दानामितरेतरोपदेशः ( नि० १।२ ) । एष आदेशः । एष उपदेशः ( तै० उ० १।११।४ ) । न स्थास्यन्त्युपदेशे च शिष्याः (भा० वन० १९०।७४) । **शिष्याः शास्त्रविधिषु नास्थावन्तो भविष्यन्ति, तान् नानुविधास्यन्ति, नानुवर्त्स्यन्ति ।** उपदेशं महाप्राज्ञ शमस्योपदिशस्व माम् (भा० शा० १७८।५) । **उपदेशं लक्षणम् ।** उपदेश इति विशिष्टस्य शब्दस्योच्चारणम् (मी० शा० भा० १।१।५) ।

**—दिह् (दिह उपचये) ।** शिरोगलं कफोपदिग्धम् (सुश्रुत० २।३७६।११) । **उपदिग्धं विलिप्तम् ।** लोहानां च मणीनां च मलपङ्कोपदिग्धता (का० नी० सा० ७।२४) । मध्वाभदन्ताः सुविभक्तदेहा न चोपदिग्धा न कृशाः क्षमाश्च (गजाः) (व० बृ० सं० ६७।१) **उपदिग्धा मेदउपचयवन्त उपचिता मेदस्विनः, मेदुराः ।** पिलिल्कामुपदेहं च नचिरादेव नाशयेत् (का० सं० खिल० कुक्कुणचि० श्लो० ४०) ।

**—दी (दीङ् क्षये) ।** उपदायो वर्तते (पा० ६।१।५० सूत्रे वृत्तिः) । **उपदाय ईषत्क्षयः ।**

**—दीक्ष् (दीक्ष मौण्ड्येज्योपनयननियमव्रतादेशेषु) ।** नेदिष्ठमुपदीक्ष्य तेन सह यजेरन् ( का० श्रौ० २५।१३।२७ ) । **उपदीक्ष्य दीक्षयित्वा व्रतमादिश्य ।**

**—दुष् ( दुष वैकृत्ये ) ।** परामृष्टा अप्यसंरक्ता नोपदुष्यन्ति योषितः (हरि० ३।५।३९) । **नोपदुष्यन्ति न पतन्ति न पतिता भवन्ति ।**

—दुह् (दुह प्रपूरणे)। गावः कांस्योपदोहाश्च (हरि० ३।१३२।१३)।

—दृश् (दृशिर् प्रेक्षणे)। उपोदर्शि शुन्ध्युवो न वक्षः (ऋ० १।१२४।४)। उपोदर्शि उप समीपे दृश्यते, व्यक्तं दृश्यत इत्यर्थः। न उपादृश्यत च्छन्न आसारेण यथा गिरिः (भा० पु० ४।१०।१३)। नोपादृश्यत दृष्टेर्विषयो नाभूत्, न प्राज्ञायत। उप स्तोमान्तुरस्य दर्शथः श्रिये (ऋ० ८।२६।४)। पश्यतिर्ज्ञानकर्मा। जानीतमित्यर्थः। अथ बाल्याद् वैष्णवोप्यासीच्छैवतामुपपदर्शयन् (राज० ५।४३)। उपदर्शयन् मिथ्या दर्शयन् आभासयन् अपदिशन्। तेषां च कुहकाभिज्ञो ज्ञानित्वमुपदर्शयन् (कथा० १६।७५)। उक्तोऽर्थः। चतुष्पाद् व्यवहारोऽयं विवादेषूपदर्शितः (याज्ञ० २।८)। उपदर्शितो वर्णितः। निरन्तरशरनिकरधारासम्पातोपदर्शितदुर्दिन— (प्र० च० )। उपदर्शितमाविर्भावितमाभासितम्। ततो राज्ञः पुरो मामुपदर्श्य (हितोप० । उपदर्श्य निवेद्य। स य एवं विदुष उपद्रष्टा भवति (अथर्व० ११।३।५४)। उपद्रष्टा उप समीपे साक्षात्कर्ता। त्रिभिः साक्षाद् दृष्टं भवति। यश्च ददाति, यस्मै च दीयते यच्चोपद्रष्टा (साक्षाद् द्रष्टरि संज्ञायाम् इति सूत्रे भाष्ये)। उपद्रष्टा साक्षी। तस्य मेऽयमग्निरुपद्रष्टा (ऐ० ब्रा० ७।२४)। समीपे स्थित्वा साक्षित्वेनावलोकयितेत्यर्थः। उपद्रष्टाऽनुमन्ता च भर्ता भोक्ता महेश्वर (गीता० १३।२२)। उक्तोऽर्थः। स कर्मणामुप द्रष्टा भवति (आप० श्रौ० १०।१।१।१०)। साध्वसाधुनोः कर्मणोरनुसन्धातेत्यर्थः। न हि पक्षवता न्याय्यं निःस्नेहेन सुहृज्जने। पीड्यमान उपद्रष्टुं शक्तेनात्मा कथं चन (भा० आदि० २३३।१२)॥ उपद्रष्टुमुपेक्षितुम्। निःस्नेहेन नितरां स्नेहवता।

—द्रु (द्रु गतौ)। द्रवन्त्वस्य हरय उप नः (ऋ० ४।१६।१)। उपद्रवन्तु उपयन्तु। स्वान्गच्छतु ते मनो अधा पितॄँरुप द्रव (अथर्व० १८।२।२३)। उपद्रव=उपेहि। उपद्रव पयसा गोधुगोषम् (अथर्व० ७।७३।६)। उक्तोऽर्थः। पशून् यजमानस्योप दोद्राव (तै० सं० १।५१)। उपदोद्राव उपाद्रवत्, उपाप्लवत, आक्रामत्, जिघांसयाऽभ्यत्वरत। ततो वेगेन महता दानवा मामुपाद्रवन् (भा० वन० १६९।२१)। उपाद्रवन् अभ्ययुः। तमुपाद्रवद् उद्यम्य दक्षिणं दोर्निशाचरः (रघु० १५।२३)। मिहं वसान उप हीमदुद्रोत् (इन्द्रः) (ऋ० २।३०।३)। उक्तोऽर्थः। अविज्ञानाच्च मूढात्मा पुनः पुनरुपाद्रवत् (भा० शां० ३०९।४८)। क्लेशवानभूदित्यर्थः। इह द्रवतिरकर्मकः प्रयुक्तः। सव्रीहीणां यावदपासितुं गताः शुकान् मृगैस्तावदुपद्रुतश्रियाम् (शिशु० १२।४२)। उपद्रुतश्रियां विहतसम्पदाम् (व्रीहिमतां केदारसमूहानाम्) गता

गोपिका; । शरणागतश्च क्षुधार्तश्च शत्रुभिश्चाप्युपद्रुतः (हरि० ११५१) । **उपद्रुतः पीडितः कर्दथितः,विप्रकृतः** । पुंसामसमर्थानामुपद्रवायात्मनो भवेत्कोपः पञ्चत० १।३६८) । **उपद्रवोऽस्वास्थ्यम्, आबाधः** । मा भूत्ते मन्निमित्तमुपद्रवः (कथा० १७।८२) । **उपद्रव उपप्लवो विघ्नो दुःखं क्लेशः संङ्कटम् अनिष्टम्** । अकृतोप द्रवः कश्चिन्महानपि न पूज्यते । पूजयन्ति नरा नागान् न तार्क्ष्यं नागघातिनम् (पञ्चत० १।४७४) ।। **उक्तोऽर्थः** । विमले च प्रकाशेते विशाखे निरुपद्रवे (रा० ६।४।५०) । **नीहारादिः कान्तिविघातक उपद्रवः, तद्रहिते इत्यर्थः** । अन्नस्योपद्रवं पश्य मृतो हि किमशिष्यति (रा० २।१०८।१४) । **श्राद्धनिन्दायां वचनम्** । **उपद्रवो नाशः, दुरुपयोगः, व्यर्थ उपयोगः** । पूर्वोद्भव-निमित्तेन योऽपरो जायते गदः । तमुपद्रवमित्याहु रतीसारो यथा ज्वरे (का० सं० सूत्र० २७।५८) ।। **निगदव्याख्यातम्** । तत्रौपसर्गिको यः पूर्वोत्पन्नं व्याधिं जघन्यकालजो व्याधिरुपसृजति स तन्मूल एवोपद्रवसंज्ञः (सुश्रुत० १।१२७। १०) । उपद्रवेण जुष्टस्तु व्रणः कृच्छ्रेण सिध्यति (सुश्रुत० २।३६६।१०) । अविपाकोऽरुचिश्छर्दिर्निद्रा कासः सपीनसः । उपद्रवाः प्रजायन्ते मेहानां कास-जन्मनाम् (वाग्भट० नि० अ० १०) ।। अनृग्यजुरसामा च प्राजापत्य उपद्रवः (भा० शां० ६०।४४) । **उपद्रवति समीपं गच्छतीत्युपद्रवो दासः शूद्रः** ।

**—धा** (डुधाञ् धारणपोषणयोः) । उभोभयाविन्नुप धेहि दंष्ट्रा (ऋ० १०।८७।३) । **उपधेहि उपरि धेहि । उभा=उभे । दंष्ट्रा=दंष्ट्रे** । स वै कपालान्येवान्यतर उपदधाति (श० ब्रा० १।२।१।१) । **अधिश्रयतीत्यर्थः** । वर्चस्या (इष्टकाः) उपदधाति । तद्वानासामुपधानो मन्त्रः (पा० ४।४।१२५) इत्यत्र वृत्तिः । **उपदधाति चिनोति** । तदण्डं दक्षिणत उपधत्ते (का० श्रौ० ७।४।३) । **उपधत्ते निधत्ते** । आरोहोरुमुप धत्स्व हस्तम् (अथर्व० १४।२।३६) । **उपरि धारय, (शरीरेण) संयोजय** । द्वितीयतृतीययोस्तृतीयचतुर्थयोः पादयो-रवसानत उपदध्यात् प्रचेतनेति पूर्वस्यां प्रचेतयेत्युत्तरस्याम् (आप० श्रौ० ६।३।१३) । सलिले खलु स्वखुराक्रान्ते उपाधत्तावितावनिम् (भा० पु० ३।१३।४६) । **उपाधत्त=उपर्यदधात्** । उपधाय भुजं तस्य लोकनाथस्य सत्कृतम् । कथं नामोपधास्यामि भुजमन्यस्य कस्य चित् (रा० ५।२१।१६) ।। **उपधास्यामि उपधानं करिष्यामि, तस्योपर्यात्मानं धारयिष्यामि** । उप बर्बृहि वृषभाय बाहुम् (ऋ० १०।१०।१०) । अत्र यास्कः—**उपधेहि वृषभाय बाहुम् इति** । उप तेऽधां सहमानाम् (ऋ० १०।१४५।६) । **अभिभवित्रीमोषधिं शिरस उपधानं करोमीत्याह** । अक्ष्णोर्मुखेन्दुमुपधेहि ( महावीर० ४।५५ ) **उपधेहि सन्निहितं कुरु, सन्निधापय, समीपं प्रापय** । वृसीं चोपदध्यात् (गो० गृ०

४।२।१५) । **उपदध्यात् स्थापयेदिति सत्यव्रतः सामश्रमी ।** मा…त्वं भर्तारं लोकभर्तारमसद्-धर्ममुपादध (रा० २।३५।३०) । **उपादध आरोपय प्रापय ।** तद्धि (अयस्कान्तम्) व्यवहितमपि लोहे स्वां शक्तिमुपदधात्येव (व्यक्ति० १ वि०) । **उपदधाति सन्निवेशयति ।** स ह वा आत्मयाजी यो वेदेदं मेऽनेनाङ्गं संस्क्रियते इदं मेऽनेनाङ्गमुपधीयते(श० ब्रा० ११।२।६।१३)। **उपधीयते प्राप्यते । अङ्गं शरीरम् ।** वितानमस्योपदधुर्धनैर्घनैः (अवदा० जा० ३०।२८) । **उपरि धारयामासुरित्यर्थः ।** (अग्निम्) अधस्तान्नोपदध्याच्च (मनु० ४।५४)। **खट्वादेरधोऽङ्गारशकटयादि न स्थापयेदित्याह ।** चित्तज्ञानार्थमुपधास्यति वो राजा (कौ० अ० ६।५।२७)। **उपधास्यति परीक्षिष्यते । उपधा परीक्षा भवति ।** शूद्रोहं नाधिकारो मे चातुराश्रम्यसेवने । इति विज्ञानमपरे नात्मन्युपदधत्युत (भा० अनु० १६४।१०) ।। **नोपदधति छलं न कुर्वन्ति ।** उप त्मनि दधानो धुर्याशून् (ऋ० ४।२६।४) । **उपदधानो युञ्जानः ।** पुरवनितानां मनसि कुसुमशरासनमुपदधानः (भा० पु० ५।५।३१) । **उपदधानो जनयन् ।** स ततः पश्यति बुद्ध्याऽऽम्रांश्चापकृष्यमाणान्न्यग्रोधांश्चोपधीयमानान् (स्थानिवत्सूत्रे अथवा कार्यविपरिणामाद्वा सिद्धम् इति वार्तिके भाष्ये) । **उपधीयमानान् । आरोप्यमाणान् ।** अविद्ययाऽऽत्मन्युपधीयमाने (भा० पु० ५।५।६) **उपधीयमाने आच्छाद्यमाने आव्रियमाणे ।** प्रथमैरुपधीयमानः शकारः (ऋ० प्रा० ४२) । **वर्गप्रथमैरभ्यवहितः सन्परः शकार इत्यर्थः ।** पात्री स्फ्योपहिता (का० श्रौ० २।३।२८)। **स्फ्यस्योपरि निहितेत्यर्थः ।** प्राणे हीमान्यङ्गान्युपेव हितानि (श० ब्रा० ६।१।२।१५)। **उपहितानि स्थितानि ।** पुष्पं प्रवालोपहितं यदि स्यात् (कु० १।४४)। **प्रवालस्य विद्रुमस्योपरि निहितमित्यर्थः ।** क्रिया हि वस्तूपहिता प्रसीदति (रघु० ३।२९) । **वस्तुनि द्रव्ये भव्ये पात्रभूते उपहिता ऽऽहिता । क्रिया शिक्षा ।** शाल्योदनपिण्डमकुथितमविदग्धं रजतभाजनोपहितं वर्षति देवे वहिष्कुर्वीत (सुश्रुत० सूत्र० ४५।५) । **उपहितमुपरि निहितम् ।** यदराज्ञि राजवदिहार्घ्यमुपहितमिदं मुरद्विपि (शिशु० १५।१५) । **उपहितमर्पितम् ।** तदुपहितकुटुम्बः—**तदर्पितकुटुम्बभारः ।** उपहितं शिशिरापगमश्रिया मुकुलजालमशोभत किंशुके (रघु० ९।३१) । **उपहितमर्पितं दत्तम् ।** व्रीहीन् जिहासति सितोत्तमतण्डुलाढ्यान् । को नाम भोस्तुषकणोपहितान् हितार्थी (प्र० च० २।२२) ।। **उपहितान् छन्नान् ।** उपहितशोभां तूर्णमायादयोध्याम् (भट्टि० २।५५) । **(छत्रध्वजपताकाभिः) आरोपितशोभाम् ।** यदा तु भाग्यक्षयपीडितां दशां नरः कृतान्तोपहितां प्रपद्यते (मृच्छ० १।५१) । **अन्तकेन जनितामन्तकनिमित्ताम् इत्याह ।** अर्थोपहितया वाचा मारीचो वाक्यम-

ब्रवीत् (रा० ३।३१।३७, ३।३५।४०) । **अर्थोपहितया ऽर्थसंहितया ।** व्यराजत सभामध्ये हेम्नीवोपहितो मणिः।(भा० उ० ६४।५३)। **उपहितः प्रत्युप्तः ।** व्यक्तं त्वमप्युपहितः पाण्डवैः पापदेशज(भा०कर्ण० ४०।४६)। **उपहित उपजप्त इति नीलकण्ठः । उपजपित इति तु संस्कारवत्स्यात् । स्पश इति प्रेषित इति वार्थः ।** निवेशनं च कुप्यं च क्षेत्रं भार्या सुहृज्जनः । एतान्युपहितान्याहुः सर्वत्र लभते पुमान् (भा० शां० १३९।८६)।। **उपहितानि उपमित्राणि । अनन्तरपूर्वे पद्ये मित्राणि निरूपितानि निसर्गजानि, इह तद्भिन्नानि तत्सदृशान्युच्यन्त इति स्थान उपहितशब्द!उपमित्रमाह ।** शमनस्यानुरूपं मे पाण्डवोपहितं त्वया(भा० भीष्म० १२०।४८)। **उपहितमुपधानं दत्तम् ।** अधिजानु बाहुमुपधाय(शिशु० ६।५४)। **उपधाय उपरि निधाय ।** कटुकमिदं भेषजं मधुनोपधाय देह्यातुराय (इति वयम्) । **उपधाय आच्छाद्य ।** उपेत्य धीयते यस्मादुपधेति ततः स्मृता । उपाय उपधा ज्ञेया तयाऽमात्यान् परीक्षयेत् (का० नी० सा० ४।२६) ।। **निगदव्याख्यातम् ।** अयशोभिर्दुरालोके कोपधा मरणादृते (शिशु० १९।५८) । **उपधा उपायः ।** अलोऽन्त्यात् पूर्व उपधा (पा० १।१।६५) । **उपधा** धर्माद्यैर्यत् परीक्षणम् इत्यमरः । अमात्यानुपधातीतान् पितृपैतामहाञ्शुचीन् (रा० २। १००।२६, भा० सभा० ५।४३) । **वञ्चनारहितानित्यर्थः । उपधा उत्कोच इति तिलके रामः । तमतीतान् तदग्राहिण इति च सः ।** श्रिता ब्रह्मोपधा विप्राः खादन्ति क्षत्रियान्भुवि (भा० अनु० १५२।१७) । **उपधा छलम् । ब्रह्म वेदो यज्ञो वा ।** उपधाभिश्च यः कश्चित्परद्रव्यं हरेन्नरः । ससहायः स हन्तव्यः प्रकाशं विविधैर्वधैः (मनु० ८।१९३) ।। **उपधाः छलानि, छद्मानि ।** पञ्चोपधाव्यतीतांश्च कुर्याद्राजार्थकारिणः (भा० शां० ८३।२२) । **उक्तोऽर्थः ।** मायोपधा देवितारोऽत्र सन्ति ( भा० सभा० ५८।१४ ) । **मायामुपदधतीति मायोपधाः कपटपुरस्कारशीलाः ।** चिकित्सा तु नैष्ठिकी या विनोपधाम् । (चरक० शारीर० १।९२) । **उपधा तृष्णा ।** त्यागः सर्वोपधानां च सर्वदुःखव्यपोहकः (चरक० शारीर० १।९३)। **उक्तोऽर्थः ।** औपधेयं काष्ठम् । **उपधिरेवौपधेयम् । उपधीयत इत्युपधी रथाङ्गम् इति पा० ५।१।१३ सूत्रे वृत्तिः ।** सूतोपधावाप्तमिदं तवास्त्रम् (भा० कर्ण० ४२।८) । **सूतोपधौ सूतत्वपिधाननिमित्ते ।** तस्यैवं वर्तमानस्य सौबलेन जिहीर्षता । राष्ट्राणि धनधान्यं च प्रयुक्तः परमोपधिः (भा० उ० ९५।५८-५९) ।। **उपधिश्छलम् ।** विदधति सोपधि सन्धिदूषणानि (कि० १।४५) । **उपधिश्छलं कैतवं व्याजः ।** दानं नैकसुखोपधानसुमुखं सन्मित्रमात्यन्तिकम् (अवदा० कुल्माषपिण्डीजातके श्लो० २१) । **सुखोपधानं सुखजननम् ।** विशेषफलोपधानाभावात् ( पा० ६।३।३९ सूत्रे सि० कौ० ) ।

**उपधानं जननम्।** दक्षिणार्धे कपालोपधानम् (का० श्रौ० ५।८।१५)। यदा-सन्द्यामुपधाने (अथर्व० १४।२।६५)। **उपधानं शिरःप्रतिश्रयः।** सोपधानाः प्रासादाः (वि० पु० ४।२।६७)। दत्तवेतनभक्तं दत्तायुधपरिच्छदम्। दत्तो-पधानं च तदा बलमासीद् महाभुज (भा० वन० १५।२१)॥ **दत्तोपधानं कृतविशेषम्।** उपधानमुपाधिः। मया तु तयो र्दुरात्मनोरुपधानीकृता दृष्टपूर्वा-स्ते दीनाराः स्थगिताः (तन्त्रा० २।३)। अशेत भूमौ सह पाण्डुपुत्रैः पादोप-धानीव कृता कुशेषु (भा० आदि० १६२।१०)। **पादोपधानी पादस्पर्शं लभमानेत्यर्थः।**

—**धाव्(धावु गतिशुद्ध्योः)।** विश्वेषां त्मना शोभिष्ठमुपेव दिवि धावमानम् (ऋ० ८।३।२१)। **उपधावमानम् अभित्वरमाणम्।** अथैनमुवाच वरुणं राजान-मुपधाव (ऐ० ब्रा० ७।१४)। **उपधाव प्रार्थयस्व, शरणं याहि।** तं यद्युप वा धावेयुरुभयं वेच्छेरन् (ऐ० ब्रा० ५।४)। **उपधावनं समाश्रयणमिति षड्गुरु०। उपधावनमुपद्रव इति गोविन्दस्वामी।** क्वचिदातपोदकनिभान् विषयानुप-धावति (भा० पु० ५।१४।६)। **मृगतृष्णासदृशान् विषयानभित्वरत इत्यर्थः। सर्वत्र प्रसिद्धव्यपदेशपरीहारेण नूत्नकल्पितेनाभिधानेनाभिधेयमर्पयति। तदस्य कवेः शीलम्।** पार्ष्णिग्राहेण हरिणा समेनाप्युपधावनैः (भा० पु० ७।२।६)। **उपधावनैरुपासनाभिः प्रार्थनाभिः शरणीकरणैः।**

—**धूप् (धूप सन्तापे)।** धूमकेतौ सप्तर्षीनुपधूपयति (सति) (कौ० सू० ६३।१२७)। **धूमेनावृण्वति सति। तमसाऽऽच्छादयति सति।** पावकार्चिषः सधूमा निष्पेतुः। ताभिर्नागलोक उपधूपिते (भा० आदि० ८१५)॥ **उपधूपिते सन्तप्ते।**

—**धृ(धृञ् धारणे)।** यत्र स्थूणा हिरण्मयी मणिरत्नमयी चान्या प्रासादमुप-धारयत् (भा० वि० १७६५)। **उपधारयत् उपाधारयत् अवाष्टम्नात्, अवाल-म्बत।** मेखलाभ्रमनिष्कासगवाक्षान्नापधारयेत् (कात्या० स्मृ०)। **नोपधारयेत्= न निरुन्ध्यात्।** तांस्तु गायत्र्य इत्युपधारयेत् (ऋक् प्रा० १७।३)। **उपधारयेत् अवधारयेत्, निश्चिनुयात्, जानीयात्, विद्यात्।** तमस्तदुपधारयेत् (भा० शां० २८५।३१)। तद्वचनमपि धीयमानं न सम्यगुपधारयामास (अवदा० )। **नोपधारयामास नावधारयामास, न निश्चिकाय।** इदं दुर्गं महाघोरं तीर्ण-मेवोपधारय (भा० द्रोण० ११६।१७)। **उपधारय जानीहि।** न करिष्यसि चेदेवं मृतां मामुपधारय (भा० आदि० २१४।३०)। एतद्योनीनि भूतानि सर्वाणीत्युपधारय (गीता ७।६)। तथा सर्वाणि भूतानि मत्स्थानीत्युपधारय

(गीता ६।६)। दर्शनादेव रामस्य हतं मामुपधारय (रा० ३।४१।१८)। पिपासा चा बुभुक्षा वा ग्लानिश्चिन्तापि वानघ। न मन्दारवने वीर भवतीत्युपधारय (हरि० २।८६।६०)॥ **अत्र सर्वत्रोदितचर एवार्थः।** अचिन्त्यकल्पं नृपतेस्तं शोकमुपधारयन् (रा० २।१८।७)। **उपधारयन् निश्चितं जानानः।** उपधार्य वचस्तस्या भगवान् भक्तवत्सलः (भा० पु० १।८।११)। **उपधार्य श्रुत्वा।** शील उपधारण इति धातुपाठः। **उपधारणमभ्यासः, परिचय इत्येक इति क्षीरतरङ्गिण्यां स्वामी।**

**—धृष् (त्रिधृषा प्रागल्भ्ये)।** सोऽपूयत। तं देवा नोपाधृष्णुवन् (तै० सं० ६।४।७।३१)। **उपसङ्ग्रहीतुं नाशक्नुवन् इत्यर्थः। स सोमः।** तानेव वज्रानुद्यतानसुरा नोपाधृष्णुवन् (जै० ब्रा० १।१२४)। **नोपाधृष्णुवन् उपैतुं नोदसहन्त।** अथ हैतत् कर्मोपदधर्ष (श० ब्रा० ६।५।२।१)। **अस्मै कर्मण उत्सेहे, एतत्कर्मोपक्रमितुं प्रजगल्भे।**

**—धे (धट् पाने)।** अन्याऽन्यावत्समुपधापयेते (ऋ० १।९५।१)। **उपेत्य पाययेते इत्यर्थः।**

**—ध्मा (शब्दाग्निसंयोगयोः)।** तं (अग्निं) प्रजापतिरेतेन साम्नोपाधमत् (पञ्च० ब्रा० १३।३।२२)। **उपाधमद् अवीजयत्।** यदीमह त्रितो दिव्युपध्मातेव धमति (ऋ० ५।९।५)। **उक्तोऽर्थः। यदीमह=यद् ईम् अह।** नाग्निं मुखेनोपधमेत् (मनु० ४।५३)। (अग्निः) नानुपध्मातो नानुपज्वलितो ज्वलति (श० ब्रा० ११।८।३।७)। **अनुपध्मातः=अधुतः, अधूतः।** ततः शङ्खमुपाध्मासीत् (भा० वि० ४६।२१, वि० पु० ५।३०।२)। **उपाध्मासीत् अपूरयत्। लुङि रूपम्।** पूतिरज्जुरुपध्मानी पूतिं सेनां कृणोत्वमूम् (अथर्व० ८।८।२)। **उपध्मानी उपरि निःश्वसती। उपरि फूत्कुर्वती।**

**—ध्वंस् (ध्वंसु अवस्रंसने गतौ च)।** कृत्यापिशाचरक्षःक्रोधाधर्मैरुपध्वस्यन्ते (सुश्रुत० १।२१।१४)। **उपध्वस्यन्ते उपद्रूयन्तेऽसकृदुपेयन्ते, पीड्यन्ते।** इन्द्रस्य रूपं समृद्ध्यै सावित्रमुपध्वस्तम् (तै० सं० २।१।६।३)। **उपध्वस्तो विभिन्नवर्णः, बहुबिन्दुचितशरीर इति भट्टभास्करः।**

**—नद् (णद अव्यक्ते शब्दे)।** कृकवाकूपनादिताः (मार्गाः) (रा० २।२८।१०)। **उपनादिताः प्रतिध्वनिताः।**

**—नम् (णम प्रह्वत्वे शब्दे च)।** उपैनं सहस्रं नमति (ऐ० ब्रा०

२२।६) उपनमिः स्वयं प्राप्त्यर्थ इति षड्गुरुशिष्यः । उपनमति स्वयं प्राप्नोतीत्यर्थः । यदैवैनं कदा च यज्ञ उपनमेदथाग्नी आदधीत (श० ब्रा० २।१।३।६) । यज्ञ उपनमेत्=यज्ञस्याजिहीर्षा स्यात्, यष्टुं कामोऽस्योपतिष्ठेत । यमलं राज्याय सन्तं राज्यं नोपनमेत् (तै० सं० २।१।३।४) । नोपनमेन्न विन्देत् । यं कामो नोपनमेदग्निमेव कामं स्वेन भागधेयेनोपधावति (तै० सं० २।२।३।१) । उप माऽदो नमतु (वा० सं० २६।२) । मत्संभोगः कथमुपनमेत्स्वप्नजोपि (मेघ० ९२) । अकृच्छ्रलङ्घ्याः पन्थानो वल्लभातिथयो गृहाः । उपानमन्गच्छतोऽस्य सत्क्रियाश्च पदे पदे (राज० ३।२२४) ।। उक्तोऽर्थः । स यद्येनं मनसाऽभिध्यातः । यज्ञो नोपनमेत् (श० ब्रा० १२।६।१।३) । नोपनमेन्न सिध्येत् । अभ्याशो ह यदेनं साधवो धर्मा आ च गच्छेयुरुप च नमेयुः (छां० उ० २।१।४) । उपनमेयुर्भोग्यत्वेनोपतिष्ठेयुरिति शङ्करः । अभ्याशः क्षिप्रम् । दुर्बलमभिजातं प्रकृतयः स्वयमुपनमन्ति (कौ० अ० ८।२।२३) । उपनमन्ति प्रणता भवन्ति, विधेयतां गच्छन्ति । (पिण्डान्) कुमार्या उपनामयेत् (गो० गृ० २।१।३) । उपनामयेत् समीपे स्थापयेत् । द्विजगुरुदरिद्रमित्रप्रव्रजितोपनतसाध्वनाथाभ्युपगतानाम् (सुश्रुत० सूत्र० २।५)। उपनतः संनिधाने प्रणतः । कस्यात्यन्तं सुखमुपनतं दुःखमेकान्ततो वा (मेघ० १११) । उपनतं प्राप्तम् । अनुपास्यति कथं वाष्पदूषितं परलोकोपनतं जलाञ्जलिम् (रघु० ८।६८) । इति चोपनतां क्षितिस्पृशं कृतवानासुरपुष्पदर्शनात् (रघु० ८।८१) । उपनतां शरणागताम् । भद्रासनादुपनतं पदपल्लवाग्रं संवाहयति (चम्पूभा० ८।३३) । उपनतमधः प्रसारितम् । अग्नेरर्धं प्रत्युपनतं यूपस्य कुर्याद् बहिष्टान्निनतम् (भा० श्रौ० ७।८।११) । उपनतम्=प्रवणं निम्नम् । दण्डेनोपनतं शत्रुमनुगृह्णाति यो नरः (भा० आदि० १४०।८३) । उपनतमुपनमितं नामितं न्यग्भावितं, वशे कृतं विधेयीकृतम् । स्वयमुपहतः, विप्रकृतः… दण्डेनोपनतः…इति भीतवर्गः (कौ० अ० १।१४।३) । दण्डेनोपनतो बलाद् वैतसीं वृत्तिं ग्राहितः । तस्मिन्दण्डोपनतचरितं भेजिरे लोकपालाः (रघु० १७।८१) । उक्तोऽर्थः । मांसं म उपनतिः (वा० सं० २०।१३) । उपनमन्ति प्रवणा भवन्ति भूतानि यत्र सा उपनतिः । उपनामुक एनं यज्ञो भवति (श० ब्रा० २।२।४।१४) । अस्याभिमुखो भवतीत्याह । तत्सान्निध्यमाप्नोतीति वा ।

—नह् (णह बन्धने) । वृष्णो अश्वस्य सन्दानमपि वृष्ट्यै त्वोपनह्यामि (तै० सं० २।४।७।२) । उपनह्यामि नह्यामि बध्नामि । गुल्मं तमुपनाहयेत् (चरक० चि० ५।४१) । तत्र लेपं दद्यादित्यर्थः । पुरटोपनद्ध० । हेमप्रत्युप्त० । अथ राजानं क्रीत्वा द्वेधोपनह्य परिवहन्ति (श० ब्रा० ५।४।५।१५) । उपनह्य बद्ध्वा । उपनह्य परैर्वैरं ये मां नित्यमुपासते (भा० उ० १४६।१२)।

सस्नेहकिण्वलवणैरुपनाहः प्रशस्यते (चरक० सुत्र० १४।३५)। **उपनाहो बहलो लेपः।** उत्कारिकोपनाहैश्च स्वेदयेन्मृदुभिः क्षणम् (चरक० चि० १७।८०)। शोफयोरुपनाहं कुर्यादामविदग्धयोः (सुश्रुत० २।५।२१)। **उक्तोऽर्थः।** देवानां भाग उपनाह एषः (अथर्व० ६।४।५)। **उपनाहो भारः।** उपनाहोऽवगाहश्च परिषेकस्तथाष्टमः (का० सं० सूत्र० स्वेदा० २३।२६)। **उपनाहः स्वेदप्रकारः।** उपनाहो निबन्धनम् इत्यमरः। **निबध्यन्ते स्मिन्निति निबन्धनम्। यत्र तन्त्र्यो निबध्यन्ते तस्य वीणाया ऊर्ध्वभागस्य उपनाह इति संज्ञा।** सोमोपनहनमाहर (श० ब्रा० ३।३।२।३)। प्रेष्यति च सोमोपनहनमाहर (का० श्रौ० ७।७।१)। **सोम उपनह्यते बध्यते यस्मिंस्तत्सोमोपनहनं वस्त्रम्।**

**—नाथ्** (नाथृ नाधृ याच्ञोपतापैश्वर्याशीःषु)। माणवकमुपनाथति, अङ्ग पुत्रकाधीष्व (पा० २।३।५५ सूत्रवृत्तौ प्रत्युदाहरणम्)। **उपनाथति याचते उपच्छन्दयति।** राजानमुपनाथति। **याचते प्रार्थयते।**

**—नी (णीञ् प्रापणे)।** देवेभ्यो दैव्यः शमितोप हव्यं त्रिधा समक्तं नयतु प्रजानन् (ऋ० २।३।१०)। **उपनयतु प्रापयतु।** तमृचो मनुष्यलोकमुपनयन्ते (प्रश्नोप० ५।३)। प्रजाः स्वं वशमुपनयते (श० ब्रा० १।३।४।५)। अयोऽभेद्यमुपायेन द्रवतामुपनीयते (का० नी० सा० ११।४७)। **उपनीयते प्राप्यते।** स शुचीन्यन्नपानानि गुणवन्ति च राघवे। अर्घं चोपानयत् (रा० गोरे० २।४७।१३)॥ **उपानयत् आर्पयत् न्यवेदयत्।** हरये स्वदेहमुपानयत् (रघु० २।५६)। उपनिन्युर्महाभागा दुहितृत्वाय जाह्नवीम् (हरि० १।३२।४७)। **उक्तोऽर्थः।** रज्ज्वेव पुरुषो बद्ध्वा कृतान्तेनोपनीयते (रा० ५।३५।३)। **उपनीयत आत्मसमीपं प्राप्यते।** उपनय रथं यावदारोहामि (शा०)। **उक्तोऽर्थः।** नेयं कर्मोपयुक्तं पुरुषमुपनयति किन्त्वकर्तारमभोक्तारमीश्वरम् (प्र० च० )। **उपनयति सम्पादयति।** मदीयं न्यासमुपनय (मृच्छ०)। **प्रत्यर्पयेत्यर्थः।** समिधमाहर सोम्य उप त्वा नेष्ये (छां० उ० ४।४।५)। **आत्मानमाचार्यीकुर्वंस्त्वां स्वसमीपं प्रापयिष्यामीत्यर्थः।** जातमात्रं मुनेः पुत्रं विधिनोपानयत्तदा (भा० शां० ३२४।१६)। **शिष्यत्वेनाभ्युपैत्।** कर्मकरानुपनयते (पा० १।३।३६ सूत्रे वृत्तौ)। **भृतिदानेनात्मसमीपं प्रापयतीत्यर्थः।** आचार्य उपनयमानो ब्रह्मचारिणं कृणुते गर्भमन्तः (अथर्व० ११।५।३)। अन्धा यथान्धैरुपनीयमानाः (भा० पु० ७।५।३२)। **इहोपेन नार्थः। अनुकार्ये मूल औपनिषदेपि नैव दृश्यते। नीयमाना इत्येवार्थः।** भीमा जाया ब्राह्मणस्योपनीता (ऋ० १०।१०६।४)। **उपनीता देवैः समीपे स्थापितेति सायणः। उपनीता वशे कृता, स्वीकृताऽऽत्मीया कृतेत्यन्ये।** नीलस्य राज्ञः सर्वेषामुपनीतश्च सोऽभवत्

(भा० सभा० ३१।३०)। **उपनीतः स्वीकृत इति नीलकण्ठः**। इमे सभायामुपनीतशास्त्राः (भा० सभा० ६७।३६)। **उपनीतशास्त्रा अध्यापितशास्त्राः**। सर्वस्मान् धान्यानि च सङ्ग्रहमुपनीय (व० बृ० सं० ४१।४)। **संग्रहमुपनीय = सङ्गृह्य। सङ्ग्रहावस्थां प्रापय्येति त्वक्षरार्थः**। न ब्राह्मणं ब्रह्मचर्यमुपनीय मिथुनं (= मैथुनम्) चरेत् (श० ब्रा० ११।५।४।१६)। **ब्रह्मचर्यं प्रापय्य, ब्रह्मचारिणं कृत्वा, शिष्यत्वेन विधिवत् परिगृह्येत्यर्थः**। तान्हानुपनीयैवैतदुवाच (छां० उ० ५।११।७)। **अनुपनीय उपनयनमकृत्वा। उपनयनं पादयोः प्रणिपातनम्**। जनस्थाने वसद्भिस्तु भवद्भी राममाश्रिता। प्रवृत्तिरुपनेतव्या किं करोतीति तत्त्वतः (रा० ३।५४।२६)॥ **प्रवृत्तिरुपनेतव्या वार्ताऽऽहार्या**। समिद्भैक्षे सप्तरात्रमचरितवान् ब्रह्मचारी पुनरुपनेयो भवति (गो० गृ० १।२।६)। **पुनरुपनयनविधिना संस्कार्यो भवतीत्यर्थः**। गर्भाष्टमे ब्राह्मण उपनेयः (पा० गृ० ६।६।८४)। **उक्तोऽर्थः**। तथा मरणानुस्मृतिवर्णोऽनित्यताकथायामप्युपनेयम् (अवदा० अयोगृहजा०)। **पञ्चावयवन्याये यश्चतुर्थ उपनयो नाम स वक्तव्य इत्यर्थः**। प्रतिज्ञाहेतूदाहरणोपनयनिगमनानि पञ्चावयवा न्यायस्य। तथा चायमित्युपनयस्याभिनयः। संभोगोपनयैर्नृणाम् (भा० वन० २।२४)। **उपनयैः = समर्पणैः**। धारासारोपनयनपरा नैगमाः सानुमन्तः (विक्रम० ४।१३)। **उपनयनं समर्पणम्। धारासार आसारवद् वर्षम्। अविच्छिन्नसन्तानो धनोपहारश्च।**

—**नुद्** (णुद प्रेरणे)। द्रुतमरुदुपनुन्नैः···अम्बुवाहैः (शिशु० ४।६८)। **उपनुन्नैरर्वाक् प्रेरितैः।**

—**पद्** (पद गतौ)। उपानृत्यंश्च राजानं नृत्यगीतविशारदाः (रा० ७।४२।२०)। **उपानृत्यन् समीपेऽनृत्यन्**। ये स्मान्पुरोपनृत्यन्त मूढा गौ गौं रिति (भा० शल्य० ५६।७)। **उक्तोऽर्थः**। यमुपनृत्यन्ति शतशोऽप्सरोगणाः (हरि० १४१५५)। **उदितचर एवार्थः**। उपगीतोपनृत्तश्च गन्धर्वाप्सरसां गणैः (भा० उ० १२३।४)। **प्रत्यये विशेषो नार्थे।**

—**नृत्** (नृती गात्रविक्षेपे)। उपेदहं धनदां···श्येनो न वसतिं पतामि (ऋ० १।३३।२)। **उपपतामि उपाप्नोमि उपैमि। उपेदहम् = उप इद् अहम्।**

—**पद्** (पद गतौ)। वत्सो धारुरिव मातरं (कृत्या)तं प्रत्युपपद्यताम् (अथर्व० ४।१८।२)। **उपपद्यतां प्राप्नोतु उपद्रवतु, अभियातु**। अहिंस्युपपद्यते स्वर्गम् (व० ध० २६।३)। **उपपद्यते प्राप्नोति उपैति**। कृपाच्छारद्वताच्छूरः सर्वास्त्राण्युपपत्स्यते (भा० सौ० १६।१४)। **प्राप्स्यतीत्यर्थः। वेदाक्षहृदयं कृत्स्न-**

महं सत्यपराक्रम । उपपद्यस्व कौन्तेय प्रसन्नोहं भवामि ते (भा० वन० ७९ १९) । **उपपद्यस्व प्राप्नुहि । शिक्षस्वेत्यर्थः** । प्रतिषेद्धा हि पापस्य यदा लोकेषु विद्यते । तदा सर्वेषु लोकेषु पापकृन्नोपपद्यते ( भा० आदि० १८०।९ ) ॥ **नोपपद्यते न लभ्यते, न विद्यते** । नैतदावर्तते राजन्नस्त्रं द्विर्नोपपद्यते ( भा० द्रोण० २००।२७ ) । **द्विर्नोपपद्यते पुनर्न लभ्यते, न प्रतिलभ्यते** । यमुनातटमुपपेदे (पञ्चत० ) । **आससादेत्यर्थः** । कामं दृष्टा मया सर्वा विश्वस्ता रावणस्त्रियः । नहि मे मनसः किञ्चिद् वैकृत्यमुपपद्यते (रा० ५।११।४०) ॥ **उपपद्यते उत्पद्यते जायते** । अथ चेन्मानुषे लोके कदाचिदुपपद्यते (भा० अनु० १४४।५९) । कथं शरीरं च्यवते कथं चोपपद्यते(भा० आश्व० १७।२)। अभितः स्वैः शुभैः पुण्यैः पापैर्वाप्युपपद्यते (भा० आश्व० १७।३०) । **अभितः सद्यः । उपपद्यते जायते** । पाद्यमर्घ्यं तथातिथ्यं वने यदुपपद्यते (रा० २।९१।२) । **उपपद्यते जायते लभ्यते वा** । यदा च कार्यमस्माकं भवद्भिरुपपत्स्यते (भा० आदि० १४५।१७) । **उपपत्स्यते जनिष्यते भविष्यति । कार्यं प्रयोजनम्** । अतिस्नेहो ह्यकाले च व्यसनायोपपद्यते (रा० ६।२१।३४) । **उपपद्यते जायते कल्पते** । दुष्टं पन्थानमासाद्य यो मोहादुपपद्यते । आत्मनो बलमविज्ञाय तदन्तं तस्य जीवितम् (भा० शां० १३९।७८) ॥ उपसर्जनं प्रधानस्य धर्मतो नोपपद्यते (मनु० ९।१२१) । **नोपपद्यते न युज्यते न सम्बध्यते । उपसर्जनं क्षेत्रजः पुत्रः । धर्मतो धर्मेण** (पितुः क्षेत्रिणः) । परा त्वत्तो गतिर्वीर पृथिव्यां नोपपद्यते (रा० ३।६।२०) । **नोपपद्यते न संभवति** । त्वदन्यः संशयस्यास्य च्छेत्ता न ह्युपपद्यते (गीता० ६।३९) । दार्शं चेत्पूर्वमुपपद्येत (खा० गृ० १।२।२) । अन्यदुप्तं जातमन्यद् इत्येतन्नोपपद्यते (मनु० ९।४०) । निःसङ्गस्य ससङ्गेन कूटस्थस्य विकारिणा । आत्मनो ऽनात्मना योगो वास्तवो नोपपद्यते ( भा० आदि० १९६।१३ इत्यत्र नीलकण्ठस्य सुभाषितम्) । **उक्तोऽर्थः** । क्लैव्यं मा स्म गमः पार्थ नैतत्त्वय्युपपद्यते (गीता० २।३) । **नोपपद्यते न युज्यते, तवानुरूपं न भवति** । मा विषादं गमस्तस्मान्नैतत्त्वय्युपपद्यते ( भा० वन० ) । **उक्तोऽर्थः** । असन्धेयमिति ह विश्वामित्र उपपपाद (ऐ० ब्रा० ७।१७) । **युक्तिभिरुपपादितवानित्यर्थः** । स मे कपिश्रेष्ठ सलक्ष्मणं प्रियं सयूथपं क्षिप्रमिहोपपादय (रा० ५।३७।६८) । **उपपादय प्रापय उपनय मदन्तिकं नय** । रथमुपपादय (वेणी० २) । **उपपादय सज्जी कुरु । अश्वैर्योजयेति त्वक्षरार्थः** । अन्नार्थी तं त्वमन्नेन समांसेनोपपादय (भा० आदि० १७६।२९) । **उपपादय योजय । तस्यार्थं उपकल्पय** । ताश्च रोगप्रकृतयो रसान्सम्यगुपयुञ्जानमपि पुरुषमशुभेनोपपादयन्ति (चरक० सूत्र० २८।७)। अनुतिष्ठेत्समारब्धमनारब्धं प्रयोजयेत् । अनुष्ठितं च सद्वृत्त्या

विशेषेणोपपादयेत् (का० नी० सा० ११।५७) ।। **उपपादयेत् योजयेत । सदाचरणेनानुष्ठिते कर्मणि वैशिष्ट्यं प्रकर्षमादधीत । तस्योपस्कुर्वीतेति वाक्यार्थ: ।** आत्मानं प्रथमं राजा विनयेनोपपादयेत् (का० नी० सा० १।२५) । उपांशुदण्डेन हि मां बन्धनेनोपपादयेत् (रा० ४।५५।१०) । **उक्तोऽर्थः ।** समद्यान्यन्नपानानि भूयिष्ठं चोपपादयेत् (का० सं० चि० मदात्ययचि० श्लो० ४८) । **उपपादयेत् साधयेत् ।** यस्तु दोषवतीं कन्यामनाख्यायोपपादयेत् (मनु० ६। ७३) । **उपपादयेत् (विवाहे) दद्यात् ।** वेदतत्त्वार्थविदुषे ब्राह्मणायोपपादयेत् (मनु० ३।९६) । सर्वस्वं वेदविदुषे ब्राह्मणायोपपादयेत् (मनु० ११।७६) । दक्षिणाश्चोपपाद्यन्तां याज्ञिकेभ्यः पृथक् पृथक्(मात्स्य० पु० १७८।७३)। काम्यकर्मफलं लब्ध्वा गुरूणामुपपादयेत् (भा० शां० १९३।१५) । **अर्पयेत्, निवेदयेत् ।** अप्सु प्रवेश्य तं दण्डं वरुणायोपपादयेत् (मनु० ९।२४४)। **इहापि दानमेवार्थः, उत्तरार्धे ब्राह्मणे प्रतिपादयेदिति श्रुतेः ।** (देशं) दक्षिणाप्रवणं प्रयत्नेनोपपादयेत् ( मनु० ३।२०६ ) । **उपपादयेत् सम्पादयेदिति कुल्लूकः । अनुसन्दधीत मार्गेदित्यन्ये ।** नाश्विनावार्तं भेषजेनोपपादयेताम् (चरक० वि० ३।३८) । **चिकित्सेताम् उपचरेतामित्यर्थः ।** आस्थापनवमनविरेचनैस्तदहरेवोपपादयेद् उपपादनीयश्चेत्स्यात् (चरक० वि० ७।१९) । अर्शःप्रभृत्यधीमांसं छेदेनोपपादयेत् (चरक० चि० ५। ) । **उक्तोऽर्थः ।** प्रयाण उपपद्यमाने (आश्व० गृ० १।८।१) । **याने संभवति सतीत्यर्थः ।** आजुहाव ततो नाम्ना तदन्नमुपपादयन् (भा० आदि० १६३।५) । **उपपादयन् प्रापयन् समर्पयन् ।** अविघ्नमस्तु ते देवकार्यमुपपादयिष्यतः ( रघु० ११।९१ ) । **उपपादयिष्यतः साधयिष्यतः ।** तेन मे विप्रयोगोऽयमुपपन्नस्त्वया सह (भा० आदि० १२१। २७)। **उपपन्नः प्राप्त उपनतः, जातः संवृत्तः ।** तस्मै स विद्वान् उपपन्नाय प्राह (वे० सा०) । **उपपन्न उपसन्नः शिष्यत्वेनोपेतः ।** शिष्यवत्त्वां नु पृच्छामि उपपन्नोस्मि तेऽनघ (भा० आदि० ११९१) । तद्भगवन्तमुपपन्नाः स्मः शिष्यत्वेन (सुश्रुत० सूत्र० १।२) । **उक्तचर एवार्थः ।** यथोपपन्नमाहारं तस्मै प्रादाज्जनाधिपः (भा० अनु० ५२।२८) । **यथोपपन्नं यथाप्राप्तम् । यादृशं लब्धमित्यर्थः ।** भाषिकस्वरो वोपपन्नमन्त्रोपदेशात् (का० श्रौ० १।८।१७) । **उपपन्नः (संहितास्वरेण) युक्तः ।** उपपन्नो गुणैरिष्टै रूपवानश्वकोविदः (भा० वन० ५३।१) । नहि सामोपपन्नानां प्रहर्ता विद्यते क्वचित् (रा० ४। ५९।१७) । सृजेः श्रद्धोपपन्ने कर्तर्येवेति वाच्यम् (पा० ३।१।६३ सू० वा०) । **श्रद्धोपपन्ने श्रद्धया युक्ते ।** श्रद्धेव साक्षाद् विधिनोपपन्ना (रघु० २।१६) । सत्त्वबुद्ध्युपपन्नो व्यसनग्रस्तमानसः । श्रीभिः षण्ड इव स्त्रीभिरलसः परिभूयते

(का० नी० सा० १४।२०।८)। ब्रवीतु भगवान्नीतिमुपपन्नो ऽस्म्यहं प्रभो (भा० शां० १०५।४)। **उपपन्नः पौरुषेण युक्त इत्यर्थः।** उपपन्ना त्वया भैमी त्वं च भैम्या महीपते (भा० वन० ७६।३६)। **उपपन्ना सदृशीत्यर्थः।** उपपन्ना हि दारेषु प्रभुता सर्वतोमुखी (शा० ५।२६)। **उपपन्ना युक्ता, समुचिता, स्वाभाविकी, सिद्धा।** कामकारो महाप्राज्ञ गुरूणां सर्वदाऽनघ। उपपन्नेषु दारेषु पुत्रेषु च विधीयते (रा० २।१०१।१८)॥ **उपपन्नाः समताः। शरणं गताः पराधीना इति चाक्षरार्थः।** पुरुषः कैश्च कर्मभिः। उपपन्नान् सुखान्भोगानुपाश्नाति (भा० अनु० १४४।५८)। छेद्यभेद्यलेख्यव्यधनै रुपपन्नैरुपपाद्य कर्णम् (सुश्रुत० १।५६।२०)। **उपपन्नैरौपयिकैः।** कथं चिन्मृगशावाक्षी विश्वासमुपपादिता (रा० ५। )। **उपपादिता प्रापिता।** भ्रात्रा सुनाभेन तदोत्सवे कृते सा शङ्कराभ्याशमथोपपादिता (वामन० पु० ५३।३५)। एतस्य हि पिता नागश्चिकुरो नाम मातले। नचिराद्वैनतेयेन पञ्चत्वमुपपादितः (भा० ५।१०३।२४)। **उक्तोऽर्थः।** उपपादितमद्येह चिरकालान्मनोगतम् (भा० वन० ११।२८)। **उपपादितं साधितम्।** तत्तथैवोपपादितम्। (भा० पु० ११।६।२१)। त्वया सह गदायुद्धं त्रिदशैरुपपादितम् (भा० शल्य० ५६।४०)। **उपपादितं साधितम्, जनितम्।** सहन्ते पापमात्रोपपादितां दुःखवह्निकणिकाम् (हर्ष०)। **उक्तोऽर्थः।** तत्सुषेणमतं कार्यं देशकालोपपादितम् (रा० ४।४३।६६)। **देशकालोचितमित्यर्थः।** जघने लक्षणं देव्याः केनेदमुपपादितम् (बृ० क० म०)। **उपपादितं साधितं निर्मितं कृतम्।** देशमात्राकालोपपादितैः। भेषजैः (चरक० सूत्र० १।६१)। **उपपादितैः कल्पितैः, साधितैः।** रक्षःकपीन्द्रैरुपपादितानि···जलानि···(रघु० १४।८)॥ **उपपादितानि उपनीतानि।** उपायनानि पश्यन् पुलिन्दैरुपपादितानि (रघु० १६।३२)। **उपपादितानि समर्पितानि उपहृतानि।** अक्षयोऽयं निधी राज्ञां यद्विप्रेषूपपादितम् (याज्ञ० १।३१५)। **उपपादितं दत्तम्।** यवाढकः पितुर्गृहे ब्राह्मणायोपपादितः (बृ० श्लो० सं० ४।१०६)। **उक्तोऽर्थः।** केऽमीत्यनेन पदेन वाच्यमस्पष्टमभिदधता प्रतीयमानं वस्त्वक्लिष्टमनन्तमर्पयता का छाया नोपपादिता (ध्वन्या० लो० ३।३८)। **उपपादिता उत्पादिता।** यादृशं तूप्यते बीजं क्षेत्रे कालोपपादिते (मनु० ९।३६)। **ग्रीष्मादिकाले वर्षादिना संस्कृत इति कुल्लूकः।** उताब्रह्मचारी यथोपपादमूत्रपुरीषो भवति (नास्याचमनकालो विद्यते) (आप० ध० २।६।२५) इत्यत्रोज्ज्वलायां समुद्धृतं वचनम्)। **यथोपपादं यथासंभवम्। यथाप्राप्तम्।** आसीनः पितृभ्यो दद्याद्यथोपपादमितरान् (गो० गृ० १।४।१४)। **उक्तोऽर्थः। इतरानिति द्वितीया त्वपभ्रंशोऽसह्यः।** कार्श्यं येन त्यजति विधिना स त्वयैवोपपाद्यः (मेघ० ३०)। **उपपाद्यः साध्यो विधेयो निर्मेयः।**

नित्यं च समचित्तत्वमिष्टानिष्टोपपत्तिषु (गीता० १३।६) । **उपपत्तिः प्राप्तिः ।** मुदं विषादः शरदं हिमागमस्तयो विवस्वान् सुकृतं कृतघ्नता । प्रियोपपत्तिः शुचमापदं नयः श्रियः समृद्धा अपि हन्ति दुर्नयः (तन्त्रा० ३।१०।१४३) ॥ **उक्तोऽर्थः ।** मनः समाधाय जयोपपत्तौ (रा० ४।३।३६) । **उपपत्तिर्लब्धिः ।** अचिन्तितेन कामानामुपपत्तिर्नराधिप (हरि० २।६१।८) । देहोपपत्तये भूयस्तमेव प्रत्यपद्यत (भा० पु० १०।५५।१) । **कामः कर्ता । तं वासुदेवम् । देहोपपत्तिः शरीरप्राप्तिः ।** स्वार्थोपपत्तिं प्रति दुर्बलाशः (रघु० ५।१२) । **उक्तोऽर्थः ।** अथोपपत्तिं छलनापरोऽपराम् (शिशु० १।६९) । **उपपत्तिर्जन्म ।** मनुष्याणां तु मध्याह्ने प्रदद्यादुपपत्तिभिः (भा० अनु० २३।२) । **उपपत्तिः प्रतिपत्तिः । उपपत्तिभिः=आदरादिभिः ।** प्रियेषु यैः पार्थ विनोपपत्तेः (कि० ३।५२) । **विनोपपत्तेः=अकारणम्, अहेतुकम् ।** देवि सोपपत्तिकमभिहितम् (नागा० ५) । **सोपपत्तिकं युक्तियुक्तम् ।** उपपत्तिमदूर्जिताश्रयं नृपमूचे वचनं वृकोदरः (कि० २।१) । **उक्तोऽर्थः ।** नोपपत्त्या न वा युक्त्या त्वसद् ब्रूयादसंशयम् (भा० शां० २७५।८) । उपपत्त्योपलब्धेषु लोकेषु समो भव (भा० शां० २८८।११) । **उपपत्तिः समापत्तिर्यदृच्छा दैवयोगः । लोकेषु विषयेषु ।** सत्येन हि स्थितो धर्म उपपत्त्या तथा नरे (भा० शां० १००।२) । **उपपत्तिर्मरणनिश्चयः । ध्रुवो मृत्युरिति भिया धर्मश्चर्यत इति भावः ।** यावन्मानुष्यके शक्यमुपपादयितुम् । **कादम्बर्यां तारापीडस्य देवीं प्रत्युक्तिः । उपपादयितुं साधयितुम् ।** अपि त्वां न लभेत्कर्ण राज्यलम्भोपपादनम् (भा० उ० १४२।२) । **उपपाद्यते साध्यते ऽनेनेत्युपपादनं साधनमुपायः ।** अधिकरणं त्वेकन्यायोपपादनम् (हारा०) । **उपपादनं साधनं युक्त्यादिभिः स्थापनम् ।** परहितसुखोपपादनपरः (अवदा० कुम्भजा०) । **उपपादनं साधनम् ।** उपपादुका देवनारकाः (हारा०) । **स्वयंजन्मान इत्यर्थः ।** दिव्योपपादुका देवाः (अमरः) । **दिव्यजन्मान इत्यर्थः ।** उपपादुकं सत्त्वम् (पा० ३।२।१५४ सूत्रे वृत्तौ) ।

**—पा (पा पाने) ।** यद्युपपाय्यमानो न पिबेत् (आप० श्रौ० ६।१८।११) । **उपपाय्यमान उपनीय पाय्यमानः, अपां समीपे नीतः सन्पानं कार्यमाणः ।**

**—पीड् (पीड अवगाहने) ।** उपरुध्यारिमासीत राष्ट्रं चास्योपपीडयेत् (मनु० ७।१९५) । **उपपीडयेत् कदर्थयेत्, उत्सादयेत् ।** पार्श्वोपपीडं शेते (पा० ३।४।४९ सूत्रे वृत्तौ) । **पार्श्वयोर्निपीड्येत्यर्थः ।**

**—पृच् (पृची सम्पर्के) ।** वीरेषु वीराँ उप पृङ्धि नस्त्वम् (ऋ० २।२४।१५) । **उपपृङ्धि सम्पृक्तान्कुरु । पौत्रानपि लभेमहीत्यर्थं इति सायणः ।** उप क्षत्रं पृञ्चीत हन्ति राजभिः (ऋ० १।४०।८) । **उपपृञ्चीत आत्मनि**

**सम्पृक्तं कुर्यात्। वर्धयेदिति भाव:। क्षत्रं बलम्।** उपेदमुपपर्चनमासु गोषूप पृच्यताम् (ऋ० ६।२८।८)। **उपपर्चनमाप्यायनमिति सायण:। गर्भाधानमित्यन्ये साम्प्रतिका:। उपपृच्यतां समीपे निधीयताम्।** उपेन्नु मघवन्भूय इन्नु ते दानं देवस्य पृच्यते (तै० सं० १।४।२२)। **यजमानस्यात्यन्तं समीपे सम्बध्यत इत्यर्थ:। यजमानेन हवि र्दीयत इत्युक्तं भवति। देवस्य दातुस्ते दानं यजमानं प्रति पृच्यते (सनिकृष्यते) इत्युवटमहीधरौ (वा० सं० ३।३४)।** यौवने जीवानुपपृञ्चती जरा (अथर्व० १८।४।५०)। **उपपृञ्चती (जीवै:) सम्प्रयुज्यते।**

**—प्रच्छ् (प्रच्छ ज्ञीप्सायाम्)।** उपपृच्छामहे गत्वा विदुरं च महामतिम् (भा० सौ० २।३३)। **उपेत्य प्रक्ष्याम इत्यर्थ:।** सोऽहं पितुर्नियोगात्त्वामुपप्रष्टुमिहागत: (भा० शां० ३२६।१२)। **उक्तोऽर्थ:।**

**—प्लु (प्लुङ् गतौ)।** अथवा यथैवान्यान्यपि पदकार्याण्युपप्लवन्ते रुत्वं जश्त्वं चैवेदमपि पदकार्यमुपप्लोष्यते (न पदान्तद्विर्वचनेति सूत्रे भाष्ये)। **उपप्लवन्ते प्राप्नुवन्ति।** तस्यातिमात्रेणोर: क्षण्यते। तस्योर: क्षतमुपप्लवते (चरक० नि० ६।४)। **उपप्लवते व्याप्नोति।** तानि तान्यङ्गान्युपप्लवन्ते तेषु महाकषायेषु (चरक० सूत्र० ४।२०)। **उपप्लवन्त आवर्तन्ते पुन: पुन: पठ्यन्त इत्यर्थ:।** तानेतान् साम गायमानान् वागुपाप्लवत (पञ्च० ब्रा० १२।५।१४)। उपाप्लवत उपागच्छत्‌ अर्थाच्च तात धर्माच्च तव बुद्धिरुपप्लुता (भा० उ० ४६।२५)। उपप्लुता भ्रष्टा। उपप्लुतेक्षण:=अश्रुपूर्णनयन:। जगदालोक्य तत् तादृगुक्तोपप्लवाप्लुतम् (यो० वा० ६।२ १३४।१३६)। **उपप्लव आप्लावे निमग्नमित्याह।** समुद्रोपप्लुतास्तत्र लोका भूरादयो नृप (भा० पु० ८।२४।७)। **पूर्वोदित एवार्थ:।** पौलस्त्योपप्लुता हरिम्।··· अभिजग्मु: (रघु० १०।५)। **उपप्लुता: पीडिता:। उपद्रुता इति त्वक्षरार्थ:।** उपप्लुतमघौघेनात्मानं नावबुध्यसे (रा० २।७।१४)। **उक्तोऽर्थ:।** आर्तामुपप्लुतां दीनां निमग्नां शोकसागरे (भा० आश्व० ६६।११)। भवतो द्यूतदोषेण सर्वे वयमुपप्लुता: (भा० वन० ५२।१३)। **उपप्लुता: कदर्थनां प्राप्ता:।** उपप्लुतमिवादित्यं सधूममिव पावकम् (भा० आश्व० ११।२)। **उपप्लुतमुपरक्तं सोपरागं ग्रहग्रस्तम्।** उपप्लुतं यथा सोमं संशुष्कमिव सागरम् (भा० द्रोण० ४६।१८)। **उक्तोऽर्थ:।** कुर्यामहं जित: कर्म स्त्रयमात्मन्युपप्लुते (भा० सभा० ६५।२८)। **उपप्लुतो जित:।** जीवन्पुन: शश्वदुपप्लवेभ्य: प्रजा: प्रजानाथ पितेव पासि (रघु० २।४८)। **उपप्लव उपद्रव:, विघ्न:।** कच्चिन्न वाय्वादि-

रुपप्लवो वः श्रमच्छिदामाश्रमपादपानाम् (रघु० ५।६) । **उपप्लवो बाधकः ।** उपप्लवाय भूतानां धूमकेतुरिवोत्थितः (कु० २।३२) । **उपप्लवो विनाशः ।** वनोपप्लवः । **वनव्यसनं दावादिकृतो वनविनाशः ।** चन्द्रमिवोपप्लवान्मुक्तम् (विक्रम० १।११) । **उपप्लव उपरागो ग्रहणम् ।** उपप्लवविनिर्मुक्तां मूर्ति चान्द्रमसीमिव(कथा० १६।१०५) । उपप्लवांस्तथा घोराञ् शशिनस्तेजसस्तथा (भा० शां० ३०१।३६) । **उक्तोऽर्थः ।** यथा त्वमस्मान्भजसे वर्तमानान् उपप्लवे (भा० द्रोण० ११०।६५) । **उपप्लवे विमर्दे ।** मायया विभ्रमच्चित्तो न वेद स्मृत्युपप्लवात् (भा० पु० १०।८४।२५) । **स्मृत्युपप्लवः स्मृतिभ्रंशः स्मृतिप्रमोषः ।** विकल्पो वस्तुनिर्भासादसंवादादुपप्लवः ( सर्व० द० सं० पृ० ४४)। **उपप्लवो भ्रमः ।** प्रतिलक्ष्यं लक्षणोपप्लवः । **लक्षणभेदः ।** गन्धर्वाणामुपप्लवे (भा० आदि० १३६।२०) । **उपप्लव आस्कन्दः ।** उत्सार्य जनं युद्धमासीदुपप्लवे वलिनोः संयुगे(भा० सभा० २३।२५) । उपप्लवे युद्धभूमौ । निषेधवाक्यानां व्यक्तिपक्षे विनिगमनाविरहादुपप्लवः ( प्रदीपोद्द्योते ) । **उपप्लवो ऽध्यास** इति नानार्थसंक्षेपे केशवः । नृपा उपप्लविनः परेभ्यो धर्मोत्तरं मध्यममाश्रयन्ते(रघु० १३।७)। **उपप्लविनो भयवन्त इति मल्लिः । आपन्ना इति परे ।**

—**बन्ध् (बन्ध बन्धने)** । त्वमग्ने यातुधानानुपबद्धाँ इहावह (अथर्व० १। ७।७ ) । **उपबद्धान् रज्ज्वादिबद्धहस्तपादाद्यवयवान् ।** तस्यै हावि द्व्युरणा शयन उपबद्धाऽऽस (श० ब्रा० ११।५।१।१) । **अन्तिके बद्धा उपबद्धा ।** नामधेयमपि गुणफलोपबन्धेनार्थवत् (मी० १।४।१।२ शा० भा०) । **उपबन्धो योगः सम्बन्धः ।** चोदनागुणेषु क्लृप्त्युपबन्धाभ्याम् (का० श्रौ० १।८।२२) । **उपबन्धो योगः । इह संख्यायोगः ।** बन्धोपबन्धपतनोत्थित—(चौर० ४८) । **बन्धः पङ्कजासनादिः । उपबन्ध एतत्प्रभेदः ।** अपि वा सीमेत्यनर्थकमुपबन्धमाददीत (नि० १।७।३) । अपि वाधीयाने युरुपबन्धः (नि० १।८।१) । **उपबन्धः प्रत्ययः, नामकरणः ।**

—**बृह् (बृह उद्यमने)** । उप बर्बृहि वृषभाय बाहुम् (ऋ० १०।१०। १०) । **उपबर्हणं कुरु (आलिङ्गनाय) । उपोद्यच्छ परिष्वङ्गायेत्याह ।** श्यावाश्वस्तुताय या दोर्वीरायोपबर्बृहत् (ऋ० ५।६१।५) **उक्तोऽर्थः ।** उपधानं तूपबर्हः स्यात् इत्यमरः । वेद आस्तरणं ब्रह्मोपबर्हणम् (अथर्व० १५।३।७) । चित्तिरा उपबर्हणम् (ऋ० १०।८५।७) । **'आः' इत्यस्ते लँङि प्रथमपुरुषैकवचने रूपम् । ईडागमो न कृतः ।** पुराण्यासन्दी सोपबर्हणा (श० ब्रा० १३।

८।४।१०)। **उक्तोऽर्थः।** क्षां दासायोपबर्हणीं कः (ऋ० १।१७४।७)। **उपबर्हणी शय्या।**

**—बृह्** (**बृह वृहि वृद्धौ**)। घण्टास्वनेन तान्नादानम्बिकोपबृंहयत् (मार्कं० पु० ५७।६४)। **अवर्धयत्, स्फीतानकरोत्।**

**—ब्रू** (**ब्रूञ् व्यक्तायां वाचि**)। द्विता यदीं···नमस्यन्त उपवोचन्त भृगवः (ऋ० १।१२७।७)। **उपवोचन्त उपेत्य ब्रुवन्ति।** तं मेधेषु प्रथमं देवयन्तीर्विश उप ब्रुवते (ऋ० १।७७।३)। **स्तुतिभिरुपेत्य कथयन्तीति।** (द्यावापृथिवी)। उप ब्रुवे नमसा यज्ञे अस्मिन् (ऋ० १।१८५।७)। **उपब्रुवे उपेत्य स्तौमि।** इन्द्रं वृत्राय हन्तवे पुरुहूतमुप ब्रुवे (अथर्व० २०।१९।५)। **उक्तोऽर्थः।** स्वस्तये वायुमुप ब्रवामहै (ऋ० ५।५१।१२)। **उपब्रुवामहै स्तुमः।** इयं नार्युप ब्रूते लाजानावपन्तिका (अथर्व० १४।२।६३)। **उपब्रूते प्रार्थयते।** यस्त्वा देवि सरस्वत्युपब्रूते धने हिते (ऋ० ६।६१।५)। **उपेत्य स्तौति।** तनूपानं परिपाणं कृण्वाना यदुपोचिरे सर्वं तदरसं कृधि (अथर्व० ५।८।६)। **उपोचिरे उपोदुः, उपावदन्, आत्मानं प्रेरितवन्त इति वा। अयं चान्त्योऽपि न न रोचते नोऽर्थः; कृति प्रत्यये तदुपलम्भात्।** यथा—वेषि ह्यध्वरीयतामुपवक्ता जनानाम् (ऋ० ४।९।५)। **हविदानलक्षणे कर्मणि वचनेन प्रयोक्ता प्रेरक इत्यर्थः।**

**—भुज्** (**भुज पालनाभ्यवहारयोः**)। उप वयं तं भुञ्जामः (छां० उ० ४।११।२)। **उपभुञ्जामः=उपभुञ्ज्मः=पालयामः।** न भोक्ष्ये न च पानीयमुपभोक्ष्ये कथं चन (भा० शां० २७।२५)। **उपोऽर्थे नान्तरं करोति। यथाऽश्नात्युपाश्नाती समानार्थौ तथा भुज्युपभुजी अपि।**

**—भू** (**भू सत्तायाम्**)। उप मामुच्चा युवतिर्बभूयाः (ऋ० १०।१८३।२)। **उपबभूयाः=उपेत्य भूयाः।** अस्मिन्यज्ञ उप भूय इन्नु मेऽविक्षोभाय परिधीन् दधामि (तै० ब्रा० ३।७।६।७)। अस्या ऊ षु ण उप सातये भुवः (ऋ० १।१३८।४)। **उपभुवः=समीपे भव, सहायो भव।** यः कल्याणगुणाञ्ज्ञातीन् द्वेषान्नोपबुभूषति (भा० शां० ३५।१४)। **सहायभावमुपगन्तुं नेच्छति साचिव्यं न चिकीर्षति।**

**—भृ** (**भृञ् भरणे, भृञ् धारणपोषणयोः**)। **उपभृद् इति स्रुग्विशेषः। इमानि च रूपान्तराणि स्रुचः—खादिरः स्रुवः, पर्णमयी जुहूः, आश्वत्थी उपभृत्, वैकङ्कती ध्रुवा। एतद्वै स्रुचां रूपम्** (श० ब्रा० १।३।२।२)।

—मद् (मदी हर्षे) । यथेदमप्येतर्हि ज्ञातीनां यं गरिष्ठे (कर्मणि) युञ्जन्ति तमुपमदन्ति (श० ब्रा० १।४।२।१) । **उपमदन्ति स्तुवन्ति ।**

— मन् (मन ज्ञाने, मनु अवबोधने) । वचो वः समवेतार्थं तातैतदुपमन्महे । (भा० पु० उत्तरार्धे १०।८५।२२) । **उपमन्महे प्रतीमः, जानीमः । नार्थ उपेन । उपस्य चेहैव मनुतिना योगो नेतरत्र ।**

—मन्त्र् (मन्त्रि गुप्तपरिभाषणे) । तामुभय उपमन्त्रयाञ्चक्रिरे (श० ब्रा० १।४।१।३४) । **उपमन्त्रयाञ्चक्रिरे स्वैरं मन्दमन्दं निमन्त्रयाञ्चक्रिरे ।** तमुपामन्त्रयन्त (शां० ब्रा० १।२) । **उपामन्त्रयन्त आह्वयन् ।** उशना वै काव्योऽसुराणां पुरोहित आसीत् तं देवाः कामदुघाभिरुपामन्त्रयन्त (पञ्च० ब्रा० ७।५।२०) । **उपच्छन्दयामासुरित्यर्थः ।** प्रियामनुगतः कामी वचोभिरुपमन्त्रयन् (भा० पु० ९।१८।३५)। **उपमन्त्रयन् उपमन्त्रयमाणः, उपच्छन्दयन् प्रसादयन्, अनुनयन् ।** तस्मिन्कृते तदा देवी कीचकेनोपमन्त्रिता । सुदेष्णा प्रेषयामास (भा० वि० १५।६) ॥ **उपमन्त्रिता प्रार्थिता उपच्छन्दिता । उपमन्त्रणं रहस्युपच्छन्दनम्** (पा० १।३।४७ सूत्रे वृत्तौ)। हसनामुपमन्त्रिण (ऋ० ६।११२।४) । **उपमन्त्रिणो नर्मसचिवा इति सायणः । हसन्नामित्यत्र वाचमित्यध्याहार्यम् ।**

—मस्ज् (टुमस्जो शुद्धौ) । उपमङ्क्ष्यति स्या (=सा पृथिवी) सलिलस्य मध्ये (श० ब्रा० १३।७।१।१५) । **उपमङ्क्ष्यति निमङ्क्ष्यति ।**

—मा (माङ् माने) । उप नो वाजान् मिमीहि (अथर्व० २०।३७।११) । **उपमिमीहि प्रयच्छ ।** अस्मभ्यं चित्राँ उप माहि वाजान् (ऋ० ४।२२।१०) । **उक्तोऽर्थः ।** पूर्वीष्ट इन्द्रोपमातयः पूर्वीरुत प्रशस्तयः (ऋ० ८।४०।६) । **उपमातयो दानानीति सायणः ।** का अस्य पूर्वीरुपमातयो ह (ऋ० ४।२३।३) । **उक्तोऽर्थः ।**

—मान् ( **मानेर्जिज्ञासायां सनि मीमांस इति धातुः** ) । तस्य नोपमीमांसाऽस्ति ( श० ब्रा० ११।४।२।१२ ) । **उपमीमांसा विचारणा शङ्का विमर्शः ।**

—मुच् (मुच्लृ मोक्षणे) । आसन्द्या उपानहा उपमुञ्चते (श० ब्रा० ५।५।३।७ ) । **आसन्द्याश्चतुष्किकायाश्चरणाववतार्योपानहोर्धरत इत्याह । बध्नातीत्यक्षरार्थः । प्रायेणात्रार्थ आङ्पूर्वस्य मुचेः प्रयोगः प्रतिपूर्वस्य वा ।**

वाक्ये चरणशब्दस्य चाप्रयोगः। कार्ष्णी उपानहावुपमुञ्चते (तै० सं० ५।४।४।१७)।

—मुद् (मुद हर्षे)। ब्रह्माहुतीरुपमोदमानम् (तै० ब्रा० ३।१२।३।३)।

—मृ (मृङ् प्राणत्यागे)। तूष्णीमेवेत्याभ्यवेत्योपमारयति (श० ब्रा० २।५।२।४६)। अप्सु निमज्जयतीत्यर्थः।

—मृज् (मृजू शुद्धौ)। एतं मृजन्ति मर्ज्यमुप द्रोणेष्वायवः (ऋ० ६।१५।७)। उपमृजन्ति निष्पीडयन्ति आस्फालयन्ति। अथ यदुपमार्ष्टि तत्पितृषु चौषधीषु च जुहोति (श० ब्रा० २।३।१।१६)। उक्तोऽर्थः।

—मृद् (मृद क्षोदे)। यदा नाभूद्रतान्तोऽस्य (शङ्करस्य) गतेष्वब्दशतेष्वपि। तदा तदुपमर्देन चकम्पे भुवनत्रयम् (कथा० २०।७३)॥ उपमर्दोऽवपीडनम्। अन्यासु तावद् उपमर्दसहासु भृङ्ग। लोलं विनोदय मनः सुमनोलतासु (सा० द० )॥ उपमर्दो बाधः। अन्यतरोपमर्देन ह्यन्यतरद् बुद्धावारोहति (शा० दी० पृ० ११४)। उक्तोऽर्थः। हयहस्तिकरीषैश्च उपमर्दः कृतो भृशम् (रा० २।११७।३)। उपमर्दो भूमेरशुचिता।…नावदिष्यत्स्वयं यदि। अभविष्यदिदं शास्त्रं पाणिनीयोपमर्दकम् (कथा० ७।१२)। उपमर्दकमुत्सादकम्।

—म्लुच् (म्लुचु गतौ)। स तत एवौषधीनां मूलान्युपमुम्लोच (श० ब्रा० १।२।५।८)। मूलेष्वन्तर्दध इत्यर्थः।

—यज् (यज देवपूजासङ्गतिकरणदानेषु)। स्त्रियश्चोपयजेरन् (पा० गृ० २।१७।१८)। उपयजेरन् बलिकर्म कुर्युः।

—यत् (यती प्रयत्ने)। इमं स पाप्मा नोपयतते (श० ब्रा० ८।५।१।७)। नोपद्रवति नोपैतीत्यर्थः।

—यम् (यम उपरमे)। अन्तरिक्षेणोपयच्छामि (श० ब्रा० १४।२।१।१७)। गृह्णामीत्यर्थः। उपयच्छोपयमनीः (श० ब्रा० ६।२।३।१)। उक्तोऽर्थः। स्वं शाटकान्तमुपयच्छति (पा० १।३।५६ सूत्रे भाष्ये)। कोपात्काश्चित् प्रियैः प्रत्तमुपायंसत नासवम् (भट्टि० ८।३३)। उदितचर एवार्थः। निर्मृ-

ज्योपयच्छति (कौ० सू० ४२।१-५) । **स्वी करोतीत्यर्थः** । तानि मृत्युः श्रमो भूत्वोपयेमे(श०ब्रा० १४।४।३।११) । **उपयेमे स्वीचकार, वशे चकार, स्वायत्तान्यकार्षीत्** । परस्य भार्यामुपयच्छति(काशिका) । दासीत्वेन परिगृह्णातीत्यर्थः । नाभ्रात्रीमुपयच्छेत (नि० ३।५)। **उपयच्छेत उद्वहेत्, परिणयेत्** । बुद्धिरूपशीललक्षणसम्पन्नामरोगामुपयच्छेत (आश्व० गृ० १।५।३) । **उक्तोऽर्थः** । एतास्तिस्रस्तु भार्यार्थे नोपयच्छेत्तु बुद्धिमान् (मनु० ११।१७२) । **उक्तचर एवार्थः** । **संविशेदिति तु कोषकृन्मोनियर्** । आत्मानुरूपां विधिनोपयेमे (कु० १।१८) । **उपयेमे परिणिनाय** । अथैनामुपयच्छते (हिरण्य० गृ० १६।३) । **अवकिरते मिथुनी भवतीत्यर्थः** । बर्हिषोपयम्योदङ् पर्यावृत्य प्राचीनदण्डयोदीचीनदण्डया वा स्रुचा (भा० श्रौ० ६।१३।८) । **बर्हिषि निधायेत्यर्थः** । प्रथमायां त्रिरनूकायामुपयमनीभिरुपयम्य हरति (आप० श्रौ० ७।२।६) । **उपयम्य गृहीत्वा** । अथोपयन्त्रा सदृशेन युक्ताम् (रघु० ७।१) । **उपयन्त्रा वरेण** । कौमारापूर्ववचने (पा० ४।२।१३) **इत्यत्र आद्य उपयन्तरि प्रत्ययः, द्वितीय उपयतायामिति विवेक इति बालमनोरमा । तत्रोपयन्तेति वोढारं पतिमाचष्टे** । कन्या त्वजातोपयमा (सा० द०) । **उपयमो विवाहः** । निबन्धः खल्वेकग्रन्थोपयमोऽर्थानाम् (३।२।४३ न्यायभाष्ये) । एकग्रन्थोपयताः खल्वर्था अन्योन्यस्मृतिहेतवः (इति च तत्रैव) । **उपयमः प्रतिपादनम्** । विभाषोपयमने (पा० १।२।१६) । **उपयमनं विवाहः** । इत्यभ्रातृकाया उपयमने प्रतिषेधः (नि० ३।५।५ दुर्गवृत्तौ) । **उक्तोऽर्थः** । दक्षिणत उदङ्ङासीन ऋत्विगुपयमनं कारयेत् (लौ० गृ० १५।३) । **उक्तोऽर्थः । दातृप्रतिग्रहीतृसम्बन्धं कारयेदित्यर्थ इति देवपालः** । भक्षणसाधनो य **उपयमनाख्यः** पात्रविशेष इति अथर्व० ७।७७।३ 'योअश्विनोश्चमसो देवपानः' इत्यत्र सायणभाष्यम् । उद्यच्छन्तीध्ममुपयच्छन्त्युपयमनीः ( श० ब्रा० ६।२।३।१ ) । **उपययमनीरुपधानभूतान्यन्तःस्थलानि** सिकतादिमयानि । अन्यत्र पात्रविशेषोप्युपयमनी भवति । तद्यथा—द्वन्द्वं पात्राण्युपसादयति—उपयमनीं महावीरं परीशासौ पिन्वने (श० ब्रा० १४।१।३।१) । उपयमनकुशानादाय (पा० गृ० १।१।६) । **यत्र किं चिद् उपयम्यत उपधीयते ते कुशा उपयमनाः** ।

—**या** (**या प्रापणे प्रापणमिह गतिः**)। युक्त्वा रथमुपदेवाँ अयातन(ऋ० १।१६१।७) । **देवानुपायातन देवानां सामीप्यं प्राप्नुत** । मूर्ति चोपययौ तस्य सारथ्येन महीपतेः (भा० वन० ६०।२५) । यत्रोपयाति हरिभिः सोमपीथी । (भा० अनु० १०२।५४) । **उक्तोऽर्थः** । उपयानापयाने च स्थानं प्रत्यपसर्पणम् । सर्वमेतद्रथस्थेन ज्ञेयं रथकुटुम्बिना (रा० ६।८६।१६) ।। पुत्राणां दुहितॄणां च

काले विध्युपयापनम् । दारैर्वीरैस्तत्सदृशैः कल्पयन्तं विभूतिभिः (भा० पु०१०। ६६।३२)।। **उपयापनं विवाहः । अस्मिन्नर्थेऽस्यात्रैव प्रयोगो नान्यत्र ।**

**—याच् (टुयाचृ याच्ञायाम्) । अर्थ उपयाच्ञायाम् इति धातुपाठः । अत्रोपशब्दो नान्तरमर्थे करोति । अपि वोपेत्य याच्ञोपयाच्ञा स्यात् ।** भक्तिलक्ष्मीसमृद्धानां किमन्यदुपयाचितम् । एतया वा दरिद्राणां किमन्यदपयाचितम् (सर्वं० द० सं० प्रत्यभि०) । **उपयाचितम्=याचनम् । अपयाचितमनिष्टप्रार्थनम् ।** त्वया पुरस्तादुपयाचितो यः सोऽयं वटः श्याम इति प्रतीतः (रघु० १३।५३) । **उपयाचितः प्रार्थितः ।** त्रैलोक्यचारिणी सा त्वं भुवि सत्योपयाचना (हरि० २।२।५०) । **ममेदमीप्सितं कुरु, अहं त्वां पूजयिष्यामि तं तमुपहारं ते दास्यामीत्येवंरूपा प्रार्थना उपयाचनोच्यते ।** तैस्तैरप्युपयाचितैरुपनतस्तन्व्या स्थितोऽप्यन्तिके (ध्वन्यालोके विश्वेश्वरेण हिन्दीव्याख्यायां पृ० ४६ समुद्धृतमुत्पलपादाचार्यवचनम्) । **उक्तोऽर्थः । उपयाचितैः स्वार्थसिद्धौ प्रतिश्रुतैरर्थैरित्यर्थः । इत्थं च निरूपयन्त्युपयाचितं तज्ज्ञाः—दीयते यत्तु देवेभ्यो मनोराज्यस्य सिद्धये । उपयाचितकं दिव्यं दोहदं तद् विदुर्बुधाः ॥** निक्षेपी म्रियते तुभ्यमुपदास्याम्युपयाचितम् (पञ्चत० १।१४) । उपयाचितदानेन यतो देवा अभीष्टदाः (पञ्चत० २।५०) । अद्य मया भगवत्याः करालायाः प्रागुपयाचितं स्त्रीरत्नमुपहर्तव्यम् (मालती० ५) । तस्योपयाचितान्येत्य तत्रत्याः कुर्वते जनाः । तत्तद्वाञ्छितसंसिद्धिहेतोस्तैस्तैरुपायनैः (कथा० १३। १६६) ।। **तस्योपयाचितानि कुर्वन्ति प्रतिश्रुतार्थमर्पयन्ति ।** ग्रहाणां चरितं स्वप्नो निमित्तान्युपयाचितम् । फलन्ति काकतालीयं तेभ्यः प्राज्ञा न बिभ्यति (वेणी० २।१५ इत्यत्राङ्गिरोवचनमित्युदाहृतम्) ।।

**—युज् (युजिर् योगे)** । उपो रथेषु पृषतीरयुग्ध्वम् (ऋ० १।३९।६) । उपायुग्ध्वं योजितवन्तः (यूयं मरुतः) । उप नूनं युयुजे वृषणा हरी (ऋ० ८।४।११) । **उक्तोऽर्थः ।** महोभिरेतां उप युज्महे (ऋ० १।१६५।५) । **(हविरादि) स्वीकुर्मह इत्यर्थः ।** नासंपृष्टो ह्युपयुङ्क्ते परार्थे (भा० वि० प्रजागर०) । **उपयुङ्क्ते व्याप्रियते प्रवर्तते ।** गां न धुर्युप युञ्जाथे अपः (ऋ० १। १५१।४) । **उपयुञ्जाथे सेवेथे ।** षाड्गुण्यमुपयुञ्जीत (शिशु० २।९३) । **प्रयुञ्जीतेत्यर्थः ।** तथेत्युक्त्वा च ते सर्वे प्रोक्षयित्वा च गां ततः । पितृभ्यः कल्पयित्वैनामुपायुञ्जन्त भारत (हरि० १।२१।१३) ।। **उपायुञ्जन्त उपायुञ्जत अभक्षयन् ।** त्वां चेदवध्यं दायादमतीव प्रियदर्शनम् । अहमद्योपयोक्ष्यामि विधानं पश्य यादृशम् (भा० वन० १७९।१५) ।। **उपयोक्ष्यामि उपयोक्ष्ये**

**भोक्ष्ये भक्षयिष्यामि** । अग्निस्तेजो महल्लोके गूढस्तिष्ठति दारुषु । न चोपभुङ्क्ते तद्दारु यावन्नोद्दीप्यते परैः (भा० उ० ३७।६०) ॥ **नोपयुङ्क्ते नाश्नाति** । फलान्युपायुङ्क्त स दण्डनीतेः (रघु० १३।४६) । **उपायुङ्क्त उपाभुङ्क्त, उपाश्नात्, निरविशत्** । उभयमेव तत्रोपयुज्यते फलं धर्मस्यैवेतरस्य च (भा० उ० ४२।२३) । **उक्तपूर्वोऽर्थः** । बालस्याप्यर्थवद् वाक्यमुपयुञ्जीत पण्डितः (कौ० अ० १।११।१५) । **उपयुञ्जीत स्वीकुर्यात्** । यत् किं च समाहितो ब्रह्म प्याचार्यादुपयुङ्क्ते (आप० ध० १।२।५।७) **उपयुङ्क्त आवत्ते** । **ब्रह्मप्याचार्यात्** । **इत्यत्र शकन्ध्वादित्वात् पररूपम्** । वृत्तचौलकर्मा लिपिं संख्यानं चोपयुञ्जीत (कौ० अ० १।५।१) । **उपयुञ्जीत उपाददीत शिक्षेत** । **ब्रह्मोज्झः** कृच्छ्रं द्वादशरात्रं चरित्वा पुनरुपयुञ्जीत वेदमाचार्यात् (व० ध० शा० २०।१२) । **उक्तोऽर्थः** । क्रमेणास्योपयुञ्जन्ति रूपमायुस्तथैव च ( भा० स्त्री० ७।११ ) । **उपयुञ्जन्ति उपयुञ्जते उपयोगेन क्षयं नयन्ति समाप्तिं गमयन्ति** । मुक्तारत्नस्य शाणाश्मघर्षणं नोपयुज्यते (भा० वन० १२७३९) । **नोपयुज्यते उपयोगं न याति** । **अर्थवन्न भवतीत्यर्थः** । शरदभ्रस्य शुभ्रत्वं वद कुत्रोपयुज्यते । **क्वाऽस्योपयोगः, कास्यार्थवत्ता** । तेजसा सह जातानां वयः कुत्रोपयुज्यते (पञ्चत० १।३२८) । **उक्तोऽर्थः** । प्रेष्यभावेन नामेयं देवीशब्दक्षमा सती । स्नानीयवस्त्रक्रियया पत्रोर्णमिवोपयुज्यते ( माल०५।१२ ) । **उपयुज्यते व्यवह्रियते, उपचर्यते** । राजा तदुपयुञ्जानश्चौरस्याप्नोति किल्विषम् (मनु० ८।४०) । **तद् धनं चौरहृतं धनमुपयुञ्जानः स्वस्यार्थे विनियुञ्जानः** । अहीनसूक्तान्युपयुञ्जाना यन्ति (ऐ० ब्रा० ६।२१) । **उपयुञ्जाना उच्चारयन्तः पठन्तः** । भूयिष्ठमुपयुञ्जानं फेनम् (भा० आदि० ४०।१८) । **उपयुञ्जानम् भुञ्जानम्** । यश्चैषां कश्चित् सूत्रावयवो भवत्युपयुक्तः । **उपयुक्तो गृहीतो विज्ञातः** । यजूंषि नोपयुक्तानि क्षिप्रमिच्छामि वेदितुम् (भा० शां० ३१८।५) । **नोपयुक्तानि अनुपयुक्तानि विधिवदगृहीतानि** । आगमकालेनैव सर्वमायुरुपयुक्तं स्यात् (भाष्ये) । **उपयोगेन समाप्तं स्यात्** । उपयुक्तोदकां भग्नां प्रपां निपतितामिव (रा० २।११४।१५)। **उपयुक्तोदकां समाप्तजलाम्** । यामन् यामन्नुपयुक्तं वहिष्ठं कर्मन्कर्मन्नाभगम् । अग्निमीडे (अथर्व० ४।२३।३) । **उपयुक्तं विनियुक्तं व्यापारितम्** । चतुर्भिश्च प्रकारैर्विद्योपयुक्ता भवति । (भा०)। तद्यथा **उपयुक्ता** माणवका इत्युच्यन्ते य एते नियमपूर्वकमधीतवन्तो भवन्ति (पा० १।४।२९ सूत्रे भाष्ये) । **निगदव्याख्यातम्** । अग्निना चोपयुक्तस्य कुतः संजीवनं पुनः (भा० शां० १८६।१३) । **उपयुक्तस्यात्तस्य** । **दग्धस्येति त्वार्थि-**

**कोऽर्थः** । सवर्णसंज्ञोपयुक्ताः स्थानप्रयत्नाः (पा० १।१।६ सूत्रे वृत्तौ) । **उपयुक्ता उपयोगवन्तः** । अनुपयुक्तमिवात्मानं समर्थये (शा० ७ अङ्कादौ) । **निरुपयोगमनर्थकं निष्प्रयोजनम्** । तस्यादित्यो भामुपयुज्य भाति(भा० अनु० १५८।२२)। **उपयुज्य आदाय** । आख्यातोपयोगे (पा० १।४।२६) । नियमपूर्वकं गुरोर्विद्याग्रहणमुपयोगः । आपत्कल्पो ब्राह्मणस्याब्राह्मणाद् **विद्योपयोगः** (गौ० ध० ७।१) । **उक्तोऽर्थः** । तिष्ठतेरुपयोगश्च दृष्टोऽप्रत्यजयन्निति (वा० प० २।२०१) । **उपयोग आक्षेपः** । उपयोज्यश्चरुरयं त्वया मात्रा त्वयं तव (हरि० १।२७।१६) । **उपयोज्यो भक्षणीयः** । यथा ह वा स्थूरिणैकेन यायादकृत्वान्यदुपयोजनाय (ऐ० ब्रा० ५।३०) । **उपयोजनं धुरि योजनम्** । नियुतो वायोरित्यादिष्टोपयोजनानि (निघण्टौ १।१५) । प्राकारभञ्जनान्योगांश्च तथा निगडभञ्जनान् । अदर्शनप्रयोगांश्च जानेऽहमुपयोगिनः (कथा० १२।४२) ॥ **उपयोगिनोऽर्थवतः** ।

—**रक्ष्** (**रक्ष पालने**) । सज्जनं तूपरक्षणम् इत्यमरः । **सैन्यस्य प्रगुणीकरणं गुल्मुको वेति स्वामी** । **सैन्यरक्षणाय प्रहरिकादेर्न्यास उपरक्षणमिति भानुजिः** ।

—**रच्** ( **रच प्रतियत्ने** ) । मनोरथोपरचितप्रासादवापीतटक्रीडाकाननकेलिकौतुकजुषाम् (भर्तृ० ) । **उपरचिता प्रासादवापी कल्पिता सौधदीर्धिका** ।

—**रञ्ज्** (**रञ्ज रागे**) । उपरज्यते भगवांश्चन्द्रः (मुद्रा० १) । **राहुणा गृह्यते** । कोपोपरक्तानि मुखानि (सा० द०) । **उपरक्तानि अरुणानि** । **उपशब्दो धात्वर्थानुवादी** । अविद्याकामकर्मभिरुपरक्तमनसा (भा० पु० ५।१४।५) । **उपरक्तमुपहतं मलिनीकृतम्, कलुषितम्** । उपरक्त इवादित्यः सद्यो निष्प्रभतां गतः (रा० १।५५।६) । **उपरक्तो ग्रहगृहीतः, उपप्लुतः** । अथ य उपरक्तेन हविषा यजते (श० ब्रा० ११।४।४।५) । **उपरक्तेन ईषद् रक्तेन** । **उपशब्दः सामीप्ये** । चन्द्रोपरागं प्रति तु केनापि विप्रलब्धासि ( मुद्रा० १ ) । **चन्द्रोपरागश्चन्द्रग्रहणम्** । बिभर्षि चाकारमनिर्वृतानां मृणालिनी हैममिवोपरागम् (रघु० १६।७) । **उपराग उपद्रवः** । **हिमकृता म्लानिः** । इत्यादिभिः समालापैर्वत्सराजः स तद् दिनम् । लज्जोपरागं देव्याश्च सममेवापनीतवान् (कथा० १७।५२) ॥ **उपरागो मालिन्यम्** । उर्वीपतेश्च स्फटिकाश्मनश्च शीलोज्झितस्त्रीहृदयस्य चान्तः । असंनिधानात् सततस्थितीनामन्योपरागः कुरुते

प्रवेशम् (राज० ६।२३४) ॥ **उपरागः संनिहितवस्त्वन्तरस्य रागः। उपशब्दः सामीप्ये।**

—**रम्** (**रमु क्रीडायाम्**)। ततो ह जारत्कारव उपरराम (बृ० उ० ३।२।१३)। **उपरराम विरराम। वचनादिति शेषः।** उपात्र खलु रमत (श० ब्रा० ११।४।१।३)। **उपरमत तिष्ठत।** उपरमन्ति घोषं घोषकृतः (शां० श्रौ० १७।७।७)। **उपरमन्ति उपरमयन्ति विरमयन्ति, अवसाययन्ति।** उपरमति देवदत्तम् (उपाच्चेति सूत्रे वृत्तौ)। **उपरमयतीत्यर्थः। अन्तर्भावितण्यर्थको रमिः सकर्मकः।** उपर उपलो मेघो भवति। उपरमन्त्यस्मिन्नभ्राणि (नि० २।२१।५)। **उपरमन्ति अवस्थितानि भवन्ति।** उपरता आप इति वा (नि० २।२१।५)। **उक्तोऽर्थः।** युद्धादुपारमन् (भा० द्रोण० ३६३३)। रात्रिः कस्मात्। **उपरमयतीतराणि ध्रुवी करोति** (नि० २।१८)। **निगदव्याख्यातम्।** उत्तराणि हवींपि श्रप्यमाणान्युपरमति (श० ब्रा० २।२।१।२)। **उपरमति प्रतीक्षते।** यां क्रियां कर्ता प्राधान्येनानुपरमन्करोति तन्नित्यम् (पा० ८।१।४ सूत्रे वृत्तौ)। **अनुपरमन् विच्छेदमकुर्वन्।** त्वां तु कृत्वोपरतो मन्ये रूपकर्ता स विश्वसृक् (रा० ५।२०।१३)। **उपरतो विरतः सृष्टिव्यापारादिति शेषः। विश्वसृट् इति तु पाणिनीयाः।** भयाद्रणादुपरतं मंस्यन्ते त्वां महारथाः (गीता २।३४)। **उपरतं परावृत्तम्, पराङ्मुखम्।** उपरतानि धनानि (पा० १।३।८४ सूत्रे न्यासे)। **उपरतानि नष्टानि।** चिरादुपरता वासवदत्ता (स्वप्न० ४)। **उपरता मृता।** अहोरात्रमुपरम्य प्राध्ययनम् (शां० गृ० ४।६)। **उपरम्य विश्रम्य विच्छेदं कृत्वा। प्राध्ययनमध्ययनप्रारम्भः।** यानि चापि त्वया सार्धं वनेषु च सुगन्धिषु। विहृतानि सुखं काले तेषामुपरमः कृतः (रा० ४।२०।८) ॥ **उपरमो विरामो ऽवसानम्।**

—**रुच्** (**रुच दीप्तावभिप्रीतौ च**)। उपो रुरुचे युवतिर्न योषा (ऋ० ७।७७।१)। **उपरुरुचे रोचमाना भासमानोपैतीत्यर्थः।**

—**रुध्** (**रुधिर् आवरणे**)। अजाश्चैवोपरोत्स्यन्ते पयसोऽर्थे युगक्षये (हरि० १११५८)। **उपरोत्स्यन्ते व्रजेषु रुद्धाः करिष्यन्ते।** शस्त्रं द्विजातिभिर्ग्राह्यं धर्मो यत्रोपरुध्यते (मनु० ८।३४८)। **उपरुध्यते विहन्यते प्रतिहन्यते। साहसिकादिभिः कर्तुं न दीयते इत्यर्थः।** अनार्यं कृत्यमारब्धं किं न पूर्वमुपारुधः (रा० २।३६।१४)। **किं नावारयः, किमिति न प्रत्यषेधः।** वत्से उपरुध्यते तपोऽनुष्ठानम् (शा० ४)। **उक्तोऽर्थः।** पौरास्तपोवनमुपरुन्धन्ति (शा० १)। **क्षुभितं कुर्वन्तीत्यर्थः।** नेत्रक्रमेणोपरुरोध सूर्यम् (रेणुः) (रघु० ७।३९)।

**उपरुरोध आच्छादयामास। नेत्रमंशुकम्।** सगरो ज्येष्ठं पुत्रमुपारुधत्। (रा० २।३४।१६)। **उपारुधत्=अपारुधत् निराकरोत्।** मा मोपरोत्सीरति मा सृजैनम् (कठोप० १।२१)। **उपरोधो निर्बन्धः। निर्बन्धं मा कार्षीरित्यर्थः। उपरौत्सीरिति तु पाणिनीयाः।** शपथैः शपमानो हि प्राणानुपरुणत्सि मे (रा० २।७५।६१)। **उपरुणत्सि पीडयसि क्लिश्नासि कदर्थयसि।** उपरुन्धन्ति राजानो भूतानि विजयार्थिनः (भा० शां० ६७।४) काममात्मानं भार्यां पुत्रं वोपरुन्ध्यान्न त्वेव दासकर्मकरम् (आप० ध० २।४।६।११)। **उपरुन्ध्यात् कदर्थयेत्, आहारादिना विना कुर्यात्।** सूर्योढमतिथिं वसत्यै नोपरुन्धीत (आप० श्रौ० ५।७।२५।५)। **नोपरुन्धीत न पराणुदेत्, न प्रत्याचक्षीत।** (लीलापक्षिषु) भोजनार्थं वधूलोकमुपरुन्धत्स्वनारतम् (यो० वा० ६।(१)।१। १३)। **उपरुन्धत्स्व उपरुन्त्स्व प्रेरय प्रार्थयस्व। यथास्थिते पाठे पररूपमेकादेशो बोध्यः।** संभूय वणिजां पण्यमनर्घेणोपरुन्धताम्। विक्रीणतां वा विहितो दण्ड उत्तमसाहसः (याज्ञ० २।२५०)॥ **अनर्घेण हीनेन मूल्येन प्रार्थयमाना विक्रेयविक्रयं वारयन्ति, तेषाम्।** धर्मार्थविद्याकालाननुपरोधयन् कामसूत्रं तदङ्गविद्याश्च पुरुषोऽधीयीत ( )। **अनुपरोधयन् अक्षिण्वन्नित्यर्थः।** भो नित्यं प्रदीयतामित्यस्मानुपरुध्य किमिदानीं सन्तप्यते (प्रतिज्ञा० २)। **उपरुध्य सनिर्बन्धं प्रेर्य॥** गुरुर्नोपरोध्यो ऽध्यापयेति (मनु० २।७३ इत्यत्र मेधातिथिः)। **नोपरोध्यो न सनिर्बन्धं प्रार्थ्यः।** उपरुद्धं कुसुमपुरम् (मुद्रा०)। **रुद्धं परिवेष्टितम्।** उपरुद्धवृत्ति वाष्पं कुरु (शा० ४)। **उपरुद्धा विरता।** न प्रसिद्धिरुपरोद्धुं न्याय्या (नि० १।१।११ इत्यत्र दुर्गः)। **रूढेरनादरो न युक्त इत्याह।** अनुग्रहः खल्वेषः, नोपरोधः (विक्रम० ३)। **उपरोधः कृच्छ्रम्, कष्टम्।** उपरोधो भवेदेवमस्माकं तपसः कृते (भा० आश्रम० ३६।४१)। **उपरोधोऽन्तरायः प्रत्यूहः।** महतामुपरोधेन प्रसीदन्ति हि देवताः (बृ० क० को० ११।५५)। **उक्तोऽर्थः।** मौलभृत्योपरोधेन (तन्त्रा० १।६।७५)। **उपरोधोऽपनयनमपसारणम्। उपशब्दोऽपस्यार्थे। अन्यत्राप्यपोपयोर्व्यतिकरो लक्ष्यते बहुलः। नहि वाचि व्यवह्रियमाणायां सर्वं युक्तिमद् भवति।** ये नित्या भाक्तिकास्स्युस्तेषामनुपरोधेन संविभागो विहितः (बौ० ध० २।३।५।१६)। **उपरोधः पीडा।** मात्रा पृष्टः सोपरोधं ध्रुवस्तां पर्यभाषत (स्कन्द० का० ४।१६।२४)। **सोपरोधं सनिर्बन्धं साग्रहं साभिनिवेशम्।** सप्तमो भोजराजस्य भयाद्रोधोपरोधतः। देवक्याः पातितो गर्भ इति लोको वदिष्यति (वि० पु० ५।१।७५)॥ **रोधोपरोधतः कारायां निरोधात्।**

**—रुह्** (**रुह बीजजन्मनि**)। उपरूढव्रणः (सुश्रुत० २।६३।१३)। **योर्थोऽन्यत्र संरूढव्रण इत्यनेनोच्यते स एवेहोपरूढव्रण इत्यनेन।**

—**लक्ष् (लक्ष दर्शनाङ्कनयो:, लक्ष आलोचने)**। नक्षत्रशब्देन ज्योति:-शास्त्रमुपलक्ष्यते (मनु० ३।१६२ इत्यत्र कुल्लूक:)। **स्वार्थमुपादाय परार्थाभिधानमुपलक्षणं भवति** । अस्ति र्नास्तेरुपलक्षणम्। शतशो ऽप्युपलक्षये (हरि० १२३५१)। **उपलक्षये चक्षुर्विषयी करोमि**। एतत्कृत्यतमं राज्ञो नित्यमेवोपलक्षयेत् (भा० अनु० ३३।५)। **उपलक्षयेत् जानीयात्**। लोकप्रवाद: सत्येऽयं पण्डितैरुपलक्ष्यते (रा० ५।२६।६)। **उक्तोऽर्थ:**। स गिरिरन्य इवोपलक्ष्यते (हरि०२।१८।४४)। **लक्ष्यते प्रतिभाति**। आदिमध्यावसानेषु भवच्छब्दोपलक्षिता (भैक्षचर्या) (यज्ञ० १।३०)। **भवच्छब्दोच्चारणेनाङ्किता**। सुखासीनं ततस्तं तु विश्रान्तमुपलक्ष्य (भा० आदि० ७८४३)। **उपलक्ष्य निशाम्य, विलोक्य**। वेलोपलक्षणार्थमादिष्टोऽस्मि तत्र भवता प्रवासादुपावृत्तेन काश्यपेन (शा० ४)। **का वेलेति नक्षत्रादिदर्शनेन निश्चेतुम्**। अहर्गणे सुब्रह्मण्याया: सर्वोपलक्षणं प्रकृतिवत् (का० श्रौ० १।७।६)। **सर्वेषामह्नां भेदेनाभिधानमित्यर्थ:**। ऋणग्रहणं नियोगोपलक्षणार्थम् (पा० २।१।४३ सूत्रवृत्तौ)। **ऋणशब्दो नियमपर इति ग्राहयितुम् इत्यर्थ:**।

—**लप् (लप व्यक्तायां वाचि)**। स ग्रामणीरस्तु सहायमध्ये स्त्रीनृत्तगीतैरुपलप्यमान: (अवदा० जा० १६,१८)। **उपलप्यमानोऽभिनन्द्यमान: सभाज्यमान:**।

—**लभ् (डुलभष् प्राप्तौ)**। अग्निराप्तोपदेशात्प्रतीयतेऽत्राग्निरिति। प्रत्यासीदता धूमदर्शनेनानुमीयते। प्रत्यासन्ने च प्रत्यक्षत उपलभ्यते (न्याभा० )। **उपलभ्यते ज्ञायते**। स हि स्थानानि सर्वाणि कार्त्स्न्येन मुनिपुङ्गव:। नरमांसार्थिनां लोके नैपुण्येनोपलभ्यते (रा० ३।७५।७०)। **उपलभ्यते = उपलभते**। सुतार्थे नोपलब्धास्मि तिष्ठ मम प्रिये (भा० आदि० १६७।३७)। **नोपलब्धास्मि नोपलभ्यास्मि, स्प्रष्टुं योग्या नास्मि**। **उदक्याऽस्मीति यत:**। उपलब्धे (भा० ३।१३) (रथ्यासन्धौ)। योऽसौ च्छन्द:शास्त्रेष्वभिविनीत उपलब्ध्याधिगन्तुमुत्सहते (पा० गृ०२।१।३२)। **उपलब्धि: = व्युत्पत्ति:**। शप उपलम्भने (वार्तिकम्)। **उपलम्भनं वाचा शरीरस्पर्शनमिति वृत्ति:**।

—**लिख (लिख अक्षरविन्यासे)**। अभ्यन्तरमुपलिखति (आप० श्रौ० ७। १।३।१४)। **उपलिखति समीपे लिखति**। दुरुक्तमुपलिखति (कौ० अ० ४। ६।१७)। **साधूकृत्य लिखतीत्यर्थ:**।

—**लिप् (लिप उपदेहे)**। विद्याद्रसं स्वादुं यो वक्त्रमुपलिम्पति (वाग्भट० १०।२)। **वक्त्रमुपलिम्पति वक्त्रे सक्तो भवति**। इषुमात्रावरं सर्वत:

स्थण्डिलमुपलिप्य (आश्व० गृ० १।३।१)। उपलिप्य उपलेपमुपदेहं कृत्वा। वस्तिगुदोपलेप—(सुश्रुत० १।११५।१५)। उपलेपो रोधो बन्धः। अन्नैरुपलेपिभिः (सुश्रुत० १।२७६।१०)। उपलेपिभिः कोष्ठबन्धकारिभिः।

—ली (लीङ् श्लेषणे)। यथा सर्वाणि भूतानि मृत्योर्भीतानि मारिष। धर्ममेवोपलीयन्ते कर्मवन्ति हि यानि च॥ तथा कर्णं महेष्वासं पुत्रास्तव नराधिप। उपालीयन्त सन्त्रासात् पाण्डवस्य महात्मनः (भा० कर्ण० ४१७१)॥ उपलीयन्ते संश्रयन्ते, उपश्लिष्यन्ति। मदमानमोहभुजगोपलयम् (गार्हस्थ्यम्) (अवदा० जा० १८,२०)। उपलयम् आशयम् आश्रयम्।

—वञ्च् (वञ्चु प्रलम्भने)। वयं खलु हता राम त्वयाप्युपवञ्चिताः (रा० २।५२।१६)। उपवञ्चिताः समीपे वञ्चिताः प्रतारिताः, अतिसंहिताः। सूपायनास्यै भव सूपवञ्चना (ऋ० १।१८।११)। सूपवञ्चना सुखेनाभिगम्या।

—वद् (वद व्यक्तायां वाचि)। ते (द्वे ऋचौ)। भूत्वोपावदताम् (ऐ० ब्रा० ३।२३)। उपेत्य अब्रूताम्। सामेति शेषः। अमो नाम साम। सा वा, ऋक् सामोपावदत् (ऐ० ब्रा० ३।२३)। उपेत्याब्रवीदिति भट्टसायणौ। उपवादः सान्त्ववाद इति षड्गुरुशिष्यः। य एवं विद्वांसं व्रात्यमुपवदति (अथर्व० १५।२।३)। उपवदति निन्दति गर्हते। त य एनं पुरस्तादायन्तमुपवदन्ति (तै० ब्रा० २।३।९।७)। स य एनं शस्ते तूष्णींशंस उप वा वदेदनु वा व्याहरेत् (ऐ० ब्रा० २।३१) अनुव्याहरेत्=शपेत्। एनं होतारम्। तं हेम उपोदुर्दास्या वै त्वं पुत्रोसि (शां० ब्रा० १२।३) उक्तोऽर्थः। कर्मकरान् उपवदते (पा० १।३।४७ सूत्रे वृत्तौ)। उपसान्त्वयति। कुलभार्यामुपवदते। रहस्युपच्छन्दयति। उपवादादबिभ्यतो यो मा ब्राह्मणोऽनूचान उपवदिष्यति तस्मा एतं प्रदास्यामीति (गो० ब्रा० पूर्व० ३।६)। वाक्पारुष्यमुपवादः कुत्सनमभिभर्त्सनम् (कौ० अ० ३।१८।७२)। निगदव्याख्यातम्। शरीरोपवादे काणखञ्जादिभिः (कौ० अ० ३।१८।२)। उपवादः परीवादः। तस्मान्नोपवादी स्यात् (श० ब्रा० ११।६।३।११)। उपवादी दोषानुद्भावयिता। अथ येऽल्पाः कलहिनः पिशुना उपवादिनः (छां० उ० ७।६।१)। उक्तोऽर्थः।

—वन्द् (वदि अभिवादनस्तुत्योः)। अभूद् दूतः प्रहितो जातवेदाः सायं न्यह्न उपवन्द्यो नृभिः (अथर्व० १८।४।६५)।

**—वप्** (डुवप बीजसन्ताने, बीजसन्तानः क्षेत्रे बीजविकरणं गर्भाधानं च) । ताभ्यां परःशतानि परःसहस्राणि वा शमीपर्णकरीराण्युपवपतः (भा० श्रौ० ८।८।६) । **उपवपतो विकिरतः=उपस्तृणुतः ।** यन्न्यूच्छत्यस्यामेव तदुपोप्यते (श० ब्रा० २।३।४।६) । **उपोप्यते निखन्यते निखायते निखातं भवति ।** अपूपानां यमध्वर्युराखूत्कर उपवपेत् ( लाटचा० श्रौ० ५।३।२ ) । उपोप्ते ऽन्ये ग्रहाः साद्यन्ते ऽनुपोप्ते ध्रुवः (तै० सं० ६।५।२।७) । **उपोप्ते कृतमृदुपवापे प्रदेशे, मृदमुपोप्य उपचित्य खरीकृते ।** पात्राणि निर्णिज्योपवाप्य (श० ब्रा० ११।६।२।४) । **उपवाप्य मृदाऽऽपूर्य ।** यदन्यदुत्तरवेद्या उपवपनात् (भा० श्रौ० ८।१) । **उपवपनं मृदोपचयनम् ।**

**—वर्ण्** ( वर्ण वर्णक्रियाविस्तारगुणवचनेषु ) । कृतकंश्चापि तन्मांसं मृगेन्द्रायोपवर्णितम् (भा० शां० १११।४६) । दानच्छेदोपवर्णनम् (याज्ञ० १।३१६) । **उपवर्णनं विस्तरेण वर्णनम् ।**

**—वल्ह्** (वल्ह प्राधान्ये) । एतद् ब्रह्मन्नुप वल्हामसि त्वा (वा० सं० २३।५१)। वल्ह प्राधान्ये । **इह त्वाह्वानपूर्वे संहर्षे वर्तत इत्युवटः । उपवल्हामः स्पर्धया पृच्छाम इति महीधरः ।** मूर्धाऽस्य विपतेद् य एनमुपवल्हेत (श० ब्रा० ११।४।१।६) । **स्पर्धया वादं प्रवर्तयेत् ।**

**—वस्** (वस निवासे) । उपास्मिञ्छ्वो यक्ष्यमाणे देवता वसन्ति (तै० सं० १।६।७।३) । **उपवसन्ति उपेत्य वसन्ति ।** ते ऽस्य गृहेषूपवसन्ति (श० ब्रा० १।१।१।७) । **उप समीपे यजमानस्य वसन्ति ।** यज्ञमेवारभ्य गृहीत्वोपवसति ( तै० सं० ६।४।२।६ ) । **उक्तोऽर्थः ।** अद्यैव मे अग्न्याधेयस्योपवसथ (जै० ब्रा० १।४०) । **उपवसथ समीपे तिष्ठत ।** तस्मादग्नीध्र उपवसन्ति न सदसि (ऐ० ब्रा० १०।४) । उपवसन्ति तिष्ठन्ति विश्राम्यन्ति । स वै माघस्यामावास्यायामुपवसत्युदङ्ङावर्त्स्यन् (शां० ब्रा० १९।३) । **उक्तोऽर्थः ।** उभये देवासुरा यज्ञमुपावसन्नस्मभ्यमनुवक्ष्यत्यस्मभ्यमिति ( ऐ० ब्रा० २।१५ ) । **समीपेऽतिष्ठन् । प्रत्यपालयन् प्रत्यैक्षन्त ।** आशिता एवाद्योपवसाम । कस्य वाहेदम् । कस्य वा श्वो भवितेति (तै० ब्रा० १।६।६।४) **उक्तोऽर्थः ।** यद् ग्राम्यानुपवसति तेन ग्राम्यानवरुन्धे (तै० सं० १।६।७।३) । **ग्राम्यान् पशून् भोजने परिहरति, तद्विषयकमनाशकं कुरुते । अशनपरित्यागेऽनशनेऽप्युपवसिरिह सकर्मकः ।** संकर्षणस्य भद्रं ते यत्तदैनमुपावसम् (भा० उ० ५५।३४) । **उपावसं शिष्यत्वेन पर्यचरम् ।** तपःश्रद्धे ये ह्युपवसन्त्यरण्ये (मुण्डकोप० १।२।११)। **उपवसन्ति सेवन्ते ।** यत्ते वयं पश्यन्त उपवसाम (श० ब्रा० ८।१।१।३) । **उपवसाम उपासामहै, उपासीमहि, उपतिष्ठेमहि ।** गर्भिणीं ज्वरितां नारीमे-

काहमुपवासयेत् (का० सं० खिल० अन्तर्वत्नी० श्लो० ७)। **उपवासमनशनं कारयेत्**। तेषूपवासान् विविधानुपोष्य (भा० वन० ११८।१४)। उपवस्ता प्राप्तोऽस्य **औपवस्त्रम्(=उपवासः)**। (पा० ५।१।१०५ सूत्रे तदस्य प्रकरण उपवस्त्रादिभ्य उपसंख्यानम् इति वार्तिके वृत्तौ)। **उपवस्ता=उपवासस्य उपोषणस्य कर्ता। चोरभाण्डस्योपवासेन वा**। यथा हि माण्डव्यः (कौ० अ० ४।८।८३)। **उपवासः समीपस्थितिः**। न ब्रह्मचारिणो विद्यार्थस्य परोपवासोऽस्ति(आप०ध० १।२।१७)। **परोपवासः परसमीपे वासः**। प्रातर्नो यक्ष्यत इति ते ऽस्य विश्वे देवा गृहानागच्छन्ति तेऽस्य गृहेषूपवसन्ति स उपवसथः(श० ब्रा० १।१।१।७)। **यस्मिन्यक्षमाणो भवति ततः पूर्वो दिवस उपवसथ इति सायणः**। एकेषामुपवसथे (का० औ० ४।१३।७)। **उपवसथ इति पौर्णमास्या अमावास्यायाश्चैकं नामधेयम्**।

**—वस् (वस आच्छादने)**। यदासन्द्यामुपधाने यद्वोपवासने कृतम् (अथर्व० १४।२।६५)। **उपवासने आच्छादने प्रावरणे आवरणे परिधाने**।

**— वह् (वह प्रापणे)**। संह्लादनो राजरथो य इहास्मानुपावहत् (भा० सभा० ६१।५)। **उपावहद् इहानीतवान्**। देवानां पाथ उप वक्षि विद्वान्(ऋ० १०।७०।१०)। **समीपं प्रापयसीत्याह। पाथ इत्यन्नमुच्यते**। इन्द्रमिद्धरी वहतोऽप्रतिधृष्टशवसमृषीणां च स्तुतीरुप यज्ञं च (वा० सं० ८।३५)। **उक्तोऽर्थः**। स च पिष्टरसस्तात न मे प्रीतिमुपावहत्(भा० अनु० १४।२०)। **उपावहत् आहरत्, अजनयत्**। उपोह्यमाने द्यूते तु राजानः सर्व एव ते (भा० सभा० ६०।१)। **उपोह्यमाने उपस्थास्यमाने प्रक्रंस्यमाने**। तदुपोढं महद् युद्धमन्योन्यवधकाङ्क्षिणोः (रा० ६।१०६।१८)। **उपोढमुपस्थितं प्रक्रान्तम्**। उपोढकल्याणफलो ऽभिरक्षन् (कि० १७।५४)। **उपोढं सनिहितम्**। उपोढव्यसनादेशं कारयेत् सिद्धलक्षणैः (का० नी० सा० ६।७३)। **उपोढः संनिहितः**। उपोढपाणिग्रहणा (कु० ७।४)। **उक्तोऽर्थः**। कुकर्मभिरुपोढाऽपि लक्ष्मीः (राज० ६। २६५)। **उपोढा स्वसंनिधिं प्रापिता**। यथेन्दावानन्दं व्रजति समुपोढे कुमुदिनी ( उत्तर० ५।२६ )। **समुपोढे उदिते। नार्थः समा**। ततोप्युपोढा रजनी दिनक्षये ( रा० गोरे० २।११६।४६ )। **उपोढाऽवतीर्णा**। व्रतिनामुपोढतपसाम् (शा० ५।१०) **उपोढं संचितम्**। उपोढशब्दा न रथाङ्गनेमयः (शा० ७।१०)। **उपोढो जनितः। उपोढा द्वितीया वल्लभा पत्नीति कोषः**। इह त्वां नाभिजानामि बालमेवोपवाहितम् (हरि० २।१०४।२६)। **इतः प्रापितम् इत्यर्थः**। उपोह्य रुचिरां नावं गुहाय प्रत्यवेदयत् (रा० २।५२।७)। **उपोह्य**

**समीपं प्रापय्य** । रविरस्तं गतः श्रीमानुपोह्य रजनीं शुभाम् (रा० २।११६।३) । **उक्तोऽर्थः** । महद् धनुः सज्यमुपोह्य लक्ष्मणः (रा० २।८७।२३) । **उपोह्य धृत्वा** । उपवाह्यस्तु वो भर्ता नापवाह्यः पुराद् वनम् (रा० २।४५।१६)। **उपवाह्यः पुरसमीपं प्रापणीय इत्यर्थः** । अथोपवाह्यादादाय घण्टामैरावताद् गजात् (वि०पु० ५।१२।१२) । **उपवाह्यं वाहनम्** । देवोपवाह्यमक्षय्यं सदा दृष्टिमनःसुखम् (रा० ७।१५।३८) । **देवोपवाह्यं राजवाहनम्** । चन्द्रगुप्तोपवाह्यां गजवशाम् (मुद्रा० २) । **राजवाह्यस्त्वौपवाह्यः सन्नाह्यः समरोचित इति क्षीरोद्धृतोऽमरोद्घाटने कोषः** । यतरो वै युजो ह्लसीयान्भवत्युपवहं वै तस्मै कुर्वन्ति (श० ब्रा० १।४।४।७) । **इतरेण युग्येन समानोन्नतये ह्लसीयसो युग्यस्य ग्रीवायां यदुपधानं रच्यते स उपवहो नाम** । कृतकृत्यं तदात्मानं मेने तस्योपवाहनात् (रा० १।११।२६) । **उपवाहनात् स्वसमीपानयनादिति कतकः** ।

-- **वा (वा गतिगन्धनयोः)** । स्योनास्त्वा वाता उप वान्तु शग्माः (अथर्व० १८।२।२१) । **उपवान्तु समीपे वान्तु पवन्ताम्** । प्रक्षालितायां पात्र्यां निष्टप्तोपवातायां पवित्रवत्यां पिष्टानि संवपति (आश्व० गृ०) । **उपवाता शुष्का** । तस्मिन्प्रक्षालितोपवातानि निदधाति (कौ० सू० २।२६) । प्रक्षालितोपवातान्यक्लिष्टानि वासांसि पत्नीयजमानर्त्विजश्च परिदधीरन् (बौ० ध० १।६।१३।५) **उक्तोऽर्थः** ।

—**विश् (विश प्रवेशने)** । उपो नमोभि वृंषभं विशेम (ऋ० ८।८५।६)। **समीपे वर्तेमहि, उपाप्नुयाम** । बलेनोपविवेश ह (भा० वन० ६१।१) । **उपविवेश निविविशे । सैन्यनिवेशं चकारेत्यर्थः** । रथमोचनमादिश्य सन्ध्यामुपविवेश ह (भा० उ० ८४।२१) । **सन्ध्यां यावद् दैवतोपासनार्थं कृतासनोऽभवदित्यर्थः** । सोप्युक्त्वैवमुपाविशत् (भट्टि० ७।७५) । **अनशनेन स्थित इत्यर्थः** । अथ प्रायमुपवेक्ष्यामि (रा० २।      ) । **अनशनमुद्दिश्यैकत्रकृतासना भविष्यामीत्यर्थः** । द्रौपदी यत्र भर्तॄनुपाविशत् (भा० आदि० २।३०४) । **पतीन् विमताननुमानयितुं तेषां पुरः स्थिरासनाऽभूदित्यर्थः** । प्रीतिश्च मनुजव्याघ्र दुर्योधनमुपाविशत् (भा० सभा० १३६।११) । **उपाविशत्=आविशत् । अत्रार्थे विरलः प्रयोगः** । कृच्छ्रेणाल्पाल्पं सशब्दशूलमतिद्रवमति बहु चोपविशन्तं दृष्ट्वा पुरीषवहान्यस्य स्रोतांसि प्रदुष्टानीति विद्यात् (चरक० वि० ५।६) । **उपविशन्तं निषद्योच्चरन्तम्, मलमुत्सृजन्तम्** । तावदर्कोप्युपाविशत् (कथा० १२३।१७१) । **उपाविशदस्तं यन्नलम्बत, लम्बमानोऽभूत्** । वन्धोः क्षीराभिधानस्य प्रविवेशोपवेशनम् (राज० ८।६४८) । **उपवेशन निवेशनं निकेतनम्** । आमोपवेशनं लेपः

स्रोतसां स च सर्पति (वाग्भट० नि० अ० १३)। **आमोपवेशनम् आमस्य वर्चसस्त्याग इत्यर्थः।**

—**विष्** (**विष्लृ व्याप्तौ**)। विश्वं विवेष्टि द्रविणमुप क्षु (ऋ० १०।६१।१२)। **उपविवेष्टि** (=**वेवेष्टि**) **यत्नेन चेष्टया वाऽवाप्नोति।** अन्तर्वेदि शाखायाः पर्वाण्यसर्वाणि प्रशात्य मूलतः शाखां परिवास्य (=छित्वा) उपवेषं करोति (आप० श्रौ० १।२।६।६)। **अङ्गारप्रेषणार्थं काष्ठमुपवेष इति समाख्यायत इति रुद्रदत्तः।** अधिवृक्षसूर्ये आविःसूर्ये वा धृष्टिरसि ब्रह्म यच्छेत्युपवेषमादाय (आप० श्रौ० ६।१।१।२)। **उपवेषशब्द उद्घाटनार्थे काष्ठे वर्तत इत्युक्तप्रायं पुरस्तात्।** किं शाखाच्छेदनस्योभयं प्रयोजकं शाखा उपवेषश्च। उत शाखा प्रयोजिका उपवेषोऽनुनिष्पादी (मी० ४।२।८ शा० भा०)। **उक्तोऽर्थः।** इत्युपवेषमादाय (भा० श्रौ० ६।१०।५)। **उपवेषो मन्थदण्डः।**

—**वीज्** (**वीजिलौकिक इति स्वामी**)। स एष पक्षिभिः पक्षैः शयान उपवीज्यते (भा० स्त्री० २४।२४)। **उपवीज्यते, आधूयते, वातोऽस्य क्रियते।**

—**वृत्** (**वृतु वर्तने**)। उप मा वर्तस्व (तै० ब्रा० २।३।१०।३)। **मामुपेहीत्यर्थः।** सहिता उपवर्तन्ते (रा० २।११६।५)। **समीपे वर्तन्त इत्यर्थः।** स चेदवघ्रायाद् उपवर्तेत वा (आश्व० श्रौ० १०।८।३)। **उपवर्तेत उपक्रामेत् उपेयात्।** पञ्चालराजस्य सुतामधर्मो न चोपवर्तेत न विभ्रमेच्च (भा० आदि० १६१।५)। **उपवर्तेत स्पृशेत् उपेयात्।** उपप्लवो महानस्मानुपावर्तत केशव (भा० वन० २०३।३०)। **उपावर्तत उपातिष्ठत्।** उत्पन्नमिह लोके वै जन्मप्रभृति मानवम्। विविधान्युपवर्तन्ते दुःखानि च सुखानि च (भा० शां० २८।१३)॥ **उपवर्तन्त उपनमन्ति।** नाधर्मेणागम कश्चिन्मनुष्यानुपवर्तते (मनु० १।८०)। **तत्र प्रतिवर्तत इति पाठान्तरम्।** सर्वां रात्रिमध्ययनं करोषि नेदं पितः सम्यगिवोपवर्तते (भा० वन० १३२।१०)। **नोपवर्तते न जायते, न सम्पद्यते।** क्रममाणं हृषीकेशमुपावर्तन्त सर्वशः (हरि० १।४१।६८)। **उपावर्तन्त पर्यवृण्वत, पर्यवेष्टयन्त।** मुक्त्वा हयान् पाययित्वोपवृत्तान् (भा० आदि० १६२)। **उपवृत्तान् श्रमितान्।** अथोषस्युपवृत्तायाम् (भा० पु० १०।७०।१)। **उपवृत्ताऽऽसन्ना।** प्रायोपवृत्तचित्तानां शोकोपहतचेतसाम्। परैराधर्षितानां च स्वत एव प्रवेशनम्॥ **उपवृत्तं श्रान्तम्।** नासूचितस्य पात्रस्य प्रवेशः क्वचिदिष्यत इत्यस्यापवादभूतोऽयङ्ग्रन्थः। विपर्याणोपवर्तित—(तुरग-) (कथा० ६४।१७)। **उपवर्तितो विश्रमितो व्यवस्थापितश्वासः।** कालो नरश्रेष्ठ समीपमुपवर्तितुम् (रा० ७।१०४।१३)। उप-

वर्तितुमुपगन्तुम्, सान्निध्यमाप्तुम्। राष्ट्रं तु विषयः सोपि युक्तो ग्रामैः शताधिकैरुपवर्तनम् ( वैजयन्ती )। निगदव्याख्यातम्। नहिवृतिवृषिव्यधिरुचिसहितनिषु क्वौ ( ६।३।११६ ) इति पूर्वपदस्य दीर्घं शास्ति। तत्र 'उपावृत्' इत्येकतमदुदाहरणम्।

—वेष्ट् (वेष्ट वेष्टने)। अक्तोऽभ्यक्तो वेष्टित्युपवेष्टिती कञ्चुक्युपानही पादुकी (आप० १।२।८।२)। कटिप्रदेशो द्वितीयेन वाससा वेष्टितो यस्य स उपवेष्टिती।

——वै (पै ओवै शोषणे)। यस्य नाराशंस उपवायति (पञ्च० ब्रा० ब्रा० ६।६।५)। उपवायति उपशुष्यति।

—व्रज् (वज व्रज गतौ)। तमिन्द्र उपव्रज्योवाच (तै० ब्रा० ३।१०।११।३) उपव्रज्य उपेत्य।

—व्रतय् (व्रतय्=व्रत+णिच् भोजने)। तथा च आश्व० श्रौ० २।६।८।३९ सूत्रे प्रयोगः—

—शक् (शक्लृ शक्तौ)। शिक्षन्तो नोपशेकिम (अथर्व० ६।११४।२)। शक्ता भवितुमिच्छन्तोपि शक्ता नाभूमेत्याह। उपशब्दोऽन्यत्र सामीप्यवचनः, इह तु पर्याप्तिमाह। येन संगच्छा उप मा स शिक्षात् (अथर्व० ७।१२।१)। मा शिक्षात् मां वक्तुं समर्थमिच्छत्विति सायणः। शकेः सन्नन्ताल्लेटि रूपमिति च सः। इह यः कश्चित् किञ्चिदाह स सर्वो व्यामोहः। कथमनृषिर्ऋषे हृदयं विजानीयात्। वधीर्हि दस्युं धनिनं घनेनँ एकश्चरन्नुपशाकेभिरिन्द्र (ऋ० १।३३।४)। उपशाकाः समीपवर्तिनः शक्तिमन्तः सहायाः (मरुतः)।

—शम् (शमु उपशमे)। तथायमपि कृतकर्तव्यः सम्प्रति परमुपशमं प्राप्तः (प्र० च०)। उपशमो विश्रमः। ग्रन्थिः पाषाणकठिनो यदा नैवोपशाम्यति (चरक० चि० २१।१३१)। शाम्यतीत्येवार्थः।

—शिक्ष् (शिक्ष विद्योपादाने)। राजानमुपशिक्षस्व ज्येष्ठं भ्रातरमीश्वरम् (भा० आश्रम० ११।१४)। उपशिक्षस्व उपेत्य शिक्षस्व वेद्यमुपादत्स्वेत्याह। अध्यात्मगतितत्त्वज्ञमुपाशिक्षत यः पुरा ( भा० शां० ३७।१२ )। उक्तोऽर्थः। प्रियेणैवैनौ तद्धाम्ना परोक्षमुपशिक्षति (पञ्च० ब्रा० १४।२।४)। सङ्ग्रहेणादत्तो,

**स्वायत्तं करोति ।** यद्येनं पुनरुपशिक्षेयुः (तै० ब्रा० २।३।२।२) । **एनं निराकृतं पुरुषं यदि पुनरपि स्वीकुर्युरित्यर्थः ।** समाधिनोपशिक्षन्तो ब्रह्मलोकं सनातनम् (भा० अनु० ६३।२३) । **इहोदाहृतिषु शिक्षतिरुपादानमात्रे वर्तते ।** एवं मयाऽस्त्राण्युपशिक्षितानि शक्राच्च वाताच्च शिवाच्च साक्षात् (भा० वन० १६५।१२) । **उपशिक्षितानि उपसद्य शिक्षितानि ।**

—**शी (शीङ् स्वप्ने) ।** ऐतस्मात्कालादुपशेते (श० ब्रा० ४।२।४।५) । **ध्रुवो ग्रह एतावन्तं कालमवस्थितो भवतीत्याह ।** उत्तरतो हि स्त्री पुमांसमुपशेते (श० ब्रा० १।१।१।२०) । **समीपे वामतः शेत इत्यर्थः ।** गतासुमेतमुप शेष एहि (ऋ० १०।१८।८) । सुकन्ये कमिमं जीर्णि कृत्यारूपमुपशेषऽआवामनुप्रेहीति (श० ब्रा० ४।१।५।६) । स्वर्गे लोकेऽप्सरस एनं जाया भूत्वोपशेरते ( भाष्ये ) । यदात्मन्युपशेते, सात्म्यार्थो ह्युपशयार्थः ( चरक० वि० १।२३) । **निगदव्याख्यातम् ।** कीदृशं भोजनं युष्माकमुपशेते (अवदा० मैत्री० जा० ) । **उपशेते सात्म्यमनुकूलं भवतीत्यर्थः ।** आप उपशेरते उष्णाश्च शीताश्च (भा० गृ० २।१६) । अग्नीनुपशयानस्य राज्ञः (भा० अनु० ७।६) । **समीपे शयानस्य ।** निदानं पूर्वरूपाणि रूपाण्युपशयस्तथा । सम्प्राप्तिश्चेति विज्ञानं रोगाणां पञ्चधा स्मृतम् ॥ उपशयः पुनर्हेतुव्याधिविपरीतानां विपरीतार्थकारिणामौषधाहारविहाराणामुपयोगः सुखानुबन्धः (चरक० नि० १।६) । **निगदव्याख्यातम् ।** शीतद्वेषानुपशयौ (अष्टाङ्ग० निदान० १६।२३) । **असुखानुबन्ध उपशय इति हृदयबोधिका ।** निदानोक्तानुपशयो विपरीतोपशायिता ( वाग्भट० नि० अ० २ ) । **विकारवर्धकोऽर्थोऽनुपशयः ।** हन्ति नोपशयस्थो पि शयालुर्मृगयुर्मृगान् ( शिशु० २।८० ) । **अथोपशयः स्थाने यत्र स्थित्वा हि लुब्धकाः । गूढात्मानो मृगान्घ्नन्ति** ( नानार्थार्णव० ) । तान्देवा उपशयेनैवापानुदन् (तै० सं० ६।६।४।१७) । **उपशयो यूपः ।** तस्माद् यूपैकादशिनी भवति । द्वादश उपशयो भवति वितष्टः (श० ब्रा० ३।७।२।१) । **उपशयो यूपविशेषो यः समीपे उपयोगाय क्लृप्तो भवत्यनुच्छ्रितः ।** तस्मिन्नितरौ प्राञ्चावुपशयौ निदधाति (सत्या० श्रौ० २४।२।१०) । **उपशयौ शयानौ ।** मृदमुपशयां निदधाति (का० श्रौ० १६।४।७) । **उखां क्रियमाणामुपशेते अतिरिच्यत इत्युपशया ।** अथोपशयायै पिण्डं परिशिनष्टि प्रायश्चित्तिभ्यः (श० ब्रा० ६।५।३।७) । **इहाप्युपशयेति मृदो विशेषणम् ।** गुदाऽउपशयानि (श० ब्रा० १२।६।१।३) । **उपशयानि=उपपात्राणि । इहोपशयं नपुंसकम् ।** निशोपशायः कर्तव्यः ( भट्टि० ७।४१ ) । व्युपयोः शेतेः पर्याये (३।३।३९) । इति घञि रूपम् । **पर्यायेण समीपे शयनमुपशायः (रक्षार्थम्) ।** रावणस्योपशा-

यिन्यो ददर्श हरिसत्तमः (रा० ५।६।२९)। **उपशायिन्यः=उपशायिनीः। पर्यायेण शयनस्थानरक्षिका इत्यर्थः।** पूर्वोत्थायी चरमं चोपशायी (भा० आदि० ९१।२)। **चरममुपशायी=जघन्यसंवेशी।** वाताच्छूलाङ्गसादौ च जृम्भा स्निग्धोपशायिता (का० सं० खिल० अम्लपित्त० श्लो० १६)।

—**शुष्** (**शुष शोषणे**)। यदेवास्य शयानस्योपशुष्यति तदेवास्यैतेनाप्याययति (तै० सं० ३।१।१०।३)। शरीराण्युपशोषयन् (हरि० १।२३।२)। **उपशब्दः सामीप्ये वर्तमानः क्रियाया असाकल्यमाह।**

—**श्रि** (**श्रिञ् सेवायाम्**)। उच्छ्वञ्चमाना पृथिवी सु तिष्ठतु सहस्रं मित उप हि श्रयन्ताम् (ऋ० १०।१८।१२)। **प्रक्षिप्ताः पांसव एनमुपसेवन्ताम्, संपरिवार्य तिष्ठन्त्वित्यर्थः।** मध्यमे परिधाऽ उपश्रयति (श० ब्रा० १४।२।२।३२)। **मध्यमं परिधिमुपाश्रित्य निदधाति।** यथा शकुनिः सूत्रेण प्रबद्धो दिशं दिशं पतित्वाऽन्यत्रायतनमलब्ध्वा बन्धनमेवोपश्रयते (छां० उ० ८।८।२)। **उपश्रयत उपलीयते विश्रमाय।** वक्षःसु रुक्मा उपशिश्रियाणाः (ऋ० ७।५६।१३)। **निबिडबद्धान् स्वर्णालङ्कारान्धारयन्तः। मरुतो विशिष्यन्ते।** तथैवोपश्रिता दैवी बुद्धिर्बुद्धिमतां वा (भा० शां० ४५।१८)। उद्गीथ उपश्रीः (कौषी० ब्रा० उ० १।५)। **परिधानस्योपरि दृढबद्धं परिधानान्तरमुपश्रीरुच्यते।**

—**श्रु** (**श्रु श्रवणे**)। उप ब्रह्माणि शृणव इमा नः (ऋ० ६।४०।४)। **उपशृणव उपशृणु, उपेत्य शृणु।** देवा वै ब्रह्मन्नवदन्त। तत्पर्ण उपाशृणोत् (तै०ब्रा० १।१।३।११)। **उपाशृणोत् समीपेऽवस्थायाशृणोदित्यर्थः।** कुमारं जातं संवदन्त उप वै शुश्रूषते नि वै ध्यायतीति (ऐ० ब्रा० ३।१।२)। तदु ह जानश्रुतिः पौत्रायण उपशुश्राव (छां० उ० ४।१।५)। **उपशुश्रुवान् श्रुतवान्। उपशब्दो विशेषकृन्न।** उपशुश्रुवान्कौत्सः पाणिनिम् (पा० ३।२।१०८ सूत्रे वृत्तौ)। **पाणिनिमुपेत्य शिष्यवद्भावेन शास्त्रं श्रुतवानित्यर्थः।** यन्मयोक्तमिदं वाक्यं युष्माभिश्चाप्युपश्रुतम् (भा० आश्व० ९०।१९)। **उपश्रुतमवहितं श्रुतम्।** अथा न इन्द्र सोमपा गिरामुपश्रुतिं चर (ऋ० १।१०।३)। **अस्मत्कृतानां त्वत्स्तुतीनामेकमनाः श्रवणं कुरु।** सुश्रुतिश्च मोपश्रुतिश्च मा हासिष्टाम् (अथर्व० १६।२।५)। **उपश्रुतिः सावधानं श्रवणम्।** पतिव्रतात्वात्सत्येन सोपश्रुतिमथाकरोत् (भा० उ० १३।२६)। **सन्देहनिर्णायिका देवी उपश्रुतिः।** नक्तं निर्ग-

स्य यत्किञ्चिच्छुभाशुभकरं वचः । श्रूयते तद्विदुर्धीराः देवप्रश्नमुपश्रुतिम् ।। नोपश्रुतिं कटुकां नोत मुक्ताम् (भा० उ० ३०।५) । **उपश्रुतिर्वार्ता** । यथा त्रयाणां वर्णानां संख्यातोपश्रुतिः पुरा । राजधर्मेष्वनुमता लोकाः सुचरितैः सह (भा० शां० ६४।६) ।। उपश्रुतिरन्तर्भावः । उपश्रुत्य वचो राज्ञः स दूतान्प्राहिणोत्तदा (भा० सभा० ३३।४०) । **उपश्रुत्य=श्रुत्वा संनिहितः श्रोता संनिहितश्च वक्तेति गम्यते** । तस्य मेऽयमग्निरुपद्रष्टा वायुरुपश्रोता । (ऐ० ब्रा० ७।२४) । **स्पष्टोऽर्थः** ।

**—श्लिष्** ( **श्लिष आलिङ्गने** ) । उपाश्लिषज्जतु काष्ठम् (पा० ३।१।४६ सूत्रे भाष्ये) । **संलग्नमभूदित्यर्थः** । तदुपश्लेषय शरं यावन्निरूपयामि (विक्रम० ५) । **उपश्लेषय उपनय, मदन्तिकं नयेत्यर्थः** । एकादश कार्षापणा उपश्लिष्टा अस्मिञ्छते एकादशं शतम् (पा० ५।२।४५ सूत्रे भाष्ये) । **उपश्लिष्टा युक्ताः** । तथैवाध्वन्यवेषेण सोपश्लिष्य जनार्दनम् । प्रत्यग्रवनमालेन वक्षसाऽभिविराजता (हरि० २।४६।५६) । **उपश्लिष्य परिश्लिष्य आश्लिष्य** । **अचिरोपसम्पत्तिरचिरोपश्लेषः** । (पा० ६।२।५६ सूत्रे वृत्तौ) ।

**—श्लोक्** (**श्लोकृ सङ्घाते सङ्घातो ग्रन्थः**) । उपश्लोक्यस्य माहात्म्यादुज्ज्वलाः काव्यसम्पदः ( भा० काव्या० ) । **उपश्लोक्यः स्तुत्यः कीर्त्यः** ।

**—श्वस्** (**श्वस प्राणने**) । उपश्वासय पृथिवीमुत द्याम् (हे दुन्दुभे) (अथर्व० ६।१२६।१) । **उपश्वसितामुच्छ्वसितामापूरितां कुरु** ।

**—सद्** (**षद्लृ विशरणगत्यवसादनेषु**) । गीर्भिर्गृणन्तो नमसोप सेदिम (ऋ० ५।८।४) । **उपसेदिम उपसीदामः, उपसन्ना भवामः** । सुप्रजसस्त्वा वयं सुपत्नीरुप सेदिम (तै० सं० १।१।१०) । **त्वा गार्हपत्याग्निम्** । जीवा जीवन्तीरुप वः सदेम (अथर्व० ३।१३।६) । **उपसदेम उपसीदेम उपगच्छेम** । अथ हैनं प्रस्तोतोपससाद ( छां० उ० १।११।४ ) । आकल्पसाधनैस्तैस्तैरुपसेदुः प्रसाधकाः (रघु० १७।२२) । **उक्तोऽर्थः** । तं त्वा··· प्रजावन्त उपसदेम सर्वे (अथर्व० ७।७८।४) । **उपसदेम परिचरेम** । भद्रं पश्यन्त उप सेदुरग्रे तपो दीक्षामृषयः सुवर्विदः (तै० सं० ५।७।४।६ ) । **उपसेदुरुपासाञ्चक्रिरे** । पितरो वात्र पूर्वं उपसीदन्ति (जै० ब्रा० १।७४) । **उपसीदन्ति निषीदन्ति** । न चेदुपसीदेत् (सत्या० श्रौ० २६।२।३५) । **उक्तोऽर्थः** । इहोपसीदतु भवान् (त्रिपुरदाहे) । **उक्तचर एवार्थः** । **लौकिके साहित्ये ऽत्रार्थे विरलः प्रयोगः** । यथागारं दृढस्थूणं जीर्णं भूत्वोपसीदति (रा० २।१०५।१८) । **उपसीदति अव-**

**सीदति विशीर्यंते नश्यति । अयमेवार्थं उत्तरार्धे तथा ऽवसीदन्तीति श्रवणात् ।** ये यजामह इत्युपासदत् (तै० सं० १।६।११) । **उपसीदति, उपैतीत्यर्थः ।** द्वन्द्वं पात्राण्युपसादयति (श० ब्रा० १४।१।३।१) । **उपसादयति समीपे स्थापयति ।** प्रोक्षणीरासादयेध्मं बर्हिरुपसादय (श० ब्रा० १।२।५।२१) । **उक्तोऽर्थः ।** यदहोष्यन्नुपसादयेत् । यथाऽन्यस्मा उपनिधाय । अन्यस्मै प्रयच्छति । तादृगेव तत् (आप० श्रौ० २।५।१०)। तदुत्तरेणाहवनीयमुपसादयन्ति(श० ब्रा० ३।६।३।१३) । इत्युद्गृह्यापरेणाहवनीयं बर्हिष्युपसादयति (भा० श्रौ० ६।१२।३) । अथोलूखलमुसले प्रक्षाल्य शूर्पं च पश्चादग्नेः प्रागग्रान्दर्भाना-स्तीर्योपसादयनि । **उक्तोऽर्थः ।** संवत्सरे पर्यागते एताभिरेवोपसादयेत् (तै० सं० १।६।१०।३) । **उपसादयेत् अधिश्रयेत् ।** उपसन्नो होता प्रातरनुवाकमनु-वक्ष्यन्भवति (श० ब्रा० ३।६।३।७) । **उपसन्नोऽन्तिकस्थः ।** विश्वास्यैवोप-सन्नार्थो वशे कृत्वा रिपुः प्रभो ( भा० शां० १०३।१३ ) । **उपसन्नार्थः = लम्भितार्थः कृतः ।** ब्रवीतु भगवांस्तन्मे उपसन्नोऽस्म्यधीहि भोः (भा० शां० २८७।११) । **उपसन्नः शिष्यभावेनोपेतः ।** नानुपसन्नाय (निर्ब्रूयात्) (नि० २।३।६) । **उपसन्नो विधिवत्प्राप्तः, शिष्यवृत्तिमास्थितः ।** उपसन्ने त्वहोरात्रम् (गो० गृ० ३।३।२७) । **विशेषणमहिम्ना विशेष्यलाभः, यथा सागराम्बरेत्यत्र । शिष्य इत्यर्थः ।** कथं च निस्तरेमास्मात्कृच्छ्राद्दैवोपसादितात् (भा० वन० २६३।४०) । **उपसादितात् = उपनमितात्, प्रापितात् ।** आत्मानं शरीरमुपहारं हविष्यमुपाहरत् उपसादितवान् (भा० ७।५२ इत्यत्र नीलकण्ठः) । य आङ्गि-रसो नमसोपसद्यः (ऋ० १०।४७।६) । **उपसद्य उपसन्न उपगतः (देवान्) ।** धन्योऽस्म्यनुगृहीतोऽस्मि यस्य मे मुनिपुङ्गव । यज्ञोपसदनं ब्रह्मन्प्राप्तोसि मुनिभिः सह (रा० १।५०।१४) ॥ **यज्ञोपसदनं देवयजनमिति कतकः । यज्ञस्थानमिति यावत् ।** तत्रोपसदनं चक्रे द्रोणस्येष्वस्त्रकर्मणि (भा० वन० १७१६६) **द्रोणमुपसेदिवानित्यर्थः ।** अशितास्त उपसदः (सन्तु) (अथर्व० ६।१४२।३) । **उपसद उपसत्तारः, उपगन्तारः ।** इमां मे अग्ने समिधमिमामुपसदं वनेः (ऋ० २।६।१) । **उपसदमुपसदनसाधनामाहुतिम् ।** ते देवा अब्रुवन् उपसद उपायामोपसदा वै महापुरं जयन्तीति (श० ब्रा० ३।४।४।४) । **उपसद्रोधः परिवेष्टनम् ।** अग्निर्नेतेत्याग्नेयी प्रथमोपसत् (ऐ० ब्रा० ३।१८) । **उपसद् आहुतिः ।** प्रकामोद्यायोपसदम् (वा० सं० ३०।९)। **उपसीदति समीपे तिष्ठति, तम् । उदीक्षमाणमित्यर्थः ।** उपसत्ता वर्धतां ते अनिष्टृतः (अथर्व० ७।८७। ३) । **उपसत्ता उपसदनशीलः परिचारकः । अनिष्टृतः = अनिस्तृतः—अहिं-सितः ।** मा ते रिषन्नुपसत्तारो अग्ने (अथर्व० २।६।२) । **उक्तोऽर्थः ।** मा ते

रिषन्नुपसत्तारो गृहाणाम् (अथर्व० ३।१२।६)। **उपसत्तारो निवसन्तः।** परिचरिता भवति परिचरन्नुपसत्ता (छां० उ० ७।८।१)। **उपसत्ता गुरोः सामीप्यस्य लब्धा।**

—**सिच् (षिच क्षरणे)।** तद्यथा जरत्कक्षमग्निनोपदीप्य तमद्भिरुपसिञ्चेत् (जै० ब्रा० २।१३७)। **उपसिञ्चेत् आर्द्रयेत्।** शुनासीराविमां वाच...पयः। तेनेमामुपसिञ्चतम् (ऋ० ४।५७।५)। **उपसिञ्चतमुपेत्य सिञ्चतमिति महेश्वरः। उपसिञ्चतमार्द्रां कुरुतम् इत्यन्ये।** व्यञ्जनैरुपसिक्ते (पा० ४।४ २६)। दध्नोपसिक्तं दाधिकम् इति वृत्तिः। **उक्तोऽर्थः।** दुहन्त्यूधरुपसेचनाय (ऋ० १०।७६।७)। **उपसेचनाय क्षरणाय।** त्रयः कोशास उपसेचनासः (ऋ० ७।१०१।४)। **उपसेचनास उपसेक्तार इति सायणः। उपसेचनसाधनानि खजाका दर्व्यो वेत्यन्ये।** ऋतं हस्तावनेजनं कुल्योपसेचनम् (अथर्व० ११।३। १३)। **उपसेचनं मिश्रणसाधनम्।** वेति त्वमुपसेचनी (ऋ० १०।२१।२)। **उपरिक्षरणशीला ऽऽहुतिः। रसमयं हविरिति यावत्।** मृत्युर्यस्योपसेचनम् (कठोप० २।२५)। **उपसेचनं व्यञ्जनम्।**

—**सिध् (षिधु संराद्धौ)।** अथ यदस्यान्नमुपसिद्धं स्यात् (गो० गृ० १। ६।४)। **उपसिद्धं समीपे सिद्धम्।**

—**सृ (सृ गतौ)।** भृगुर्वै वारुणिर्वरुणं पितरमुपससार (तै० उ० ३।१)। **उपससार=उपजगाम।** अथ खल्वाशीः समृद्धिरुपसरणानीत्युपासीत (छां० उ० १।३।८)। **उपसरणानि उपगन्तव्यानि ध्येयानीति शङ्करः।** प्रजने सर्तेः (पा० ३।३।७१) इत्यपं विधत्ते घञोऽपवादम्। गवामुपसर इति चोदाहरणं वृत्तौ स्थितम्। **प्रजनं (प्रजनः ?) प्रथमं गर्भग्रहणम्। स्त्रीगवीषु पुङ्गवानां गर्भाधानाय प्रथममुपसरणमुच्यते।** उपसर्या काल्या प्रजने (पा० ३।१।१०४)। **प्रजने प्राप्तकाला गौरुपसर्योच्यते। उपसार्येति प्राप्त उपसर्येति निपातनम्।** यस्तूर्ध्वमधो वा भेषजवेगं प्रवृत्तमज्ञात्वा विनिहन्ति तस्योपसरणं हृदि कुर्वन्ति दोषाः (सुश्रुत० २।१६५।१)। यं वै नेदिष्ठमुपसर्तव्यानां मन्येत तमुपधावेत् (श० ब्रा० १।६।२।११)। **उपसर्तव्यः साहाय्यलाभायोपेयः।**

—**सृज् (सृज विसर्गे)।** तदेतत् स्रोतसां प्रकृतिभूतत्वान्न विकारैरुपसृज्यते शरीरम् (चरक० वि० ५।७)। **नोपसृज्यते न सम्बध्यते।** तत्रौपसर्गिको नाम यः पूर्वोत्पन्नं व्याधिं जघन्यकालजातो व्याधिरुपसृजति स तन्मूल एवोपद्रवसंज्ञकः (सुश्रुत० सू० अ० ३५)। **उपसृजति तेन सम्बद्धस्तस्योपरि जायते।**

एवमु खल्वेता देवताः पाप्मभिरुपासृजन् (श० ब्रा० १४।४।१।७)। **उपासृजन् अयुञ्जन्** । पापानुगास्तु पापास्ताः पतीनुपसृजन्त्युत (भा० वन० २३३।१७)। **दोषैर्योजयन्तीत्यर्थः** । वत्सो न मातुरुप सर्ज्यूधनि (ऋ० ६।६६।१)। **उपसर्जि उपासर्जि प्रतिधीयते संसृज्यते** । दक्षिणत उपसृजति (तै० ब्रा० २।१।८।१)। **दक्षिणपार्श्वे वत्सं सम्बध्नातीत्युक्तं भवति** । उपसृजन्तीत्युपसर्गाः (पा० १।४।३८) इत्यत्र पदमञ्जरी । संबध्नन्तीत्यर्थ इति च सा । **उपसृज्यते नियुज्यत इत्युपसर्जनम्** इति द्वे अप्रधानोपसर्जने इत्यमरव्याख्यायां स्वामी । महानाम्नीनां पञ्चाक्षरानुपसर्गानुपसृजत्येकादशाक्षरेषु पादेषु (ऐ० ब्रा० ४।४)। **उपसृजति अभ्युच्चिनोति, आवपति** । आत्मा वै पञ्चविंशः । प्रजा पशव उपसर्गः । प्रजयैतत् पशुभिः प्रेष्यैरन्नाद्येनेत्यात्मानमुपसृजने (शां० ब्रा० १७।१)। महानाम्नीनामुपसर्गानुपसृजति (ऐ० ब्रा० ४।४)। **अतिच्छन्दसामनुष्टुप्त्वसम्पादनाय मेलनं करोतीत्यर्थः** । अपो देवीरुपसृज मधुमतीः (वा० सं० ११।३८)। **उपसृज निक्षिपेत्युवटः। आसिञ्चास्मिन्खननप्रदेश इति च महीधरः** । स आसामेष प्रथमभक्षः सोमस्य राज्ञो यन्निग्राभ्याभिरुपसृजति (श० ब्रा० ३।६।४।१५)। **निग्राभ्या जलानि सोमस्योपर्यासिञ्चतीत्यर्थः** । त्रिभिरप उपसृजति (श० ब्रा० ६।५।१।१२)। **उपसृजति उपर्यासिञ्चति, प्रोक्षति, अभ्युक्षति** । ये स्तोतृभ्यो गोअग्रामश्वपेशसमग्ने रातिमुपसृजन्ति सूरयः (ऋ० २।१।१६)। **उपसृजन्ति अतिसृजन्ति दाशन्ते ददति** । उपसृजन्धरुणं मात्रे धरुणो मातरं धयन् (वा० सं० ८।५१)। **मातुः पृथिव्या धारयितारमग्निमुपसृजन्समीपं प्रापयन्** । राजानं वा एताभिरुपस्रक्ष्यन्भवति (श० ब्रा० ३।६।३।२६)। **उपस्रक्ष्यन् अभिषेक्ष्यन्** । क्रुधद्रुहोरुपसृष्टयोः कर्म (पा० १।४।३८)। **उपसृष्टयोरुपसर्गेण सम्बद्धयोः** । हुत उपसृष्टां प्रब्रूतादित्याह । (अध्वर्युरिति शेषः) (का० श्रौ० ४।२।१८)। **उपसृष्टा वत्सेन संगता** । यस्याग्निहोत्री व्युपसृष्टा निषीदति (तै० ब्रा० १। ४।३।२)। उपसृष्टा गावो वसन्ति (तां रात्रिम्) (लौ० गृ० ५८।७)। **उक्तोऽर्थः** । स होवाच । गौतम का तेऽग्निहोत्री को वत्सः किमुपसृष्टा (श० ब्रा० ११।५।३।२)। **गोर्वत्सेन योजनं दोहनाङ्गभूतं किम् इत्यर्थः** । दृष्ट्वा दुर्बलमामपात्रसदृशं मृत्यूपसृष्टं जगत् ( सौन्दर० ८।३२ )। **मृत्यूपसृष्टं मृत्युसम्बद्धं मृत्युनाऽऽक्रान्तम्** । रोगोपसृष्टतनुः (रघु० ८।९४)। **रोगैर्व्याप्ता तनुर्यस्य सः** । त्याज्यं सुखं विषयसंगमजन्म पुंसाम् । दुःखोपसृष्टमिति मूर्खविचारणैषा (प्र० च० २।२३)॥ **उपसृष्टं संसृष्टं संभिन्नं सम्मिश्रितं सम्पृक्तम्** । त्यजेत्तद्राष्ट्रमासन्नमुपसृष्टमिवामिषम् (भा० शां० २८७।५२)। **विषेण सम्पृक्तमित्यर्थः** । नोपसृष्टेऽन्त्यजैर्नृभिः (मनु० ४।६१)। **उपसृष्टे सम्बद्ध उपतप्ते वेति मेधातिथिः । उपद्रुत इति कुल्लूकः** । तेनोपसृष्टो यस्तस्य

लक्षणानि निबोधत (याज्ञ० १।२७२)। **तेन विनायकेन गृहीतः, आविष्टः।** ततो भूतोपसृष्टेव वेपमाना पुनः पुनः (रा० २।६०।१) । **भूतोपसृष्टा भूताविष्टा वेतालोपहता।** दैवोपसृष्टः पुरुषो यत्कर्म कुरुते क्वचित् (भा० द्रोण० १५२।२६)। **दैवोपसृष्टः=दुर्दैवग्रस्तः।** त्वया कालोपसृष्टेन (भा० शल्य० ६३।४६)। **उक्तोर्थः।** उपसृष्टः परेणेति मूर्छितः (भा० पु० १०।७६। ३३)। **उपसृष्टः प्रहृतः। अन्यत्र दुर्लभोऽर्थः।** उपसृष्टं परित्रातुं शक्ता रामेण संयुगे (रा० ६।९४।२७)। **उपसृष्टमुपद्रुतमिति गोविन्दराजः। हन्तुमारब्धमिति तु तिलककारः। स चार्थिकोऽर्थः।** महाश्वासोपसृष्टस्तु क्षिप्रमेव विपद्यते (चरक० चि०)। **उपसृष्टो युक्तः।** तस्मादपि पृष्ठत उपसृष्टो मनसा विजानाति (श० ब्रा० १४।४।३।९)। **उपसृष्टः स्पृष्टः।** निरुपसृष्टाभिप्रेतार्थसिद्धिहेतुर्मङ्गलम् (तै० सं० १।८।१६) इत्यत्र भाष्ये भट्टभास्करः। **निरुपसृष्टाऽनन्तराया।** अनाहूतोपसृष्टानामनाहूतोपजल्पिनाम्। ये लोकांस्तान्हतः कर्ण मया त्वं प्रतिपत्स्यसे (भा० आदि० १३६।१८)॥ **उपसृष्टानामुपागतानाम्।** तक्षकादात्मनो मृत्युं द्विजपुत्रोपसर्जितात्। (भा० पु० १।१२।२७)। **उपसर्जितत् प्रेरितात्।** न चैव व्यालमृगानुविचरितमरण्यवनमवगाढेन यत्र क्वचिदुपसृज्य तुरगवरं विश्रम्यते (अवदा०)। **उपसृज्य बद्ध्वा।** सापि व्यालोक्य दुहिता सहसैवोपसृज्य तम् (बृ० क० म० वे० ३, श्लो० २१९)। **उपसृज्य=उपगम्य।** निपाताश्चादयो ज्ञेयाः प्रादयस्तूपसर्गकाः (नि० १।३ इत्यत्र दुर्ग)। ते समाधावुपसर्गा व्युत्थाने सिद्धयः (यो० सू० ३।३७ भाष्ये)। **उपसर्गा अन्तरायाः।** देवि महामोहो योगोपसर्गैः सह न ज्ञायते क्व निलीनस्तिष्ठति (प्र० च० ५)। **योगोपसर्गा योगे विघ्नाः योगस्य परिपन्थिनः कामक्रोधादयः।** प्रतिभामुपसर्गांश्चाप्युपसंगृह्य योगतः (यो० वा०)। **उपसर्गा दिव्याङ्गनासङ्गादयः।** प्रशमिताशेषोपसर्गाः प्रजाः (रत्ना० १।१०)। **उपसर्गा आपदः।** देशोपसर्गाः शमु नो भवन्तु (अथर्व० १९।९।९)। **उपसर्गा ईतयः। अजन्यं क्लीबमुत्पात उपसर्गः समं त्रयमित्यमरः।** उपसर्गेण तुरगाः करभाश्च क्षयं गताः (राज० ८।६५९)। **उपसर्गेण रोगेण।** क्षीणं हन्युश्चोपसर्गाः प्रभूताः (सुश्रुते)। **पूर्वकालोत्पन्नस्य रोगस्योपरि जातं रोगान्तरमुपसर्गः।** सोपसर्गं तु यद्वाक्यमायतीहितमुच्यते। नाभिनन्दति तद्राजा मानार्हो मानवर्जितम् (रा० ३।४४।११)। **उपसर्गो दुःखम्, व्यथा।** सोपसर्गं वो नक्षत्रम्। **उक्तोऽर्थः।** रामलक्ष्मणयोश्चैव विवासाद् वासवोपमम्। आपेद उपसर्गस्तं तमः सूर्यमिवासुरम् (रा० २।६३।२)॥ **उपसर्ग उपप्लवः। शोक इति यावत्। तं दशरथम्।** अनुभूतोपसर्गो वा मनसो वाप्युपद्रवः (रा०

२।१२।२) । अनुभूतोपसर्गोऽनुभूतस्य नाशः । सुषुप्तिरिति यावत् । महानाम्नी-नामुपसर्गानुपसृजति (ऐ० ब्रा० ४।४) । उपसर्गोऽभ्युच्चयः, आवापः । शत्रुः शदेः शासते र्वा शृणाते र्वा श्वसतेः सीदते र्वा । उपसर्गाद् बहुधा सीदतेश्च (भा० कर्ण० ४२।३२—३३) ।। उपसर्गादुपसर्जनाद् दन्त्यस्य स्थाने तालव्यस्मेति तत्र नीलकण्ठः । इहोपसर्गो विपरिणामः । ज्योतिषां चोपसर्जने (मनु० ४।१०५) । सूर्यचन्द्रतारागणानामुपसर्जन उपसर्गे उपरागादावुपद्रवे । माया विभेदानुपसर्जनानि (भा० शां० १०३।४१) । परस्परमितरेषां शत्रूणा-मुत्थापनादीनि । अद्र्यादानांशुनिवपनोपसर्जन- (का० श्रौ० १२।५।६) । निग्राभ्याभिर्युप्तस्य सोमस्याभिषवार्थमार्द्रीकिरणमुपसर्जनम् । वैवर्ण्योपसर्जनं चाङ्गानाम् (सुश्रुत० १।३२।२) । उपसर्जनं तद्भावापत्तिः । वैवर्ण्यावसादनं चाङ्गानामिति पाठान्तरम् । अथैक उपसर्जनीभिरैति (श० ब्रा० १।२।२।६) । उपसर्जनीरधिश्रयति (का० श्रौ० २।५।१) । उपसर्जनीः पिष्टसंयवनार्था अपः । उप सर्प मातरं भूमिमेतामुरुव्यचसं पृथिवीं सुशेवाम् । ऊर्णम्रदाः पृथि-वी दक्षिणावतः (अथर्व० १८।३।४९) । उपसर्प=उपेहि । उपसर्पणाशक्ता-वासनमधः (का० श्रौ० २५।६।११) । उपसर्पणमिहाग्नेः समीपेऽ वस्थितिः । एकमेव दहत्यग्निर्नरं दुरुपसर्पिणम् (मनु० ७।९) । योऽग्नेरतिसमीपमनवहितः सन्नुपसर्पति तं दुरुपसर्पिणम् ।

—सेव् (षेवृ सेवने) । एवमतन्द्रितस्त्रींश्चतुरो वा मासान् क्रियापथमुप-सेवेत (सुश्रुत० चि० ५।२८) । उपसेवेत शीलयेत् । ततः स्थितेषु तेष्वत्र नाना-भोगोपसेविषु(कथा० ४४।११६) । नाना पृथग्विधान् भोगान्भुञ्जानेष्वित्यर्थः । चन्दनेन महार्हेण यस्याङ्गमुपसेवितम् । मलेन तस्याङ्गमिदं कथमार्यस्य सेव्यते (रा० २।९९।३५) ।। उपसेवितं सुरभीकृतम् । वास उपसेवायामिति चुरादिषु पठ्यते । तत्र उपसेवा सुगन्धीकरणमाहेति मुक्तसंशयम् ।

—स्तम्भ् (स्तम्भु सौत्रो रोधने) । इमे मयूखा उप तस्तभुर्दिवम् (अथ-र्व० १०।७।४४) । उपस्तभ्नन्तीत्यर्थः । उप द्यामृष्वो बृहद् इन्द्र स्तभायः (ऋ० ६।१७।७)। उपस्तभायः=उपस्तभ्नासि, अवलम्बसे । यथा निरालम्बा सती द्यौर्नाधः पतति तथा तां धारयसीत्यर्थः । यथा वृषो वृषदर्शन उत्कटमुप-ष्टम्भं करोति (सां० का० १३ गौडपाद०) ।

—स्तृ (स्तृञ् आच्छादने) । यस्य वेदिरुपस्तीर्णा तस्य लोका यथा मम (भा०शां० ९८।३०) उपस्तीर्णा कुशैरास्तीर्णा । तं वै सदा कामचरमनुपस्तीर्ण-शायिनम् (भा० शां० १७६।१३) । शय्याहीनो भूतले यः शेते तच्छीलः ।

अनुत्तरीयवसनमनुपस्तीर्णशायिनम् । बाहूपधानं शाम्यन्तं तं देवा ब्राह्मणं विदुः (भा० शां० २६६।३०) ।। **उक्तोऽर्थः** । इयं कुसुमसङ्घातैरुपस्तीर्णा (रा० ४। १।८६) । **उपस्तीर्णा व्याप्ता** । आवसथं दद्यादुपरिशय्यामुपस्तरणमुपधानं सावस्तरणमभ्यञ्जनं चेति (आप०ध० २।३।६।१५) । **उपस्तरणं तूलिका । अवस्तरणमुपरिपटः** । निवेशनं पुनर्नवीकृत्य लेपनास्तरणोपस्तरणैः (आश्व० गृ० २।३।३) । **उपस्तरणं भूमेः समीकरणमिति नारायणो वृत्तिकारः** । शुक्रादुपस्तरणाभिघारणे (का० श्रौ० ६।६।२२) । **शुक्राद् द्रोणकलशस्थात् सोमादुन्नीय उपस्तरणं विकरणम्, अभितः प्रक्षेपः** ।

**—स्था** (ष्ठा गतिनिवृत्तौ) । अन्योन्यमुपतिष्ठन्ति रायः (ऋ० १०।११७। ५) । **अन्यमन्यं संचरन्ति । इत्वर्यो भवन्तीत्यर्थः** । मूलपुरुषावसाने सम्पदः परमुपतिष्ठन्ति (शा० ६) । **परं संक्रामन्तीत्यर्थः** । गङ्गा यमुनामुपतिष्ठते (पा० १।३।२५ सूत्रे वृत्तौ) । **यमुनया संगता भवति, तामुपश्लिष्यति** । अश्वारोहा रथिकानुपतिष्ठन्ते । **तै मैत्रीं कुर्वन्तीत्याह** । अयं पन्थाः स्रुघ्नमुपतिष्ठते । **स्रुघ्नं प्राप्नोतीत्यर्थः** । सर्वदिक्स्थान्यस्योपतिष्ठन्ते रत्नानि (यो० सू० २।३७ भाष्ये) । **उपतिष्ठन्ते उपस्थितानि संनिहितानि भवन्ति । अकर्मक इत्यात्मनेपदम् अत एव च तस्येति षष्ठी** । आग्नेय्याऽऽग्नीध्रमुपतिष्ठते (पा० १।३।२५ सूत्रे वृत्तौ) । **उपतिष्ठते स्तौति** । यदेव सायं प्रातराहवनीयमुप च तिष्ठत उप चास्ते तदेव तस्योपस्थानम् (श०ब्रा० १।३।५।१६) । **उपतिष्ठते समीपे दण्डायमानो भवति** । स तामुपस्थितो रामः क्व सीतेत्येवमब्रवीत् । (रा०३।६४।६)। **तां गोदावरीमुपस्थितः प्राप्त उपेतः** । विपदुत्पत्तिमतामुपस्थिता (रघु० ८।८३) । **उपस्थिता सिद्धा निश्चिता । विपत्ति नशिः** । उपस्थितं प्रयुञ्जानस्त्वयि सान्त्वमनर्थकम् (रा० २।७।२५) । **उपस्थितं तत्कालोचितम्** । उपस्थितं प्राञ्जलिना विनीतेन गरुत्मता ( ) । **उपस्थितमुपासितमन्वासितं सेवितम्** । यदीदृशैरहं विप्रैरुपस्थेयैरुपस्थितः ( रा० ) । तपःश्रुतोपसम्पन्नाः सर्वकामैरुपस्थिताः (भा० वि० १८।२०) । **उपस्थिताः सेविता जुष्टाः समन्विताः । किमुपस्थितं नाम** । अनार्ष इतिकरणः (पा० ६। १।१२६ सूत्रे भाष्ये) । उपस्थितं सेतिकरणं केवलं तु स्थितं पदम् (ऋ० प्रा० १०।६) । **निगदव्याख्यातम्** । विद्याव्यसनिता नित्यं नित्यं पित्रोरुपस्थितिः (स्कन्द० का० ४।१६।४४) । **उपस्थितिः शुश्रूषा** । प्रतिगृह्येप्सितं दण्डमुपस्थाय च भास्करम् (मनु० २।४८) । **उपस्थाय अभिमुखं स्थित्वा । उपस्थः** शेफसि क्रोडे तथा मदनमन्दिर इति विश्वमेदिन्यौ । मातुरुपस्थे सुखं शेते शिशुः । मातुः क्रोडे उत्सङ्गेऽङ्के । उपस्थो योनौ च मेढ्रे चेति कोषः । उपस्थो

वक्ष्यमाणयोः (भगशिश्नयोः) इत्यमरश्च । तस्मिन्निर्मनुजेऽरण्ये पिप्पलोपस्थ आस्थितः (भा० पु० १।६।१६) **उपस्थस्तलम्। अधोभागः।** तं शयानं धरोपस्थे (भा० पु० ७।१३।१२) । रथोपस्थ उपविशत् ( गीता १।४७ ) । **उपस्थो मध्यभागः।** प्रावृता उपस्थं कृत्वोपासीदन् (ऐ० ब्रा० ८।९, श० ब्रा० २।४।२।३) । अनुपस्थकृतः (सत्या० श्रौ० २६।२।३७) । आकुञ्चितस्य सव्यजानुन उपरि दक्षिणपादप्रक्षेपं कृत्वा यत्सुखेनावस्थानं **तदुपस्थकरणमुच्यते ।** उपविशेत् समस्तजङ्घोरुरत्निभ्यां जानुभ्यागुपस्थं कृत्वा यथा शकुनिरुत्पतिष्यन्नुपस्थकृतस्त्वेवाश्विनं शंसेत् (शां० गृ० १।६।९) । इत्युक्तमुपस्थकरणलक्षणम् । उपतस्थुरुपस्थानम् ( रा० २।१५।१ ) । **उपस्थानमास्थानं यत्र कार्यिणो राजानमुपतिष्ठन्ति।** आह च कौटल्यः— उपस्थानगतः कार्यार्थिनामद्वारासङ्गं कारयेत् (कौ० अ० १।१९।६) । उपस्थानमनुज्ञाप्य प्रविवेश निवेशनम् (रा० २।१०।१०) । **उपस्थानं सभा। तात्स्थ्यात् सभ्याः।** उपस्थानगृहैः शुभ्रैर्वलभीभिश्चोपशोभितम् (भा० आदि० १२८।४०) । पार्थिवैर्बहुभिः कीर्णमुपस्थानं दिदृक्षुभिः । (भा० सभा० ४९।३३) । **उक्तोऽर्थः।** द्विषत उ चैवैतद् भ्रातृव्याय नोपस्थानं करोति (श० ब्रा० १।३।५।१६) । **उपस्थानं न करोति अवकाशं न ददाति।** तत्त्वस्मृतेरुपस्थानात् (याज्ञ० ३।१६०) । **उपस्थानात् संनिधानात्, विद्यमानत्वात्।** कुशान्यवांश्चासनोपस्थानेषु प्रोक्षेत् (पा० गृ० ३।४।९) । **उपस्थानानि देवतास्थानानीति कर्कः।** न च प्रभुत्वरसास्वादिनः परोपस्थाने कृपणजीवितम् (तन्त्रा० ३, उपक्रमे) । **परोपस्थानं परसेवा, परपरिचर्या ।** प्रियं कर्तुमुपस्थातुं बलिकर्म स्वकर्मजम् । अभिहर्तुं नृपाः षट्सु पृथग्जात्यैश्च नैगमैः (भा० सभा० १३।१६) ॥ **उपस्थातुमुपहर्तुम् ।**

**—स्ना (ष्णा शौचे)।** गच्छ मागधिकामानयोपस्नानेन (अवि० ५) ।

**—स्निह् (ष्णिह स्नेहने चुरादिः)** । केदारस्येव केदारः सोदकस्य निरुदकः । उपस्नेहेन जीवामि जीवन्तीं यच्छृणोमि ताम् (रा० ६।५।११) ॥ **उपस्नेह आर्द्रीकरणं सम्बन्धश्च ।** सोपस्नेहतया वनान्तरस्याभितः खलु किष्किन्धया भवितव्यम् (अभि० १) ।

**—स्पृश् (स्पृश संस्पर्शने)।** अमूं द्यां वर्ष्मणोप स्पृशामि (ऋ० १०। १२५।७) । **उपस्पृशामि सम्यक् स्पृशामि आमृशामि।** अद्भिः प्राणानुपस्पृशेत् (मनु० ४।१४३) **पाणिगृहीताभिरद्भिश्चक्षुरादीनि करणानि स्पृशेदित्यर्थः।** यत्रास्याप उपस्पृशन्ति अग्नौ ह्यधि भ्रातृव्यं वर्धयेत् (श० ब्रा० १।१।१।२१) ।

**उपस्पृशन्ति स्पृशन्ति । उपशब्दो नान्तरमर्थं करोति ।** स विह्वलाङ्गो जगतीमुपास्पृशत् (भा० शल्य० ५७।६६) । रक्ष्यमाणश्च तैर्विप्रैर्नैहि भूमिमुपास्पृशम् (भा० उ० १८२।१३) । **उक्तोऽर्थः ।** नाकारणमुपस्पृशेत् स्त्रियम् (सत्या० श्रौ० २६।२।६७) । **पूर्वेण समोऽर्थः ।**······अपि पापकृतो जनान् । नोपस्पृशन्ति वै विघ्ना यमदूताश्च दारुणाः (स्कन्द० का० ४।१६।१२१) ॥ वासो यत् पत्नीभिरुतं तन्नः स्योनमुप स्पृशात् (अथर्व० १४।२।५१) । स्वप्ने क्षवथौ···अप्रयतं च मनुष्यं नीवीं च परिधायाप उपस्पृशेत् (सत्या० श्रौ० २६।५।१३) । **अप उपस्पृशेत् । केषुचित्स्नानं केषुचिदाचमनं केषुचित्स्पर्शनमात्रं (कुर्यात्) यावता प्रयतो मन्यत इति वृत्तिकारः । सारं वचः सूत्रहृदयमुत्तानयति ।** पादावुपस्पृश्य शनैः प्रहृष्टो वाक्यमब्रवीत् (भा० अनु० ३०।५४) । **उपस्पृश्य स्पृष्ट्वा ।** उपस्पृश्य द्विजो नित्यमन्नमद्यात् समाहितः (मनु० २।५३) । **उपस्पृश्य आचम्य ।** श्वोभूते उदकमुपस्पृश्य वाचं विसृजेत् (आप० ध० २।१२।१३) । **उदकमुपस्पृश्य स्नात्वा, अभिषेकं कृत्वा ।** उपस्पृश्य मणिकर्णिकायाम् (दशकु० पृ० ९५) । **उक्तोऽर्थः ।** नदीमुपस्प्रष्टुमिवावतीर्णः (पञ्चरा० १।१५) । **उपस्प्रष्टुं स्नातुम् ।** उपस्प्रष्टुगतश्चाहमपश्यं शयितामिमाम् ( भा० आदि० ७२।१३ ) । **उपस्प्रष्टुमाह्निकजलकार्यं कर्तुमिति नीलकण्ठः ।** प्रतिगृह्णात्येनानशक्य उपस्पर्शनम् (का० श्रौ० ५।१०।१७) । **उपस्पर्शनं स्पर्शनम् । एनान् हुतावशिष्टान् पुरोडाशान् ।** ब्राह्मणस्य गौरिति पदोपस्पर्शनं वर्जयेत् (आप० ध० १।३१।६) । **उक्तोऽर्थः ।** श्वचाण्डालपतितोपस्पर्शने सचैलं स्नातः सद्यः प्रयतो भवति (व० धर्म० २३।३३) । अवरश्चेद्वर्णः पूर्वं वर्णमुपस्पृशेत्पूर्वो वाऽवरं तत्र तच्छवोक्तमाशौचम् (याज्ञ० मिताक्षरायां ३।१४ इत्यत्रोद्धृतं गौतमीयं वचनम्) । **उपस्पर्शनं निर्हरणमिति मिताक्षरा ।** मेधां मह्यमिति पाणिना मार्गं दत्त्वा त्रिषवणमहोरात्रमुदकोपस्पर्शनम् (लौ० गृ० ४।१८ ) । **उदकोपस्पर्शनं स्नानम् ।** उपस्पर्शनषड्भागं लभते पुरुषः सदा (भा० अनु० ६५।१३) । **उपस्पर्शनं दानम् । णिजधिकस्य स्पृशेरयं प्रयोग इति गाः स्पर्शयता घटोध्नीरिति रघुकारस्य वचनात्प्रतीयते । स भवांस्तूपं न प्रयुङ्क्ते । केवलेन धातुना दानमर्थमर्पयति ।** तदुपस्पर्शनं पुण्यं गच्छन्तं···भरद्वाजम् (रा० ५।३।१४) । **उपस्पर्शनं स्नानम् ।** व्रतायोपस्पर्शनं स्वासने (का० श्रौ० ७।४।२७) । **उपस्पर्शनमाचमनम् ।** अस्मे ता त इन्द्र सन्तु सत्याऽहिंसतीरुपस्पृशः (ऋ० १०।२२।१३) । **उपगम्य स्पृशन्ति उपस्पृशः स्तुतयः ।**

—**स्मृ (स्मृ चिन्तायाम्)**। यत्रैव संव्रजन्नन्वाहार्यपचनमुपस्मरेत् (श० ब्रा० २।३।२।४)। **उपस्मरेत् स्मरेत्**। अनेन चैतदुपस्मरति (केनोप० ४।५)। **उक्तोऽर्थः**।

—**स्रु (स्रु गतौ)**। मेदसः कुल्या उप तान् स्रवन्तु (वा० सं० ३५।२०)। **समीपे वहन्तु, स्यन्दन्ताम्**। पत्न्युदक्या दीक्षारूपाणि निधाय सिकतास्वासीतोपस्रवणात् ( का० श्रौ० २५।११।१३ )। आ **उपस्रवणात् आ रजःस्रुतिविरामात्**।

—**स्विद् (ञिष्विदा गात्रप्रक्षरणे)**। सोपस्वेदेषु भाण्डेषु (भा० आदि० १६।१५)। **ऊष्मवत्स्वित्यर्थः**।

—**हन् (हन हिंसागत्योः)**। अथ कश्चिच्छस्त्रे वाऽनुवचने वा प्रमत्त उपहन्यात् (शां० ब्रा० २६।३)। **उपहन्याद् दूषणं कुर्यात्**। अधीयन्नुपहन्यादन्यं विवक्तारमिच्छेत् (ऐ० ब्रा० ३।३५)। **उपहन्याद् वर्णादिलोपरूपमपराधं प्रमादं कुर्यात्**। मशकैर्मक्षिकाभिश्च निलीनैर्नोपहन्यते (व० धर्म० ३।४७)। **उपहन्यते दूष्यते**। पुण्यक्षयानुसन्धानात् पपातोपहताकृतिः (यो० वा० ४।८।१५)। **उपहताकृति दूषिताकारः, म्लानाननः**। अपाङ्क्त्योपहता पङ्क्तिः पाव्यते यैर्द्विजोत्तमैः (मनु० ३।१८३)। **उक्तोऽर्थः**। कपोतश्चेदगारमुपहन्यात् (आश्व० गृ० ३।७।७)। **तुण्डादिभिर्घट्टयेदित्यर्थः। तत्र निषीदेत् तत्र पदं कुर्यादिति तु नारायणः। अयं च शब्दमर्यादया दुर्लभोऽर्थः**। स्वकर्मण्यव्याहताश्चरिष्यन्ति परस्य वा कर्माण्युपहनिष्यन्तीति तदा विगृह्यासीत (कौ० अ० ७।४।६)। **उपहनिष्यन्ति निहनिष्यन्ति विघटयिष्यन्ति**। अथाञ्जलिना पय उपहन्ति (बौ० ध० २।५।८।४)। **उपहन्ति गृह्णाति**। संसारमदिरा सेयमविद्योच्यते बुधैः। अनयोपहतो लोकः कल्याणं नाधिगच्छति (यो० वा० ४।२१।३९-४०)। **उपहतो निघ्नो वशे कृतः**। दैवेनोपहतः पार्थः (भा० द्रोण० १४५।१७)। **उपहतो व्यामोहं गमितः, कश्मलं प्रापितः**। यदा हि चक्षुरादिभिरुपहतं मनो भवति, इन्द्रियं वा तिमिरादिभिः, सौक्ष्म्यादिभिर्वाह्यो वा विषयः (मी० १।१।५ शा० भा०)। अगमनीयां गत्वा ऽयाज्यं वा याजयित्वा ऽप्रतिग्राह्यं प्रतिगृह्य चैत्यं यूपं वोपहत्य(आश्व० गृ० ३।५।८)। **उपहत्य स्पृष्ट्वा**। नानुपहत्य भूतानि भोगः संभवति (यो० सू० भा०)। **अनुपहत्य अहिंसित्वा**। तस्याः ( पृथिव्याः ) उपहत्योदमज्जत् ( तै० ब्रा० १।१।३।६ )। **उपहत्य कियतीमप्यार्द्रां मृदं पृथक् कृत्वा**। व्रीहीणामुपघाते प्रक्षाल्यावशोषणम् (बौ०

ध० १।६।१४।१२)। उपघातश्चाण्डालादिस्पर्शजन्यमप्रायत्यम्। स्त्रीणां च प्रेक्षणालम्भमुपघातं परस्य च (मनु० २।१७६)। उपघातोऽपकारः। राजदैवोपघातेन पण्ये दोषमुपागते (याज्ञ० २।२५६)। राजोपघातो राजापराधः। दैवोपघातो वर्षादिरुपघातको वैरूप्यापादकः। अन्वारब्धाया स्रुवेणोपघातं··· जुहुयात् (खा० गृ० १।३।६)। पाणिना मेक्षणेनाथ स्रुवेणैव तु यद्धविः। हूयते चानुपस्तीर्य उपघातः स उच्यते (गृह्यासं० २।७)॥

—हस् (हसे हसने)। परस्य लाघवमापादयितुं यो हासः स उपहासः। अमरगुरुमपि प्रज्ञयोपहसद्भिः (काद०)। अतिशयानैरित्युपचरितोऽर्थः। जिह्मोपहसितं तु तत् (अग्निपु० ३४२।१०)। जिह्मं हसितमुपहसितमित्यर्थः।

—हा (ओहाङ् गतौ)। उपाजिहीथा न महीतलं यदि (शिशु० १।३७)। नोपाजिहीथा नागच्छेः, नावतरेः।

—हिंस् (हिसि हिंसायाम्)। उपहिंसन्ति चान्योन्यं प्रलुम्पन्ति परस्परम् (मात्स्य पु० १४४।६६)। उपहिंसन्ति व्यतिहिंसन्ति व्यतिघ्नन्ति, सम्प्रहरन्ते।

—हृ (हृञ् हरणे)। तस्मात्स्थेयानस्थेयसो नोपहरते (तै० सं० ५।२।६।३२)। उपहरते उपदां ददाति। यद्यप्येवं तथापि राजपरिग्रहोऽस्य प्रधानत्वमुपहरति (माल० १)। उपहरति ददाति अर्पयति। प्राप्तकर्मा यथान्यायं काले काले ह्युपाहरत् (यो० वा० ६।(२)।२१६।१५)। उपाहरत् = आचरत्, व्यतनोत्। उपाङावत्रोपसर्गौ स्याताम्। तौ···देवनागयक्षविद्याधरतपस्विनां परं विस्मयमुपजह्रतुः (अवदा० हंसजा०)। उपजह्रतुः = जनयामासतुः। निगमकृदुपजह्रे भृङ्गवद् वेदसारम् (भा० पु० )। वहु वै राजन्यो ऽनृतं करोति उप जाम्यै हरते (तै० ब्रा० १।७।२)। जायात्वं सम्पादयितुं परस्य गृहमुपेत्य स्त्रियं हरतीत्यर्थः। अन्यान्येव हवींष्युप वा ह्रियन्ते ऽप च ह्रियन्ते (श० ब्रा० ११।१।६।३५)। उपह्रियन्ते ऽतिरिच्यन्ते। अपह्रियन्ते ऽपकृष्यन्ते न्यूनी भवन्ति। धूपवल्युपहारांश्च भक्ष्यांश्चोपहारयेत् (सुश्रुत० सूत्र० १६।२१)। उपहारयेत् दापयेत्। उपहृतपशू रुद्रः (पा० २।२।२४ सूत्रे वृत्तौ)। उपहृतः पशुर्यस्मै, बलिरिति दत्तः। शस्त्राशनिविषोपमा भवन्त्यज्ञैरुपहृताः (ओषधयः)(सुश्रुत० १।३।१६)। (उपतप्ताय) दत्ताः। संस्कर्ता चोप-

हर्ता च (मनु० ५।५१)। उपहर्ता परिवेष्टा, परिवेषकः। अहो परिभवोपहारिणो विनिपाताः (माल० ५)। परिभवं तिरस्कारमुपहरन्त्यर्पयन्तीत्येवंशीलाः। रत्नपुष्पोपहारेण छायामानर्च पादयोः (रघु० ४।८४)। उपहारः समर्पणम्।

—ह्वृ (ह्वृ कौटिल्ये)। मुहुराहूयमानोपि नायातोऽयमुपह्वरे (शि० भा० १५।१०)। उपह्वरे ऽन्तिके। तथा चामरः पठति—रहोन्तिकमुपह्वरे।

—ह्वे (ह्वेञ् स्पर्धायां शब्दे च)। उपास्मान् वाचस्पति र्ह्वयताम् (अथर्व० १।१।४)। उपह्वयतां तत्फलप्राप्तिमभ्यनुजानातु। उपपूर्वो ह्वयतिरभ्यनुज्ञाने वर्तते। यथा उपहूत उप ह्वयस्व इति सोमभक्षणानुज्ञानमन्त्रे इति सायणः। उपहूत उपहवं ते ऽ शीय (तै० सं० १।६।३।१)। उपहवो ऽनुज्ञा। अनुज्ञास्वीकाराय यत्प्रार्थनं तद् उपहव इत्युच्यते इति गृहानुपह्वयामहे (अथर्व० ७।६२।३) इत्यत्र सायणः। नानुपहूतेन सोमः पातव्यः (काठक सं० ११।१)। अनुपहूतोऽननुज्ञातः। उपहूतो वाचस्पतिः (अथर्व० १।१।४)। उपहूतः समीपमाहूतः।

## उपाति (उप+अति)

—इ (इण् गतौ)। अथ त्रीण्यहान्युपातियन्ति (श० ब्रा० १२।५।२।८)। उपातियन्ति=अतिरिक्तान्यतियन्ति अतिक्रामन्ति। परावनुपात्यय इणः (पा० ३।३।३८)। क्रमप्राप्तस्यानतिपातोऽनुपात्ययः परिपाटीति वृत्तिः।

## उपाव (उप+अव)

—इ (इण् गतौ)। तद् देवा भीषा नोपावेयुः (श० ब्रा० ३।८।३।२८)। नोपावेयुः=नोपेयुः। नानुमेनिर इति तु संस्कृतशार्मण्यकोषः।

—धा (डुधाञ् धारणपोषणयोः)। उपावपूर्वस्य धाञोऽधः समीपे निधाने प्रयोगः।

—नम् (णम प्रह्वत्वे शब्दे च)। य ऋजुरूर्ध्वशल्को यस्यर्जोः सत ईषदग्रमुपावनतं तं वृश्चेत् (भा० श्रौ० ७।१।१०)। उपावनतमानतम्। उपशब्दः सामीप्ये। अवोऽधोर्थे।

—रुह् (रुह बीजजन्मनि)। वास उपावरोह जातवेदः पुनस्त्वं देवेभ्यो हव्यं वह नः प्रजानन् (आप० श्रौ० ६।८।२८।१२)। उपावरोह वर्धस्व (मुखेनोपधमन्नाह)। वासो वसती रात्रिरिति पर्यायाः।

—सृज् (सृज विसर्गे)। पूषा त्वोपावसृजत्विति वत्समुपसृजति (सत्या० श्रौ० २४।४।३)। **अन्यत्र वत्सस्य गवा संयोजनरूपो योर्थः केवलेनोपेन धातुसहचरितेनोक्तः स एवेह द्वाभ्यामुपावाभ्याम्। तेनार्थानतिरेके ऽप्युपसर्गातिरेक ऋषीणां रुचेर्विषय इति प्रसिध्यति।** वत्सं चोपावसृजति (तै० सं० १।६।६।३)। **उक्तोऽर्थः।** तदाहुर्यस्याग्निहोत्र्युपावसृष्टा दुह्यमानोपविशेत् तत्र का प्रायश्चित्तिरिति (ऐ० ब्रा० ७।३)। **उपावसृष्टा वत्सेन संयोजिता।** रौद्रं गविसद् वायव्यमुपावसृष्टं (पयः) (ऐ० ब्रा० ५।२६)। **उपावसृष्टं संसृष्टवत्सकं प्रस्नुतस्तनकम्।**

—सृप् (सृप्लृ गतौ)। अथ ह जनको वैदेहः कूर्चादुपावसर्पन्नुवाच (श० ब्रा० १४।६।११।१)। **सिंहासनादवरोहन् अवतरन्नित्याह।**

—सो (षो अन्तकर्मणि)। सोऽन्यस्यैव कृतानुकरोऽन्यस्योपावसायी भवति (श० ब्रा० १।६।३।२४)। **परेच्छानुवर्ती भवतीत्यर्थः। परच्छन्दोऽनुप्रविशति।** य एनमीजान उपावसितो वा पर्यवसितो वा स्यात् तस्य निनाह्याद् (=घटाद्) गृह्णीयात् (श० ब्रा० ३।६।२।८)। **उपावसित आरातीयः। पर्यवसितः प्रातिवेश्यः।**

—हृ (हृञ् हरणे)। ते ये युक्ते ऽन्ये वियुक्ते ऽन्य उपावहरन्त्युभावेव ते योगक्षेमौ कल्पयन्ति (ऐ० ब्रा० ३।३)। **उपावहरन्ति=अवरोपयन्ति।** स त्वा अध्वर्युः स्वाग्रः सोममुपावहरन्त्सर्वाभ्यो देवताभ्य उपावहरेत् (तै० सं० ६।४।३।१)। **उपावहरेत् अवतारयेत् (हविर्धान्याः)।** अथ राजानमुपावहरति (श० ब्रा० ३।६।३।३)। अथ रथमुपावहरति। यद्वै राजन्यात्पराग्भवति रथेन वै तदनुयुङ्क्ते (श० ब्रा० ५।४।३।३)। **उक्तोऽर्थः।** तद्धैतदेके कुशला मन्यमानाः प्राचीं स्रुचमुपावहृत्य (श० ब्रा० ११।४।२।१३)। **प्राचीं दिशं प्रति नमयित्वेत्यर्थः।** इन्द्रो हविर्धाने ऽथर्वोपावह्रियमाणः (वा० सं० ८।५६)। **उपावह्रियमाणः कण्डनार्थमानीयमान इति महीधरः।**

## उपाङ् (उप+आङ्)

—अज् (अज गतिक्षेपणयोः)। आ सखायः सवर्दुघां धेनुमजध्वमुप नव्यसा वचः (ऋ० ६।४८।११)। **उपाजध्वम् उपागच्छत।**

—इ (इण् गतौ)। धेनुर्वागस्मानुप सुष्टुतैतु (ऋ० ८।१००।११)। **सुष्ठु स्तुता धेनुर्वागस्मान् उपैतु उपागच्छतु इत्युक्तं भवति।** ऋतं वर्षिष्ठमुप गाव

आगु (ऋ० ३।५६।२)। तदुताप्याहुः साम्नैनमुपागादिति साधुनैनमुपागादित्येव (छां० उ० २।१।२)। त आ यन्तु प्रब्रुवाणा उपदेम् (अथर्व० १।७।५)। उक्तोऽर्थः। गान्धर्वेण विवाहेन मामुपैहि वराङ्गने (भा० आदि० १७२।१६)। उपैहि मिथुनी भव।

— कृ (डुकृञ् करणे)। लोके यशः स्फीतमुपाकरोतु (भा० वन०)। उपाकरोतु आहरतु, प्राप्नोतु। रोहिण्यां छन्दांस्युपाकुर्यात् (आप० श्रौ० ७।१२।६)। संस्कारपूर्वकं वेदाध्ययनमारभेतेति सूत्रार्थः। ग्रहं वा गृहीत्वा चमसं वोन्नीय स्तोत्रमुपाकुर्यात् (तै० सं० ३।१।२।८)। उपाकुर्यात् उपक्रमेत। व्रतानि व्रतपतय उपाकरोम्यग्नये (कौ० सू० ४२।१७)। उक्तोऽर्थः। परागेव स्तोत्रमुपाकरोति (श० ब्रा० ४।२।५।७)। उपाकरोति पठति। उप ते गा इवाकरम् (ऋ० १०।१२७।८)। उपेत्य स्तुतिभिरभिमुखी करोमीत्यर्थ इति सायणः। व्यञ्जनार्थं च सौमित्रे गोसहस्रमुपाकुरु (रा० २।३२।२१)। उपाकुरु देहि। उपाकुरुष्व तद्राजंस्तस्मान्मुच्यस्व संकटात् (भा० वन० २७७।२१)। उक्तोऽर्थः। येनैव राजन्नर्थेन तदेवास्मा उपाकुरु (भा० उ० ८७।१५)। उपाकुरु अर्पय। यदा वा अध्वर्युरुपाकरोति वाचैवोपाकरोति (ऐ० ब्रा० २।१५)। उपाकरोत्यभिसम्बोधयति प्रेषयति। सोऽन्यद् वृत्तमुपाकरिष्यमाणः (श० ब्रा० १४।७।३।१)। उपाकरिष्यमाण आरप्स्यमानः। यत्तत्पूर्वमुपाकुर्वन्नस्त्रं मामब्रवीत्कृपः (भा० द्रोण० १४७।२४)। उपाकुर्वन् अध्यापयन्, ग्राहयन्, अभिविनयन् (अस्त्रे), शिक्षयन्। उपाकृतेषु पवमानेष्वोदृचः (ऐ० ब्रा० ५।३३)। उपाकृतेषु प्रारब्धेषु प्रक्रान्तेषु। उदृक् समाप्तिः। अनुपाकृतवेदस्य कर्तव्यो ब्रह्मयज्ञकः (वीरमित्रोदये पृ० ४३६ समुद्धृतं जैमिनिवचनम्)। अनुपाकृतवेदो विधिवदनारब्धवेदाध्ययनः। उपाकृतः पशुरसौ योऽभिमन्त्र्य क्रतौ हत इत्यमरः। उपामन्त्र्य क्रियते हन्यत इत्युपाकृत इति स्वामी। तस्मा उपाकृताय नियोक्तारं न विविदुः (ऐ० ब्रा० ७।१६)। बर्हिर्युक्तया प्लक्षशाखया मन्त्रपुरःसरं समुपस्पृश्य स्वीकार उपाकरणम् इति तत्र याज्ञिकाः। अनुपाकृतमांसानि देवान्नानि हवींषि च (मनु० ५।७)। पशुयागादौ मन्त्रबहुलेन पशोः स्पर्शनमुपाकरणम्। तद्रहितः पशुरनुपाकृतस्तस्य मांसानि। उपाकृतं शशमानं यदस्थात् प्रियं देवानामप्येतु पाथः (अथर्व० २।३४।२)। उपाकृतमानीतमाहृतं प्रापितम्। दृष्ट्वा च सर्वान् मञ्चानुपाकृतान् (वि० पु० ५।२०।२४)। उपाकृतान् विधिवत् स्थापितान्। साक्षाद्रामेण यो बाल्ये धनुर्वेद (सप्तम्यन्तम्) उपाकृतः (भा० कर्ण० २।१३)। उपाकृतोऽभिविनीतः,

**शिक्षितः (धनुर्वेदम्)** । उपाकृत्य तु वै विद्यामाचार्य्येभ्यो नरर्षभाः । प्रयच्छन्तीह ये कामान्देवत्वमुपयान्ति ते (भा० द्रोण० १४७।२१-२२) ॥ **उपाकृत्य उपादाय** । श्रावण्यां प्रोष्ठपद्यां वाप्युपाकृत्य यथाविधि (मनु०४।९५) । श्रावण्यां पौर्णमास्यामध्यायमुपाकृत्य मासं प्रदोषे नाधीयीत (आप० ध० १।९।१) । **विधिवदुपाकर्म कृत्वेत्युक्तं भवति** । शिविः···प्राणान् प्रियस्य तनयस्य च । ब्राह्मणार्थमुपाकृत्य (भा० अनु० १३७।४) । **उयाकृत्य दत्त्वा** । तदुपाकर्तु-मिच्छामि मन्यसे यदि पार्थिव (भा० वन० ७७।१७) । **उपाकर्तुं दातुम्** । सोमे च ग्रहं गृहीत्वोपाकरणात् (का० श्रौ० ३।३।१७) । **सोमरसाधारभूतः पात्रविशेषो ग्रहः । उद्गातृभिः क्रियमाणस्य स्तोत्रस्य प्रारम्भ उपाकरणमिति विद्याधरकृता वृत्तिः** । अथातोऽध्यायोपाकरणम् (आश्व० गृ० ३।५।१) । **अध्यायस्य वेदाध्ययनस्योपाकरणं प्रारम्भो येन कर्मणा तदध्यायोपाकरणम्** । पुरा प्रातरनुवाकस्योपाकरणात् (छां० उ० २।२४।३) **उक्तोऽर्थः** ।

**—गम्** । **(गम्लृ गतौ)** । यदयं कृत्यवान्प्राप्तः कृत्यं चैतदुपागतम् (रा० ४।४।३) । **उपागतं निष्पन्नप्रायम्** । ( पूर्तः ) **समीपमागतमित्यक्षरार्थः** । तपोनिधिं वेत्सि न मामुपागतम् ( शा० ४।१ ) । **उपस्थितमिति पाठान्तरम्** । **स्पष्टोऽर्थः** । दायादमुपागतः (दासः) इति मिताक्षरा । **कुलक्रमागतः, पितृपैतामह इत्यर्थः** ।

**—घ्रा (घ्रा गन्धोपादाने)** । उपाघ्राति च यो गन्धान् रसांश्च पृथग्विधान् (भा० वन० १४५०४) । **उपाघ्राति जिघ्रति** । **नार्थ उपाङ्भ्याम्** । शवगन्ध-मुपाघ्राति सुरभिं प्राप्य यो नरः (भा० शां ११७१६) । **उक्तोऽर्थः** । ततस्तं मूर्ध्न्युपाघ्राय (हरि० १।२५।४५) । **उपाघ्राय चुम्बित्वा** ।

**—चर् (चर गतिभक्षणयोः)** । यथा वद्धवत्सोपाचरेदेवमेतं ग्रहमुपाचरतः (अध्वर्युप्रतिप्रस्थातारौ) (श० ब्रा० ४।२।४।२२) । **उपाचरतः प्रत्यागच्छतः प्रतिनिवर्तेते** । उप नः पितवा चर (ऋ० १।१८७।३) । **हे पितो नोऽस्मानुपाचर उपगच्छेत्याह** । निशाचरास्तूग्रमुपाचरन्ति (त्वाम्) (वामन पु० ७०।५३) । **उपाचरन्ति व्यवहरन्ति व्यपदिशन्ति** । **उदाहरन्ति** । वणिजो वाराणसीं जित्वरीत्युपाचरन्ति (पा० ४।३।८३ सूत्रे भाष्ये) । **उक्तोऽर्थः** । **समवाये** तु दोषाणां पूर्वं पित्तमुपाचरेत् ( सुश्रुत० उत्तर० ४०।९६ ) । **उपाचरेत् चिकित्सेत्** । नास्ति रोगो विना दोषैर्यस्मात्तस्माद् विचक्षणः । अनुक्तमपि दोषाणां लिङ्गैर्व्याधिमुपाचरेत् (सुश्रुत०) । ततस्तमुपावर्त्य तावन्तमेव कालं

तथाविधेनैव कर्मणोपाचरेत् (चरक० सूत्र० १५।८)। ततः साध्यं परीक्षेत पश्चाद् भिषग् उपाचरेत् (वैद्यजीवने १।८)। उक्तोऽर्थः। त्रिवर्गं चाप्युपाचरेत् (भा० शां २८।४३)। उपाचरेत् अनुतिष्ठेत्।

—दा (डुदाञ् दाने)। उपादत्स्व यदत्र वसु मन्यसे (भा० वन० ८५९५)। उपादत्स्व गृहाण, आत्मसात्कुरु। प्रत्यर्थिनो हस्तादुपादत्ताङ्गुलीयकम् (राज० ६।३३)। उपादत्त आच्छिनत्, आमृशत्, आक्षिपत्। यत्परस्य कुत्सार्थमुपादीयते (पा० ५।३।९५ सूत्रे भाष्ये)। उपादीयते उपन्यस्यते उदाह्रियते कथ्यते। एकान्तं समुपागम्य ततः शेषमुपाददे (रा० गोरे० सं० २।५६।३१)। उपाददे प्रारेभे। तेन ह्युपात्तं सकलं सर्वज्ञानमितस्ततः (भा० द्रोण० ३३।१५)। उपात्तमात्तं सङ्गृहीतम्। भूर्या पितामहोपात्ता निबन्धो द्रव्यमेव वा (याज्ञ० २।१२१)। उपात्ता प्रतिग्रहेण विजयेन क्रयेण वा लब्धा। उपात्तयज्ञः (हरि० ३।२।३९)। उपात्त उपसंहृत इति नील०। उपात्तवर्णे चरिते पिनाकिनः (कु० ५।५६)। उक्तोऽर्थः। वर्णः प्रशस्तिर्वर्णनं वा। उपात्तो निर्मदो हस्तीति हलायुधः। पुनरस्मानुपादाय तथैव व्रज भारत (भा० आदि० १५०।२५)। उपादाय सहादाय। अपि प्रेष्यानुपादाय सर्वे स्मसुखोषिताः (रा० २।९२।६)। प्रेष्यान् परिचारकानप्यादाय, तानूरीकृत्य, तानभ्यन्तरीकृत्य, तैरपि सहेत्यर्थः। शीघ्रमानय गान्धारीं सर्वाश्च भरतस्त्रियः। वधूं कुन्तीमुपादाय। उक्तोऽर्थः। वृद्धबालानुपादाय चातुर्वर्ण्ये समागते (भा० उ० ७३।३३)। चकार न पुरा कश्चिन्न कर्ता न करिष्यति। उपादाय सुरान्सेन्द्रान् इदमन्यत्र राघवात् (रा० ५।९५।३२)॥ तस्मान्न निश्चयाद्वक्तुं धर्मः शक्यो हि केन चित्। देवानृषीनुपादाय स्वायम्भुवमृते मनुम् (मात्स्य पु०१४३। २८)॥ इह सर्वत्र उपादायेत्यस्यान्तर्भावयित्वेत्येवार्थः। पितामहैराचरितं तथैव प्रपितामहैः। अद्योपादाय तं मार्गम् (रा० २।१७।८-९)। उपादाय आस्थाय आश्रित्य। चित्रकूटमुपादाय राज्यभ्रष्टोसि मे श्रुतः (रा० ३।७।८)। उक्तोऽर्थः। प्रजापतिमुपादाय नृपाणां जयशालिनाम् (रा० १।५।१)। उपादाय = आरभ्य, उपक्रम्य। ततः प्रभृतीत्यर्थः। उपादातुं पुष्पाणि फलानि च (रा० ३।६।२०)। उपादातुमवचेतुम्। कथं तु देवा हविषा गयेन परितर्पिताः। पुनः शक्ष्यन्त्युपादातुमन्यैर्दत्तानि कानि चित् (भा० वन० ८५३७)॥ उपादातुं प्रत्येषितुमभ्युपैतुम्। सर्वत्रैव प्रथमं पुत्रोपादानात् (शङ्खलिखितौ)। पुत्रकीर्तनादित्यर्थः। उपादानेप्यामिषम् इत्यमरः। उपादानमुत्कोचः। नोपादानं विनोद्भवः (विष्णु० पु० १।१७।५८)। मूलमन्तरेण नोत्पादः कश्चिदस्तीत्याह। उपादानादुपादेयं हि नातिरिक्तम् (छां० उ० ३।१४।१ इत्यत्र

गोपालानन्द स्वामी) । **उपादानं प्रकृतिः ।** वाक्योपादानहेतोस्तु वक्ष्यामि विदिते सति (भा० उ० २०।३) । **वाक्योपादानहेतोः=वचनारम्भाय, मवद्भिः किंचिद् वक्तव्यमिति हेतोः ।** अग्रिमाणां क्षितिभुजामुपादानं मनोहरम् (भा० शां० २६।१८) । **उपादानमुपादेयं श्रोतुं योग्यम् ।**

—**दिश् (दिश अतिसर्जने, दिशिरुच्चारणक्रिय इति भाष्यम्)** । भवान्वा विधिवत्पाणिं गृह्णातु दुहितुर्मम । यस्य वा मन्यसे वीर तस्य कृष्णामुपादिश (भा० ) ॥ **उपादिश निर्दिश, अतिसृज वा ।** इति राज्ञ उपादिश्य विप्रा जातककोविदाः ( भा० पु० १।१२।२६ ) । **उपादिश्य निवेद्य विज्ञाप्य, अनुशिष्य ।**

—**द्रु (द्रु गतौ)** । आ मा पूषन्नुप द्रव शंसिषं नु ते (ऋ० ६।४८।१६) । **मामुपाद्रव माम्प्रति त्वरस्व ।**

—**धा (डुधाञ् धारणपोषणयोः)** । मा त्वं प्रोत्साहिता पापैः··· । भर्तारं लोकभर्तारमसद् धर्ममुपादध(रा० २।३५।३०) । **मा ग्राहयेति भूषणम् ।** नगरमुपाहितमग्निनाऽभिवीक्ष्य (भा० शां० २१६।५०) । **उपाहितं परिगतं परीतम् ।** उद्दालको हारुणिः । उदीच्यान्वृतो धावयाञ्चकार । तस्य निष्क उपाहित आस (श० ब्रा० ११।४।१।१) । **निष्क उपाहित आसेत्यस्यायमर्थः—यो मां ब्रह्मोद्यं (शास्त्रप्रवचनं वा) जेता तस्य निष्क उपहारः प्रदास्यत इत्येवंरूपो ऽभिसन्धिरुपसंवादो वा विज्ञापितो ऽभूत् । गोपथब्राह्मणे (३।६) ष्ययं सन्दर्भः स्थित ईषद्भेदेन ।** स्तम्भश्चेष्टा—प्रतीघातो भयरागाद्युपाहिताः (अग्निपु० ३३९।१८) । **उपाहितो जनितः । उपाहितः संयोजित इत्यमरः ।** उपाहितां वक्षसि पीवरस्तने (भारवौ) । **उक्तोऽर्थः ।** संकुलोपाहितवेदसमाप्तिच्छर्दिश्राद्धमनुष्ययज्ञभोजनेष्वहोरात्रम् ( गौ० ध० २।७।३४ ) । **उपाहितोऽग्निदाहः । अग्न्युत्पात उपाहित इति वैजयन्ती ।** न ह्युपाधेरुपाधिर्भवति विशेषणस्य वा विशेषणम् (पा० १।३।२ सूत्रे भाष्ये) । एक आत्मा । देहाद्युपाधिरचितो भेदः । यथैक आकाशः । घटाद्युपाधिरचितो भेदः । घटाकाशः । मठाकाशः । साध्यव्यापकत्वे साधनाव्यापकत्वमुपाधिरिति नैयायिकाः । यथा पर्वतो धूमवान् वह्नेरित्यत्र वाक्ये आर्द्रेन्धनसंयोग उपाधिः । काष्ठाहरणे शाकाहरणमुपाधिः क्रियते (मी० शा० भा० ४।३।२०) । **उपाधिर्ना धर्मचिन्तेत्यमरः ।** उपाधिर्न मया कार्यो वनवासे जुगुप्सितः (रा० २।१११।२६) । **उपाधिः प्रतिनिधिः ।** मृतायामपि भार्यायां वैदिकाग्निं न हि त्यजेत् । उपाधिनापि तत्कर्म याज्जीवं समापयेत् (गो० स्मृ० ३।६) । **उक्तोऽर्थः ।** पापेनो-

नोपाधिना वने । अनेन…( रा० ३।४३।५ ) । **अनेन पापेन मृगरूपोपाधिना निमित्तेन ।**

**—ध्मा ( ध्मा शब्दाग्निसंयोगयोः )** । प्रीतः शङ्खमुपाध्मासीत् (हरि० २।६६।१) । **अपूपुरदित्यर्थः** ।

**—नी ( णीञ् प्रापणे )** । स्रजो ध्रुव कृष्णमुपानयन्ति (हरि० २।६५।१७) । **उपानयन्ति उपहरन्ति** । समिज्जलादिकं चास्य (गुरोः) कल्यं कल्यमुपानयेत् (वि० पु० ३।६।६) । **उक्तोऽर्थः** । मम शोकमुपानयन् (रा० ६।८२।३) । **उपाहरन् आहरन् जनयन्** । मृष्टमन्नमुपानीतमश्नाति न हि तं (= लक्ष्मणं) विना (रा० १।१८।३१) । **उपानीतमुपहृतं निवेदितम्** । विमानैर्विविधैश्चित्रैरुपानीतैः सुरोत्तमैः (भा० वि० ५६।१८) । **उपानीतैः समीपमानीतैः** । उदकान्तमुपानीय मत्स्यम् (भा० वन० १२७५६) । उपानीय ततो गङ्गां रसातलम् (रा० १।४४।४२) ।

**—पत् (पत्लृ गतौ)** । हंसाविव पततमा सुताँ उप (ऋ० ५।७८।१) । **उपापततम् उपर्यन्तिक उड्डयेथाम्** ।

**—यम् (यम उपरमे)** । त्रिरात्रो यद् व्यशीर्यत तमेतैः सामभिरभिषज्यन् गायत्रपार्श्वेनोपायच्छन् (पञ्च० ब्रा० १४।६।२७) । **उपायच्छन् अवाष्टम्नन् इति केलेंडो भाषान्तरकृत् । शिथिलावयवानां । (सोमानाम्) पुनः सन्धानार्थमुपादानमकुर्वन्नित्युत्तरवाक्यार्थ इत्यन्ये** । नोपायध्वं भयम् (भट्टि० ७।१०१) । **भयं मास्म सूचयत, मा काष्टेंति जयमङ्गला । सर्वथाऽस्थाने भट्टिप्रयोगः । नात्रारादपि किमपि हिंसात्मकं गन्धनं सूचनं पैशुन्यमस्ति । तत्र सत्येव यमेः कित्त्वमात्मनेपदं चेति वृत्तिकारः** ।

**—या (या प्रापणे प्रापणमिह गतिः)** । आ नो देवेभिरुप देवहूतिमग्ने याहि (ऋ० ७।१४।३) । **उपायाहि उपागच्छ** । उपायातं दाशुषे रथेन वहन्ता ( ऋ० ७।७१।२ ) । प्रद्युम्नोऽयमुपायाति भीतः ( भा० वन० १८।२२ ) । **उक्तोऽर्थः** ।

**—रम् (रमु क्रीडायाम्)** । तपसोऽग्र्यादुपारम (रा० गोरे० सं० १।६७।११) । **उपारम विरम** । दृष्ट्वान्तरं ज्योतिरुपारराम ( कु० ३।५८ ) । उपारराम विरराम । **समाधे र्व्युत्थित इत्यर्थः** । उपारमत तत्सैन्यं सरथाश्वनरद्विपम् (भा० द्रोण० १४७।५२) । दानप्रवृत्तेरनुपारतानाम् (रघु० १६।३) । **अनुवृत्तधनोत्सर्गाणाम् इत्यर्थः** ।

—रुद् (रुदिर् अश्रुविमोचने)। निशातुषारैर्नयनाम्बुकल्पैः उपारुरोदेव नदत्पतङ्गः (शिशु० )। उपारुरोद=अल्पाश्रुमोचनं कृतवान्। उपारुरोदेव नदत्पतङ्गः कुमुद्वतीं तीरतरुर्दिनादौ (भट्टि० २।४)। उपारुरोद विललाप परिदेवयाञ्चक्रे, अनुशुशोच।

—लक्ष् (शम लक्ष आलोचने)। अध्रुवा सर्वमर्त्येषु श्रीरुपालक्ष्यते भृशम् (भा० शल्य० ६५।२०)। उपालक्ष्यते लक्ष्यते। नार्थ उपाङ्भ्याम्।

—लभ् (डुलभष् प्राप्तौ)। तं यदि स्वरेषूपालभेत (छां० उ० ४।२२)। स्वरस्त्वया दुष्प्रयुक्त इति दूषणं दद्यात्। अपराधेषु चैनं सततमुपालभेत (आप० ध० १।८।२६)। इदमयुक्तं त्वया कृतमिति शिष्यं दोषिणं दर्शयेत्। पयोधरविस्तारयितृकमात्मनो यौवनमुपालभस्व (शा० १)। उपालभस्व अपराद्धं विजानीहि, दोषेण गच्छेत्यर्थः। केचिदस्मदुपालम्भे मतिं चक्रुर्हि तापसाः (भा० उ० १७६।२)। उपालम्भे दोषदाने। यत्तु सम्यगुपक्रान्तं कार्यमेति विपर्ययम्। पुमांस्तत्रानुपालम्भ्यो दैवान्तरितपौरुषः (का० नी० सा० १२।१६)॥ अनुपालम्भ्यो न दोषेण गन्तव्यः, नापराद्धो मन्तव्यः। सौर्यः पशुरुपालम्भ्यः सवनीयस्य (शां० श्रौ० ११।१३।८)। उपालम्भ्योतिरिक्त आलभ्यः। पाणिनीयास्तु प्रशंसायां गम्यमानायां नुममिच्छन्ति।

—वह् (वह प्रापणे)। आ च वहासि ताँ इह देवाँ उप प्रशस्तये (ऋ० १।७४।६)। उपावहासि समीपं प्रापय। अग्ने पत्नीरिहा वह देवानामुशतीरुप (ऋ० १।२२।६)। उपावह समीपमानय, उपानय।

—विश् (विश प्रवेशने)। प्रीतिश्च मनुजव्याघ्र दुर्योधनमुपाविशत् (भा० आदि० १३६।११)। उपाविशत् आविशत्, व्याश्नुत।

—वी (वी गतिव्याप्तिप्रजनकान्त्यसनखादनेषु)। आ नो देवानामुप वेतु शंसः (ऋ० १०।३१।१)। उपावेतु उपागच्छतु। शंसः स्तोतव्यः (इन्द्रः)।

—वृत् (वृतु वर्तने)। यतरान्वै न इयमुपावर्त्स्यति ते भविष्यन्ति परेतरे (=परा इतरे) (श० ब्रा० १।४।१।३४)। अस्मानुपैष्यति, अस्मासु सन्निधास्यत इति उपावर्त्स्यतीत्यनेनाह। ते देवा अब्रुवन्नुप न आवर्तस्व हव्यं नो वहेति (तै० सं० ५।४।६।४३)। उपावर्तस्व समीपमेहि, सन्निधत्स्व। सेडामनुमुपावर्तत (तै० सं० १।७।१)। नृत्तं गीतमुपाववर्त (श० ब्रा० ३।२।४।

६) । **नर्तनान्गायनांश्चोपेयायेत्याह** । देवान्वा एष उपावर्तते यो दीक्षते (श० ब्रा० ३।१।१।१० ) । **देवानुपैति, देवतासान्निध्यमधिगच्छतीत्यर्थः** । अथ स्तीर्णां वेदिमुपावर्तते (श० ब्रा० १।३।४।१०) । **वेद्याः समीपमावर्तत इत्यर्थः** । पुनरेवैनं वामं वसूपावर्तते ( तै० ब्रा० १।१।२।२ ) । **उपावर्तते प्रतिनिवर्तते** । यदुपावर्तते सोऽवभृथः (आप० ध० २।७।१०) । **(अतिथिम्) अनुव्रज्य प्रत्यावर्तनमुपावर्तनमित्युज्ज्वला** । तमेव चिन्तयन्नर्थमुपावर्तत वै मुनिः (रा० १।२।१६) । **उपावर्तत न्यवर्तत** । यावदहमाश्रमवासिनः प्रत्यवेक्ष्योपावर्ते तावदार्द्रपृष्ठाः क्रियन्तां वाजिनः (शा० १) । **उक्तोऽर्थः** । समाहितचित्तस्य प्रज्ञाविवेक उपावर्तते (यो० सू० १।२० भा०) । **उपावर्तते जायते** । भूतिमेवोपावर्तते ( तै० ब्रा० ३।८।३।३ ) । **ऐश्वर्यमेव प्राप्नोतीत्याह** । रात्रिं कथं चिदेवेमां सौमित्रे वर्तयामहे । उपावर्तामहे भूमावास्तीर्य स्वयमार्जितैः (रा० २।६३।४)॥ **उपावर्तामहे लोठिष्यामः, शयिष्यामहे** । दग्धौ दग्धौ पुनः पादावुपावर्तयतानघ ( भा० शल्य० ४८।२३ ) । **उपावर्तयत समीपमानयत्** । तांश्चाहं विक्रीय च्छगलिका विंशतिमात्रा उपावर्तयिष्यामि (तन्त्रा० ५।१) । **उपावर्तयिष्यामि आत्मसमीपं प्रापयिष्यामि** । तं चेदस्मिन्नन्ते मानसः शारीरो वा व्याधिः कश्चित्तीव्रतरः सहसाभ्यागच्छेत् तमेव तावदस्योपावर्तयितुं यतेत (चरक० सूत्र० १५।८) । **उपावर्तयितुं निवर्तयितुं शमयितुम्** । सन्ध्याकाल उपावृत्ते मुहूर्ते चातिदारुणे (भा० उ० १०।३४) । **उपावृत्ते उपस्थिते** । अथ भैक्षचर्यादुपावृत्तः (बौ० ध० २।१०।१८।७) । **उपावृत्तः प्रत्यावृत्तः** । उपावृत्तेषु पार्थेषु सर्वास्वेव वधूषु च (भा० आश्रम० १८।१२) । **उपावृत्तेषु निवृत्तेषु** । सेयं रत्नसमाकीर्णा मही सवनपर्वता । उपावृत्ता महाराज त्वामद्य निहतद्विषम् ( भा० शल्य० ६०।४६ ) ॥ **उपावृत्ता प्रतिनिवृत्ता । उपागता** । प्रवासादुपावृत्तेन काश्यपेन ( शा० ४ ) । **उक्तोऽर्थः** । स तं पुरोहितमुपादायोपावृत्तः (भा० आदि० ३।२०) । **(स्वदेशं) प्रत्यावृत्तः । त्रिषूपावृत्तलुठितौ परावृत्ते मुहुर्भुवि** (अमरः) । उपावृत्तमदः (नागः) क्षिप्रमभ्यवर्तत वेगिनः ( ) । **उपावृत्तमदः —जातमदः** । उपावृत्योत्थितां दीनां वडवामिव वाहिताम् (रा० २।२०।३४) । **उपावृत्य परावृत्य, लुठित्वा** । अथ जिष्णुरुपावृत्य क्षुरधारेण कार्मुकम् । चकर्त भीष्मस्य (भा० वि० ६४।२७) । **उपावृत्य समीपमेत्य** । उपावर्त्य यथान्यायं (हयान्) (भा० द्रोण० १००।१५) । **उपावर्त्य परिलोठ्य, आवर्त्य** । तिष्ठतात्रैव सन्तुष्टा नोपावर्तितुमर्हथ ( रा० ३।२०।१० ) । **उपावर्तितुमुपसर्प्तुम् ( उपसृप्तुम् ) । उपावर्तितुं पलायितुमिति तु कतकः । तद् वितथम्** । उत्तरार्धे यदि प्राणैरिहार्थो वो निवर्तध्वं निशाचराः इति श्रवणात् । कतकव्याख्याने पूर्वा **निषेधोक्तिरुत्तरया प्रकृतोक्त्या व्याहन्येत** ।

सहस्रं त उपावृतः (अथर्व० ६।७७।३)। **उपावृतः समीपदेशप्राप्त्युपाया इति सायणः।** करभोरु करोति मारुतस्त्वदुपावर्तनशङ्कि मे मनः (रघु० ८।५३)। **पुनरागमन उज्जीवने मे मनः शङ्कां करोतीत्युक्तं भवति।**

—**व्यध् (व्यध ताडने)।** तस्य न कुतश्चनोपाव्याधो भवति (तै० ब्रा० १।७।७)। **उपाव्याधो बाधः।**

—**शंस् (आङः शसि इच्छायाम्)।** तत्कुलीनोपाशंसुः (कौ० अ० १।१४।३)। **उपाशंसुः कामुकः, उपाश्रित इत्यर्थः।** श्व उपाशंसनीयः कालः (नि० १।६।१)। **उपाशंसनीयः=आशासितव्यः, आशंसायोग्यः, एषणीयः।**

—**श्रि (श्रिञ् सेवायाम्)।** पौरजानपदान्सर्वान्संश्रितोपाश्रितांस्तथा (भा० शां० ८७।२४)। **उपाश्रिता व्यवहिताः सन्तः श्रिताः। संश्रिता अनन्तराः सन्तः श्रिताः।** महत्सोपाश्रयं भेजे रावणः परमासनम् (रा० ६।११।१७)। **उपाश्रयः प्रतिश्रय उपधानम्।** विषादयन्ति नात्मानं सत्त्वोपाश्रयिणो नराः (भा० वन० ७९।१४)। **सत्त्वोपाश्रयिणः सत्त्वं धैर्यं तदुपाश्रयन्ते श्रयन्ते इत्येवंशीलाः।**

—**सञ्ज् (षञ्ज सङ्गे)।** चेकितान उपासङ्गं धनुः काश्य उपाहरत् (भा० सभा० ५३।६)। **उपासङ्गो निषङ्गः, तूणीरः। उपाहरत् प्राभृतकमिति दत्तवान्। उपासङ्गो हयगजवाह्यस्तूण इति** (भा० उ० १५५।३) **इत्यत्र नीलकण्ठः।** सोपायः सोपनिषदः सोपासङ्गः सनिश्चयः (भा० शां० ३२०।६३)। **उपासङ्गः=ध्यानाङ्गानि यमादीनि।** उपासङ्गानाचरद् दक्षिणेन वराङ्गानां नकुलश्चित्रयोधी (भा० उ० ४८।२४)। **वराङ्गानां शिरसामुपासङ्गान् उच्चयान्।**

—**सद् (षद्लृ विशरणगत्यवसादनेषु, आङः षद पद्यर्थे)।** भीमसेनमुपासेदुः प्रवणादिव कुञ्जरम् (भा० शल्य० २६।६)। **उपासेदुः संशिश्रियुः।** पितामहमुपासेदुः पर्वते गन्धमादने (भा० भीष्म० ६५।४२)। **उपासेदुः= उपासाञ्चक्रिरे।** का पूर्वाहुतिः किमुपासीषदः (श० ब्रा० ११।५।३।३)। **किं न्यधा इत्यर्थः।**

—**सिध् (षिध गत्याम्)।** वार्धक्षत्रिरुपासेधत् प्रवणादिव कुञ्जरः (भा० द्रोण० ४२।८)। **उपासेधत् अवारयत्। प्रवणात् प्रवणं निम्नदेशः, तं प्राप्य। वार्धक्षत्रिर्जयद्रथः।**

—**हन् (हन हिंसागत्योः)।** दक्षिणानुरूनुपाघ्नाना एतेनैव मन्त्रेण (श० ब्रा० २।६।२।१५)। **उपाघ्नाना आघ्नन्तः प्रहरन्तः, ताडयन्तः।**

—हि (हि गतौ वृद्धौ च)। पुरं दिदृक्षुभि र्जानपदैरुपाहितैः (रा० २।६।२८)। उपाहितैः समेतैः।

—हृ (हृञ् हरणे)। आज्ञापयतु भवान् किं ते प्रियमुपहरामि गुर्वर्थम् (भा० आदि० ३।९३)। उपहरामि ददामि प्रदिशामि। ते यज्ञसेनं द्रुपदं गृहीत्वा रणमूर्धनि। उपाजह्रुः सहामात्यं द्रोणाय भरतर्षभ (भा० १३८।९३)॥ उपाजह्रुः=उपजह्रुः=उपनिन्युः। अहः कस्मादुपाहरन्त्यस्मिन्कर्माणि (नि० २।२०।३)। उपाहरन्ति=अनुतिष्ठन्ति। नष्टं नष्टमुपेक्षस्व प्राप्तं प्राप्तमुपाहर (यो० वा० ४।४६।७)। उपाहर उपभुङ्क्ष्व, परिगृहाण। पाण्डवानां च वासांसि द्रौपद्याश्चाप्युपाहर (भा० सभा० ६८।३८)। आच्छिद्य (अवरोप्य) आत्मसमीपं प्रापयेत्यर्थः। गाण्डीवमुक्तै विशिखैरुपाहरे (भा० पु० १।७।१६)। उपाहरे=अपहरे छिनद्मि, कृन्तामि। उभावप्युपाङ्गावस्थाने। ब्राह्मणस्य प्रतिश्रुत्य न मया तदुपाहृतम् (भा० अनु० ६।१२)। उपाहृतमुपहृतं प्रत्तम्। दुर्बलस्य तु कुतः प्रज्ञा पुरस्तादनुपाहृता (भा० शां० १४२।७)। अनुपाहृता ऽनुपात्ता ऽनुपयुक्ता ऽशिक्षिता। स्त्रीचापलादेतदुपाहृतं मे (=मया) धर्मं च वक्तुं तव कः समर्थः (रा० ३।९।३३)॥ उपाहृतं व्याहृतम्। उक्तम्। उपाहृतं तद्वचनं सुदारुणम् (रा० ३।५९।२७)। उक्तोऽर्थः। उपाहृतमनुबुद्धं निखातं वैरम् (अथर्व० १०।१।१९)। उपाहृतं व्यवहृतम्, क्रियया निर्वृत्तम्।

—ह्वे (ह्वेञ् स्पर्धायां शब्दे च)। न भयान्न च कार्पण्यान्न लोभात्त्वामुपाह्वये (भा० शां० १५१।१७)। उपाह्वये शिष्यं करोमि।

## उपोद् (उप+उद्)

—इ (इण गतौ)। ताभिर् (मेनिभिः) ज्वलन्तीभिर्दीप्यमानाभिरुपोदेति राजानम् (ऐ० ब्रा० ८।२४)। उपोदेति समीपे प्राप्नोति (पुरोहितः)।

—क्रम् (क्रमु पादविक्षेपे)। त एतस्माच्चात्वालादूर्ध्वाः स्वर्गं लोकमुपोदक्रामन् (श० ब्रा० ४।२।५।५)। उपोदक्रामन् उत्थायोर्ध्वं गत्वा प्रापन्नित्यर्थः। ऊर्ध्वा इत्यनेन गतार्थत्वेप्युच्छब्दप्रयोग ऋषीणामुपसर्गप्रियत्वं व्यनक्ति।

—ग्रह् (ग्रह उपादाने)। तान् (चमसान्) यत्रोपोद्गृह्णीयुः (ऐ० ब्रा० ७।३३)। भक्षणार्थमूर्ध्वं धारयेयुरित्यर्थः। तस्या ह मुखमुपोद्गृह्णन्नुवाच (छां० उ० ४।२।४)। उपोद्गृह्णन् उन्नमयन्। अवसिक्तायाः सव्येन पाणिनाञ्जलिमुपोद्गृह्य (गो० गृ० २।२।१६)। समीपे मणिबन्धप्रदेश उत्तानं गृहीत्वेत्युक्तं भवति।

**—सद्** (षद्लृ विशरणगत्यवसादनेषु)। धीरो ह शातपर्णेयः। महाशालं जावालमुपोत्ससाद (श० ब्रा० १०।३।३।१)। उपोत्ससाद उत्थाय उच्चल्य उपेयाय।

**—सिच्** (षिच क्षरणे)। व्रतमुपोत्सिञ्चन् व्रतं प्रमीणाति (श० ब्रा० ३।२।२।१९)। व्रतान्तभोजनं बाह्यवस्तुना संमिश्रयन्।

**—स्था** (ष्ठा गतिनिवृत्तौ)। त्वा द्वाभ्यां प्रश्नाभ्यामुपोदस्थाम् (श० ब्रा० १४।६।८।२)। उपोदस्थाम्=समीपे ऽभिमुखे स्थितोस्मि। उत्तिष्ठ ब्रह्मणस्पत इत्युच्यमान उपोत्तिष्टति (का० श्रौ० २६।५।१०)। गोसमीपादुत्तिष्ठत्यध्वर्युरित्याह। जयामो वा असुरांस्ततस्त्वेव नः पुनरुपोत्तिष्ठन्ति (श० ब्रा० १।२।४।१६)। अस्मानुद्दिश्य उत्तिष्ठन्तीत्याह। अथ यदि क्रयायोपोत्थितः (सोमः) किञ्चिदापद्येत (श० ब्रा० १२।६।१।१६)। उपोत्थित उपस्थितः। नार्थ उदा। हुत्वोपोत्तिष्ठतः। अनुपृष्ठं पतिः परिक्रम्य दक्षिणत उदङ्मुखोऽवतिष्ठते वध्वञ्जलिं गृहीत्वा (गो० गृ० २।२।१-४)।

**—हन्** (हन हिंसागत्योः)। अधुना विश्वान् देवानधिकृत्य तद्गतमेवाधियज्ञे किंचिद्विचारयिष्यन्नुपोद्घन्ति (नि० १२।४०।२ इत्यत्र दुर्गः)। उपोद्घन्ति प्रस्तौति, भूमिकां रचयति। चिन्तां प्रकृतसिद्ध्यर्थामुपोद्घातं प्रचक्षते इति हलायुधः। उपोद्घात उदाहार इत्यमरः। उप समीप उद्धननं ज्ञापनं वक्ष्यमाणोपयोग्यर्थवर्णनस्येति स्वामी। एवं स्तुत्या देवमभिमुखीकृत्यागमनप्रयोजनं वक्तुमुपोद्घातयति (शिशु० १।४०)। इत्यत्र मल्लिः। उपोद्घातं रचयति प्रस्तावनां प्रणयतीत्यर्थः।

## उपोदाङ् (उप+उद्+आङ्)

**—सृप्** (सृप्लृ गतौ)। तेषां ह स्म मध्यन्दिने मध्यन्दिन एवोपोदासर्पत् (ऐ० ब्रा० ६।१)। समीपम् उत्सुकः सन्नगच्छदिति सायणः।

## उपोप (उप+उप)

**—विश्** (विश प्रवेशने)। सोऽधस्ताच्छकटस्य पामानं कषमाणमुपोपविवेश (छां० उ० ४।१।८)। उपोपविवेश=उपेत्यासामास। उपोपविष्टं सचिवैर्मरुद्भिरिव वासवम् (रा० ३।३२।४)। उपोपविष्टमुपासीनम्। उपोपविष्टा मञ्चेषु द्रष्टुकामाः स्वयंवरम् (भा० आदि० १८५।१५)। उपविष्टा इत्येवार्थः। तेनैकस्योपशब्दस्यानर्थकत्वप्रसङ्गः। तत्र प्रसमुपोदः पाद-

पूरणे (पा० ८।१।६) इति पाणिनीयं शासनं समाधिमुदाहरति **नीलकण्ठः**। **वृत्तिकारस्य** तु नायमभिमतः। तथा ह्याह—**सामर्थ्याच्छन्दस्येवैतद्विधानम्। लोके ह्यनर्थकं तत्स्यात्प्रयोगाभावादिति**। छन्दोवत् कवयः कुर्वन्तीति वा तदभ्यनुज्ञातं स्यात्।

## उपनि (उप+नि)

—**अस्** (**असु क्षेपे**)। स तु तत्र विशेषदुर्लभः सदुपन्यस्यति कृत्यवर्त्म यः (कि० २।३)। **उपन्यस्यति उदाहरति**। भूतमप्यनुपन्यस्तं हीयते व्यवहारतः (याज्ञ० २।१९)। **अनुपन्यस्तमनभिहितमर्थिप्रत्यर्थिभ्याम्। भूतं सत्यं तथ्यम्**। इत्युभयलोकविरुद्धं वचनमुपन्यस्तम् (मालती०)। **उक्तोऽर्थः**। अद्यापि गृध्रेण महामन्त्रिणा सन्धातुमुपन्यस्तम् (हितोप०)। **सन्धीयतामिति सन्दिष्टम्**। उपन्यस्तम् (भा० शल्य० ५७।१६)। **उपेत्यायुधप्रक्षेप इत्यर्थः**। उपन्यस्तस्य शिष्यस्य विश्वरतस्य च गौरवे (पञ्चरा० १।३२)। **उपन्यस्तस्य कृतात्मसमर्पणस्य, अत्यन्तं परतन्त्रस्येति यावत्**। उपन्यस्तमपन्यस्तं युद्धमार्गविशारदौ। तौ विचेरतुरन्योन्यं वानरेन्द्रश्च रावणः (रा० ६।४०।२६)॥ **उपन्यस्तं परेण स्वबाह्वोरग्रहाय स्वोरःसमीपस्थानम्। अपन्यस्तं प्रतिभटबाहुग्रहणार्थं स्वबाहुप्रसारणम् इति तिलकः**। उपन्यस्ते च यल्लब्धं विद्यया पणपूर्वकम् (मनु० ९।२०६ इत्यत्रकुल्लूकोद्धृता कात्यायनस्मृतिः)। उपन्यस्य महातेजा विप्रेभ्यः पाण्डवास्तदा (भा० वन० १५८।२८)। **उपन्यस्य निवेद्य समर्प्य, न्यासं कृत्वा**। दीप्यमानं ततो वह्निं पुष्पैः सत्कृत्य सत्कृतम्। तत्रोपन्यस्य च प्रीतस्तयोर्मध्ये समेधितम् (रा० ४।४।१७)॥ **उपन्यस्य इध्मान्यधिकान्याधाय**। **उपन्यासस्तु वाङ्मुखम्** इत्यमरः। **वाङ्मुखमुपक्रम उपोद्घातः**। निर्यातः शनकैरलीकवचनोपन्यासमालीजनः (अमरु० २७)। **उपन्यासः कथनम्**। निर्भेदादृतेऽप्ययमुपन्यासो मालविकायां शङ्कयति (माल०)। **उपन्यासः कीर्तनम्**। आत्मन उपन्यासपूर्वम् (शा० ३)। **स्वप्रत्यवमर्शपुरःसरम्**। विषम उपन्यासः (व्या० महाभा० असकृत् पठितम्)। **उपन्यासो दृष्टान्तः**। पुत्रं प्रत्युदितं सद्भिः पूर्वजैश्च महर्षिभिः। विश्वजन्यमिमं पुण्यमुपन्यासं निबोधत (मनु० ९।३१)॥ **उपन्यासं (वक्ष्यमाणं) विचारम्**। अहमिदानीं विषमारम्भं परस्योपन्यासं पराक्रमेण समी करोमि (प्रतिज्ञा० १)। **उपन्यासः प्रयोगः। कपटप्रबन्धः**। ब्राह्मेण जैमिनिरुपन्यासादिभ्यः (ब्र० सू० ४।४।५)। **इहोपन्यासो ऽज्ञातज्ञापनम्**। भव्यामेकार्थसिद्धिं तु समुद्दिश्य क्रियेत यः। स उपन्यासकुशलैरुपन्यास उदाहृतः (का० नी० सा० ९।१०)॥ **उपन्यासो नाम सन्धिरिह लक्षितः**।

**— क्षिप् (क्षिप प्रेरणे)**। पाणिभ्यां तूपसंगृह्य स्वयमन्नस्य वर्धितम्। विप्रान्तिके पितॄन् ध्यायञ्शनकैरुपनिक्षिपेत् ( मनु० ३।२२४ ) ॥ **उपनिक्षिपेत् समीपे नीचै र्निदध्यात्**। अलमुपहतासु स्त्रीबुद्धिषु स्वमार्जवमुपनिक्षेप्तुम् (प्रतिमा० १)। **उपनिक्षेप्तुमध्यारोपयितुम्**।

**— गम् ( गम्लृ गतौ )**। परोक्षमिवैष ब्रह्मणो रूपमुपनिगच्छति यत् क्षत्रियः (ऐ० ब्रा० ७।३१)। **उपनिगच्छति अधिगच्छति**। शश्वच्छान्तिं नि गच्छति इति गीतासु ( ६।३१ ) **श्रवणादुपमन्तरेणापि प्राप्त्यर्थो गम्यत एवेति शब्दोपजनो नार्थोपजनः**।

**—ग्रह् (ग्रह उपादाने)**। नानावीर्या अङ्गुलयः, सर्वास्वङ्गुष्ठमुपनिगृह्णाति (तै० सं० ६।१।६।६३)। **समीपे नियमेन प्रापयतीत्याह**। उपैव यजमानं निगृह्णीत योऽस्य प्रियः स्यात् (ऐ० ब्रा० ३।१६)। **उदितचर एवार्थः**।

**—धा (डुधाञ् धारणपोषणयोः)**। वेदौ परिधींश्च शकलांश्चोपनिदधाति (श० ब्रा० २।५।३।५)। **समीपे निदधाति**। यथा यस्मा अशनमाहरेत् तस्मा आहृत्यैवोपनिदध्यादेवं तत् (श० ब्रा० २।३।१।१७)। **उपनिदध्यात् पात्रं नीचैः समीपे दध्यात्**। भयमुपनिदधे स राक्षसानाम् (भट्टि० ४।४५)। **उपनिदधे जनयामास आहारयामास**। शत्रुस्तस्य तं विसप्रत्यंशमुपनिदधे ( अवदा० जा० १६)। **उपनिदधेऽन्तर्दधे, अन्तर्हितं चकार। स्थाने वश्यवाचः कवेरार्यशूरस्यो-पसर्गद्वयप्रयोगः। उपनिधि ह्यात्मसमीपे प्रच्छाद्य रक्ष्यते, तत्साधर्म्याद्वस्त्वन्तर-प्रच्छादनमात्रमप्युपनिपूर्वेण दधातिनोच्यत इति सामञ्जस्यम्**। ये म इम ( कुल्माषाः ) उपनिहिता इति (छां० उ० १।१०।२)। **उपनिहिताः समीपे स्थिताः**। उद्दिष्टामुपनिहितां भजस्व पूजाम् (मालती०)। **उपनिहितां निवेदितां पुरः स्थापिताम्**। ब्राह्मणो दृष्ट्वा पूर्वोपनिहितं निधिम् (मनु० ८।३७)। **उपनिहितं निक्षिप्तं न्यस्तम्**। निक्षिप्तस्य धनस्यैवं प्रीत्योपनिहितस्य च (मनु० ८।१९६)। **प्रीत्या कञ्चित्कालमुपभोगार्थमर्पितस्येति कुल्लूकः**। कर्णयोरुपनि-धाय (मुखम्) (आश्व० गृ० १।१५)। **उपनिधाय समीपे निधाय**। तत्समा-हृत्योप निधायाचार्य्याय प्रब्रूयात् (आप० ध० १।३।३१)। **उक्तोऽर्थः**। वहति मलयसमीरे मदनमुपनिधाय (गीत० ५।२)। **उपनिधाय उपानीय**। देवा वा असुरान् युधमुपप्रयन्तो ऽब्रुवन् यन्नो वामं वसु तदुपनिधाय युध्यामहै (जै० ब्रा० १।१३८)। **उपनिधाय क्वचिद् विश्वास्ये निक्षिप्य न्यस्य**। यथान्यस्मा उपनिधायाऽन्यस्मै प्रयच्छति (तै० ब्रा० २।१।३।६)। **उपनिधाय संकल्प्य**।

**पुमानुपनिधिर्न्यास इत्यमरः । उपमितो निधिनेति विग्रहः ।** असङ्ख्यातमविज्ञातं समुद्रं यन्निधीयते । तज्जानीयादुपनिधिं निक्षेपं गणितं विदुः (याज्ञ० २।६५ मिताक्षरायां नारदवचनम्) ।। **निगदव्याख्यातम् ।** पूषा भागदुघोऽशनं पाणिभ्यामुपनिधाता (श० ब्रा० १।१।२।१७) । **उपनिधाता विभक्ता विभाजकः, संविभागस्य कर्ता ।**

**—नी** (णीञ् प्रापणे) । अथाप उपनिनयति (श० ब्रा० ३।३।१।७) । **उपनिनयति अवसिञ्चति ।** अथ हैके । उदपात्रमुपनिनयन्ति (श० ब्रा० ३।३।४।३१) । **उपनिनयन्ति आवर्जयन्ति ।** ताभिर् (प्रोक्षणीभि:) ओषधीनां मूलान्युपनिनयति (श० ब्रा० १।३।३।४) । **मूलेष्वपः प्रसिञ्चति, तेषामुपरि वारिधारां मुञ्चतीत्यर्थः ।**

**—पत्** (पत्लृ गतौ) । अथ यत्र द्वे विरुद्धे तुल्यबले प्रमाणे उपनिपततः··· तत्र किं कर्तव्यम् (गौ० ध० १।१।५ उज्ज्वलायां हरदत्तः) । **उपनिपततः = युगपत् प्राप्नुतः, उपतिष्ठेते, प्रसज्येते ।** तत्तु सप्तविधे व्याधावुपनिपतति (सुश्रुत० १।८९।६) । **उपनिपतति अन्तः पतति, अन्तर्भवति, समाविशति ।** तं हंस उपनिपत्याभ्युवाद (छां० उ० ४।७।२) । **उपनिपत्य = अवडयनेनोपेत्य ।** एवमेव देवदत्तस्य तत्रागमनं दस्यूनां चोपनिपातः (पा० ५।३।१०५ सूत्रे वृत्तौ) । **उपनिपातः सहसा उपस्थितिः ।**

**—पद्** (पद गतौ) । नारी निपद्यत उप त्वा मर्त्य प्रेतम् (ऋ० १।१५२।४) । **उपनिपद्यत उपशेते ।** महिषीमश्वायोपनिपादयन्ति (श० ब्रा० १३।५।२।२) । **उपनिपादयन्ति समीपे शाययन्ति ।** पश्यामसि नोपनिपद्यमानम् (ऋ० १।१५२।४) । **उपनिपद्यमानं निषीदन्तम्** (आदित्यम्) । **अयमेवार्थो मन्त्रादौ प्रयन्तमित इति विशेषणश्रवणात् ।**

**—प्लु** (प्लुङ् गतौ) । ये चैव ग्राम्याः पशवो ये चारण्या अणिमानमेव तत् पशुषिमाणं नियन्ति दीक्षारूपमेव तदुपनिप्लवन्ते (ऐ० ब्रा० ४।२६) । **दीक्षारूपमुपेत्य नितरां सञ्चरन्तीत्यर्थः ।**

**—बन्ध्** (बन्ध बन्धने) । विषयस्यानुपादानाद् विषय्युपनिबध्यते । यत्र सातिशयोक्तिः स्यात् (प्रतापरुद्रीय०) । **उपनिबध्यते वर्ण्यते ।** कात्यायनोपनिबद्धा भ्राजा नाम श्लोकाः (भा० कैयटः) । **उपनिबद्धाः प्रणीताः, रचिताः, ग्रथिताः ।**

—**मन्त्र् (मत्रि गुप्तपरिभाषणे)**। अभिप्रेतप्रदानेन तपस्विजन उपनिमन्त्र्यताम् (स्वप्न० १)। **उपनिमन्त्र्यताम् आकार्यताम्। प्रायेणात्रार्थ उपशब्दो न दीयते।** वरप्रदानेन बोधिसत्त्वमुपनिमन्त्रयामास (अवदा० जा० ७)। **उपनिमन्त्रयामास उपच्छन्दयामास। स्थाने ऽत्रोपशब्दः।** राजन्योपनिमन्त्रणाय रसति स्फीतं यशोदुन्दुभिः (वेणी० १।२५)। **उपनिमन्त्रणाय=आह्वानाय।**

—**म्रेड् (म्रेडृ उन्मादे)**। अभ्याशो ह यदेनं साधवो घोषा आ च गच्छेयुरुप च निम्रेडेरन् (छां० उ० ३।१९।४)। **सङ्गत्य च सुखयेयुरित्यर्थः।**

—**विश् (विश प्रवेशने)**। लङ्कामुपनिविष्टे च रामे (रा० ६।१६।२६)। **उपनिविष्टे लङ्कां परितः कृतसैन्यनिवेशे। कृतरोध इति यावत्।** इत्येतानि महाराज सप्त वर्षाणि भागशः। भूतान्युपनिविष्टानि गतिमन्ति ध्रुवाणि च (भा० भीष्म० ६।५३)॥ स्वर्गाभिष्यन्दवमनं कृत्वेवोपनिवेशितम् (कु० ६।३७)। **उपनिवेशितम्=वासितम्।**

—**वृत् (वृतु वर्तने)**। येन सूक्तेन निविदमतिपद्येत न तत् पुनरुपनिवर्तेत (ऐ० ब्रा० ३।११)। **उपनिवर्तेत=आवर्तयेत। वृतिरिहान्तर्णीतण्यर्थः।** स चेन्नोपनिवर्तेत वाच्यो ब्राह्मणसंसदि (भा० शां० ८९।४)। **नावर्ततेत्यर्थः।** उपनिवर्तमिव वै पशव सौयवसे रमन्ते (शां० ब्रा० ११।५)।

—**श्रि (श्रिञ् सेवायाम्)**। तस्माद् गावः सुवाससमुपैव निश्रयन्ते (श० ब्रा० ३।१।२।१७)। **उपनिश्रयन्त उपसर्पन्ति।** यद्यपि राजा परमतां गच्छति ब्रह्मैवान्तत उपनिश्रयति (श० ब्रा० १४।४।२।२३)। **उपनिश्रयति संश्रयति।**

—**सद् (षद्लृ विशरणगत्यवसादनेषु)**। भद्रमिच्छन्त ऋषयः स्वर्विदस्तपोदीक्षामुपनिषेदुरग्रे (अथर्व० १९।४१।१)। **उपनिषेदुरुपासाञ्चक्रिरे।** इत्युपनिषद्वर्णो भवति (नि० ३।१२।१)। **यद्विज्ञानमुपागतस्य सतो गर्भजन्मजरामृत्यवो निश्चयेन सीदन्ति** (विशीर्यन्ते क्षीयन्ते) **सा रहस्यविद्या उपनिषद् इत्युच्यत इति तत्र दुर्गः।** क्षत्राय तद्विशमध्यस्तादुपनिषादिनीं करोति (श० ब्रा० ६।४।३।२)। **उपनिषादिनी चरणयोः समीपेऽध उपवेशिनी।**

**उपन्याङ् (उप+नि+आङ्)**

—**चर् (चर गतिभक्षणयोः)**। मैत्रेण यजुषोपन्याचरति (श० ब्रा० ६।५।४।१०)। (अग्निम्) **उपन्याचरति अग्नावेधः प्रक्षिपति।**

—प्लु (प्लुङ् गतौ)। तं स मत्स्य उपन्यापुप्लुवे (श० ब्रा० १।८।१।५)। प्लवमानस्तरंस्तस्य सामीप्यमापेत्यर्थः।

## उपनिस् (उप+निस्)

—कॄ (कॄ विक्षेपे)। घण्टापथः संसरणं तत्पुरस्योपनिष्करम् इत्यमरः। उपनिष्कीर्यंते सैन्यमत्रेति स्वामी।

—क्रम् (क्रमु पादविक्षेपे)। आज्यं गृहीत्वोपनिष्क्रामति (श० ब्रा० ३।५।३।१३)। उपनिष्क्रामति=निष्क्रामति=निर्याति। आश्रमादुपनिष्क्रान्तमृषिमुत्तमतेजसम् (रा० २।९२।४)। आश्रमाददूरनिष्क्रान्तमित्याह। आश्रमान्निर्गत्यादूरे वर्तमानम्। उपनिष्क्रम्य नगरात्प्रत्यगृह्णात्परन्तप (भा० सभा० २९।१२)। उक्तोऽर्थः।

## उपपरि (उप+परि)

—ईक्ष् (ईक्ष दर्शने)। सैषा देवतोपपरीक्षा (नि० ७।१)। उपगम्योपगम्य परीक्षोपपरीक्षा। तद्येऽनादिष्टदेवता मन्त्रास्तेषु देवतोपपरीक्षा (नि० ७।४।१)। उपपत्तितः परीक्षोपपरीक्षा।

## उपपर्याङ् (उप+परि+आङ्)

—वृत् (वृतु वर्तने)। त्वा भूतान्युपपर्यावर्तन्ते (तै० आ० २।१९।१)। उपपर्यावर्तन्ते उपेत्य परित आसते। संश्रयन्ते।

## उपप्र (उप+प्र)

—अय् (अय गतौ)। एताभिर्देवताभिः सयुग्भूत्वा मरुद्भिर्विशाऽग्निनाऽनीकेनोपप्लायत (मैत्रा० सं०)। उपप्लायत=उपैत्।

—इ (इण् गतौ)। उप प्रागात्सुमन्मे ऽधायि मन्म (ऋ० १।१६२।७)। इति मन्त्रं निर्ब्रुवाणो यास्क आह (नि० ६।२२।३)—उपप्रैतु मां स्वयं यन्मे मनोऽध्यायि यज्ञेनेति। उपप्रैतु प्राप्नोतु। देवाँ उपप्रैत् सप्तभिः (ऋ० १०।७२।८)। उपप्रैत् उपागात्। उप प्रागाच्छसनं वाज्यर्वा (ऋ० १।१६३।१२)। शसनं विशसनस्थानमुपैतीत्याह। उप देवान् दैवीर्विशः प्रागुः (वा० सं० ६।७)। उक्तोऽर्थः। देवा वा असुरैर्युद्धमुपप्रायन् विजयाय (ऐ० ब्रा०

३।३६) । उपप्रायन् प्रारभन्त । उपप्रयन्तो अध्वरं मन्त्रं वोचेमाग्नये (ऋ० १।७४।१)। उपप्रयन्तः प्रारभमाणाः। उदीराणा यज्ञमुपप्रयन्तः (ऋ० ४। ३६।५) । उक्तोऽर्थः ।

—इष् (इष गतौ) । यदध्वर्युर्होतारमुप प्रेष्यति (ऐ० ब्रा० ६।५) । उपप्रेष्यति=उपेहीत्याह्वयति । उपप्रैषो निमन्त्रणं भवति तथा चैतरेयके(२।५) प्रयोगः—तद्यन्मैत्रावरुण उपप्रैषे प्रतिपद्यते ।

—ईक्ष् (ईक्ष दर्शने) । किमर्थं मां प्राकृतवद् उपप्रेक्षसि संसदि (भा० आदि० ७४।३५ ) । उपप्रेक्षसि उपेक्षसे । अनर्थकः प्रशब्दः । उपप्रैक्षन्त पञ्चालाः स्मयमानाः सराजकाः (भा० द्रोण० १७७।५) । उक्तोऽर्थः । उप- प्रेक्षसि कस्मात्त्वं धर्मज्ञः सन्नराधिप (भा० शल्य० ६०।२४) । यदनार्यैः पुरा कृष्णां क्लिश्यमानामनागसम् । उप प्रेक्षसि राधेय क्व ते धर्मस्तदा गतः (भा० कर्ण० ९१।८) ।

—तॄ (तॄ प्लवनतरणयोः) । (नावमारोह) तयोपप्रतारय यो वरः प्रति- काम्यः (अथर्व० २।३६।५) । उप प्रतारय समीपे प्रापय । आत्मानमिति शेषः ।

—दा (डुदाञ् दाने) । भेदेनोपप्रदानेन संसृजेदौषधैस्तथा ( भा० शां० १०३।१७) । उपप्रदानेन उत्कोचेन । उपप्रदानं लिप्सूनामेकं ह्याकर्षणौषधम् (कथा० २४।११९) । उक्तोऽर्थः । उपप्रदानैर्मार्जारो हितकृत् प्रार्थ्यतेऽन्यतः (तन्त्रा० १।१।४६) ।

—या (या प्रापणे, प्रापणमिह गतिः) । आदित्यं चरुं संग्राममुपप्रयास्यन् (सत्या० श्रौ० २२।२।२४) । उपप्रयास्यन् जिगमिषुः ।

—युज् ( युजिर् योगे ) । कुमारीशब्दः पुंसाऽसम्प्रयोगमात्रमुपप्रयुक्तो वृद्धादिभिर्वयोविशेषवचनैः समानाधिकरणो भवति ( कुमार्यां वयसि ६।२।९५ सूत्र वृत्तौ) । उपप्रयुक्त उपादाय प्रयुक्तः ।

—लुभ् (लुभ गार्ध्ये) । उच्चावचान्युपप्रलोभनानि (दशकु०) । उपप्रलो- भनानि=गार्ध्योत्पादपुरःसरं स्वं प्रत्याकर्षणानि, विमार्गप्रस्थापनानि ।

—वद् ( वद व्यक्तायां वाचि ) । उप प्र वद मण्डूकि (अथर्व० ४।१५। १४) । इतरैः संभूय प्रब्रूहीत्याह ।

—हि (हि गतौ वृद्धौ च)। अथेमेनं प्र हिणुतात् पितॄँ रुप (अथर्व० १८।२।४)। उप प्रहिणुतात् समीपे प्रेषयेत्याह। तद्ध स्म श्रोत्रियायोप प्रहित्य (जै० ब्रा० २।५५)। उक्तोऽर्थः।

### उपवि (उप+वि)

—ऊह् (ऊह वितर्के)। समोप्पापरं खरं पूर्वस्मिन्नुपव्यूहति (सत्या० श्रौ० २४।६।२)। उपव्यूहति निक्षिपति।

—मुच् (मुच्लृ मोक्षणे)। अश्वै र्वाऽनडुद्भिर्वान्यैरन्यैरश्रान्ततरैरुपविमोकं यान्ति (ऐ० ब्रा० ४।४।५)। उपविमोकम् उप समीपे छायादीनां विमुच्य। तद्यथा दीर्घाध्व उपविमोकं यायात् (ऐ० ब्रा० ६।२३)। उक्तोऽर्थः।

—स्था (ष्ठा गतिनिवृत्तौ)। दिशो वा अस्य (आदित्यस्य) बुध्न्या उपमा (=मानानि) विष्ठास्ता ह्येष उपवितिष्ठते (श० ब्रा० ७।४।१।१४)। उपवितिष्ठते ऽवलम्बते। सकर्मकोऽत्र व्युपाभ्यामुपसृष्टो धातुः।

### उपव्याङ् (उप+वि+आङ्)

—यम् (यम उपरमे)। एतदात्मा देवयजनं यदुपव्यायच्छमानो वा शरीरमधिवसति (गो० ब्रा० पूर्व० २।१३)। उपव्यायच्छमानः स्वीकुर्वन्, उपाददानः।

### उपसम् (उप+सम्)

—अस् (असु क्षेपे)। निघाते सहस्रम् (गौ० ध० ३।५।२१)। अत्राह हरदत्तः—उपसमस्तं वर्षपदमपेक्षत इति। उपसमस्तं समासस्य पूर्वावयवभूतमित्यर्थं इति भाति।

—इ (इण् गतौ)। ते देवतायै देवतामुपसंयन्ति (श० ब्रा० १२।२।३।१२)। उपसंयन्ति उपसंक्रामन्ति। विश्वे वो देवा उपसंयन्तु (अथर्व० ३।८।४)। उपसंयन्तु समुदिताः संहिता उपयान्तु।

—इन्ध् (इन्धी दीप्तौ)। इत्याहवनीयमुपसमिन्धे (आप० श्रौ० १।१।४)। धारणाय समर्थमिन्धनमुपसमिन्धनम्, महाकाष्ठाधानमिति धूर्तस्वामी।

—ऊह् ( ऊह वितर्के ) । सो ऽनुपसमुह्यानुपाधायोदपिपतिषत् (श० ब्रा० १०।२।१।१) । अनुपसमुह्य=असंकोच्य । तद्यावदेवोपसमूहति तावद् व्युदूहति (श० ब्रा० १०।२।१।४)। व्युदूहति प्रसारयति । तद्विरोधादुपसमूहति सकोचयतीति व्यक्ततरोऽर्थः ।

—ख्या (ख्या प्रकथने, चक्षिङ आदेशो वा) । समापूर्यन्त चासङ्ख्यैरुपसंख्यामुपस्थितैः । सापत्नै राजपुत्रैश्च···दिशः (कथा० ७४।२७८) ॥ इतरैः सह संख्यानमुपसंख्यानम् । अत एव पाणिनीये शासने वार्तिकमुपसंख्यानमुच्यते । अत एव चोपसंख्येयमधिकं संख्येयमित्यर्थमाचष्टे ।

—गम् (गम्लृ गतौ) । सर्वा हि देवताः पशुमालभ्यमानमुप संगच्छन्ते (श० ब्रा० ३।८।३।४) । उपसंगच्छन्ते उपसङ्गच्छन्ति समुदिता उपतिष्ठन्ति । ब्राह्मणं ब्राह्मणीं चैव मिथुनायोपसंगती (भा० आदि० १८२।१०) । निधुवनाय मिथः संगतावित्यर्थः । भगवांस्तास्तथाभूता विविक्त उपसङ्गतः (भा० पु० १०।८२।४१) । उपसङ्गतः (ताभिः) सम्पृक्तः, संप्रयुक्तः ।

—ग्रह् (ग्रह उपादाने) । देवदत्तस्य यद् धान्यं संगृहीतं पुरस्ताल्लवनेनोपसंगृह्णन्ति (पा० १।३।१४ इत्यत्र न्यासः) । यानन्यान् पश्यतोऽस्याचार्य उपसंगृह्णीयात् तदा त्वेत उपसङ्ग्राह्याः (सत्या० श्रौ० २६।२।७०) । उपसङ्गृह्णीयात् पादग्रहणं कुर्यात् । प्रत्युत्थायोपसंगृह्य (भा० शां० ७१।४) । उक्तोऽर्थः । उपसंग्रहेः प्रयोगे चरणाविति कर्म कामं त्यज्यताम्, न तेन व्यवहारोऽस्तीयते । तमुपसंगृह्य पप्रच्छाधीहि भोः कः सविता का सावित्री (गो० ब्रा० पूर्व० १।३२ ) । अत्र तच्चरणोपसङ्ग्रहणं तदुपसङ्ग्रहणमुक्तम्, वाचां वैचित्र्यात् । उपसंगृह्य पप्रच्छुः (भा० पु० ११।२।१३) । उक्तोऽर्थः । अभिगम्योपसंगृह्य जगाम शिरसा महीम् (भा० आदि० १३२।५२) । शिरसा महीं जगाम शिरसा भुवं पस्पर्श । पाणिभ्यां तूपसंगृह्य स्वयमन्नस्य वर्धितम् (मनु० ३।२२४) । उपसंगृह्य सम्यग् गृहीत्वा । समिधमुपसंगृह्य (श० ब्रा० १२।४।४।६) । उक्तोऽर्थः । गाण्डीवमुपसंगृह्य बभूव मुदितो ऽर्जुनः (भा० आदि० २२५।२०) । उपसंगृह्य प्रतीक्ष्य आदाय वित्त्वा । स्फ्येनोपसंगृह्याविविञ्चन् हरति (आप० श्रौ० १।५।१६।६) । उपसंगृह्य समुपश्लेष्य । एकीकृत्य । धर्मरक्षितां नाम शाक्यभिक्षुकीं चीवरपिण्डदानादिनोपसंगृह्य ( दशकु० पृ० ११० ) । उपसङ्गृह्य=वशे कृत्वा । प्रतिभामुपसर्गांश्चाप्युपसंगृह्य (दशकु० पृ० ११०) । उपसङ्गृह्य=वशे कृत्वा । प्रतिभामुपसर्गांश्चाप्युपसंगृह्य योगतः । तांस्तत्त्वविदनादृत्य आत्मन्येव निवर्तयेत् (भा० शां० २४०।२४) ॥ उक्तोऽर्थः । परि-

ष्वज्योपसंगृह्य (स्नुषां तां देवीं मायावतीम्) (हरि० २।१०८।३५)। परिष्वञ्जनोपसङ्ग्रहणयोः क्रिययोः कर्त्री रुक्मिणी। समावृत्तेन सर्वे गुरव उप सङ्-ग्राह्याः (आप० ध० १।४।१४।७)। उपसङ्ग्राह्याः पादयोरभिवादनीयाः। भर्तुर्भार्योपसङ्ग्राह्या (मनु० २।१३२)। उक्तोऽर्थः। स्फुरति रभसात्पाणिः पादोपसङ्ग्रहणाय च (महावीर० २।३०)। पादोपसङ्ग्रहणम् पादग्रहणम्। सम्शब्दप्रयोगः प्रायिकः। व्यत्यस्तपाणिना कार्यमुपसंग्रहणं गुरोः। सव्येन सव्यः स्प्रष्टव्यो दक्षिणेन च दक्षिणः (मनु० २।७२)॥ यदुच्यते द्विजातीनां शूद्राद्दारोपसङ्ग्रहः (याज्ञ० १।५६)। उपसङ्ग्रहो ग्रहणं वेदनम्। धातोरर्थान्तरे वृत्तेर्धात्वर्थेनोपसङ्ग्रहात् (वा० प० ३।३३६)। उपसङ्ग्रहोऽन्तर्भावः। अथ यस्मागमादर्थपृथक्त्वमह विज्ञायते...स कर्मोपसङ्ग्रहः (नि० १।४)। कर्म=अर्थः। उपसंगृह्यत आक्षिप्यते यः स उपसंग्रहः। कर्म (अर्थः) उपसंग्रहो यस्य स कर्मोपसङ्ग्रह इति महेश्वरः। बलानामुपसंग्रहम् (रा० १।३।२५)। उपसंग्रहः संमेलनम्। उपातिष्ठत मेवाभः पर्यङ्के सोपसङ्ग्रहे (भा० वि० १७।१६)। उपसङ्ग्रहस्तूलिका, उपधानम्।

—चर् (चर गतिभक्षणयोः)। दैत्यान् गृहीतकलशो वञ्चयन्नुपसञ्चरैः (भा० पु० ८।९।२१)। उपसञ्चरैं र्बहुमानप्रियवाक्यादिनेति श्रीधरः। कटाक्षादिभिरिति हिन्दीटीका। उपचारार्थे उपसञ्चरशब्दं प्रयुङ्क्ते कविः पुराणकारः। अत्रास्य नूत्नशब्दनिर्मितसैव प्रयोजिका।

—तन् (तनु विस्तारे)। ब्रह्मणैव हि तद् ब्रह्मोपसन्तनोति (शां० ब्रा० ११।४)। अनुबध्नाति, आनन्तर्येण पठति। एतमाग्नेयं गायत्रमुपसन्तनुयात् (आश्व० श्रौ० ६।५)। पूर्वेणाव्यवहितं पठेदित्याह। प्र वो देवायेत्याज्यमुपसन्तनुयात् (आश्व० श्रौ० ५।९)।

—दो (दो अवखण्डने)। समर्थस्यैवासामर्थ्यं विरुद्धमिति चेन्न। उपसन्दानजीवित्वात्सामर्थ्यस्य (का० प्र० ७।५० प्रदीपे)। उपसन्दानं सम्बन्धः।

—धा (डुधाञ् धारणपोषणयोः)। न्यायप्रवृत्तो नृपतिरात्मानमथ च प्रजाः। त्रिवर्गेणोपसन्धत्ते (शुक्र० १।६७)। उपसन्धत्ते सन्धत्ते संयुनक्ति। उपप्रयन्तो अध्वरम् इत्युपसन्दधाति। उपसन्दधाति=अधिकं हव्यं प्रक्षिपति। तस्मादेनानिन्द्रेणोपसंहितान्यजति (गो० ब्रा० उत्तर० १।२३)। उपसंहितान्संहितान्सहितान्। विरक्तं शोध्यते वस्त्रं न तु कृष्णोपसंहितम् (भा० शां० २९१।१०)। प्रज्ञासंभावितो नूनमप्रज्ञैरुपसंहितः (भा० अनु० १२४।१६)।

**उपसंहितः संगतः, संसृष्टः, उपश्लिष्टः।** ब्राह्मणश्चेन्न विद्येत श्रुतवृत्तोपसंहितः (भा० अनु० १२१।११)। **उपसंहितः सम्पन्नोऽन्वितः।** रहस्यं चैव धर्माणां देशकालोपसंहितम् (भा० आदि० २।३३५)। **उपसंहितं सम्बद्धम्।** सहायाननुरक्तांश्च नयज्ञानुपसंहितान्। परस्परमसंसृष्टान् विजिगीषूनलोलुपान् (भा० शां० १११।२३)॥ **उपसंहितान् कृतसन्धीन् संमिश्रान्, परतन्त्रान्, अधीश्वरे वर्तमानान् इति वा।** सुनृशंसमिदं कर्म तेषां क्रूरोपसंहितम् (भा० आदि० १४१।१८)। (कणिकेन) **क्रूरेणोपदिष्टमित्यर्थः।** मूलत उत्तरारणिमुपसन्धाय (कौ० सू० ६९)। **उपरि संयोज्येत्यर्थः।** योनिं तदुपसन्धाय रेतः सिञ्चति (ऐ० ब्रा० २।३८)। **उपसन्धानमुपसंश्लेष इति भट्टभास्करः। योनिमुपसन्धाय गर्भस्थानमभिलक्ष्येति तु सायणः।** पशुमेवोपसन्धाय वनस्पतिरावाह्यः (शां० ब्रा० १२।७)। **इह तु स्पष्टमभिलक्ष्येत्येवार्थः।** अस्मान्वा ह्युपसन्धाय कुर्युर्मत्स्येन सङ्गतम् (भा० वि० ४७।१२)। **बहिरस्माभिः सन्धाय सन्धिं कृत्वा। उपसन्धायेत्यर्जुनमिश्रधृतः पाठः। उपसंगम्येति च तदर्थः इति च सः। अपसन्धायेति च पाठान्तरं तेनैव धृतम्। अपगतसन्धीन् कृत्वेत्येवमर्थापयते सः। नीलकण्ठस्तु अतिसन्धायेति पाठमूरी करोति।**

**—नम्** (**णम प्रह्वत्वे शब्दे च**)। तदस्मै देवा उप सं नमन्तु (अथर्व० १९।४०।१)। **तद्राष्ट्रादिकं देवा अस्मै पुरुषाय उपसंनमन्तु प्रापयन्तु। अन्तर्णीतण्यर्थको नमिः। नार्थः समा। उपनमन्तु उपनमयन्त्वित्यनेनैव विवक्षितार्थलब्धेः।**

**—नुद्** (**णुद प्रेरणे**)। अस्मभ्यं क्षत्रमजरं सुवीर्यं गोमदश्ववदुपसंनुदेह (तै० ब्रा० ३।१।१।१०)। **उप समीपे सम्यक् प्रेरयेत्यर्थः।**

**—पद्** (**पद गतौ**)। वासाय स्वनिलयमुपसम्पेदे (रा० २।११६।२५)। **उपसम्पेदे प्राप। उपेयाय।** स ग्रामाद् ग्रामं पृच्छन् पण्डितो मेधावी गन्धारानेवोपसम्पद्येत (छां० उ० ६।१४।२)। **उप सम्पद्येत प्राप्नुयात् आसादयेत्।** यावता वा समयेन चलितः परमाणुः पूर्वदेशं जह्यादुत्तरप्रदेशमुपसम्पद्येत स कालः क्षणः (यो० सू० ३।५२ भा०)। **उक्तोऽर्थः।** तमहं वेद नान्यस्तमुपसम्पादयामि ते (भा० उ० १३६।९)। **त उपसम्पादयामि त्वय्यर्पयामि।** मृद्धर्मी पिण्डाकाराद् धर्माद् धर्मान्तरमुपसम्पद्यमानो धर्मतः परिणमते (यो०सू० ३।१३ भा०)। **उपसम्पद्यमानः प्राप्नुवन्।** अज्ञानादुपसम्पन्ना रज्जुरुद्वन्धनी यथा (रा० २।१२।८०)। **उपसम्पन्ना संगता।** एकत्वमुपसम्पन्नो न त्वासेऽहं त्वया (भा० उ० ३५।१४)। **एकत्वं प्राप्तः।** पाण्डवैरुपसम्पन्ना द्रौपदी पति-

भिः सह (भा० आदि० २००।१)। उपसम्पन्ना युक्ता। जरारोगोपसम्पन्नां जीर्णां वापीमिवाजलाम् (भा० अनु० ७७।६)। वर्णरूपोपसम्पन्नैः (मनु० ४।६८)। उक्तोऽर्थः। भ्रातृत्वमुपसम्पन्नौ परिष्वज्य परस्परम् (रा० ७।३५।२)। उपसम्पन्नौ सम्प्राप्तौ। प्रणीतमुपसम्पन्नम् इत्यमरः। तत्र प्रणीतमिति सुसंस्कृतमाह। उपसम्पन्नमुद्दिष्टे निहते च सुसंस्कृत इति मेदिनी। श्रोत्रिये चोपसम्पन्ने (गौ० ध० २।५।२०, मनु० ५।८१)। उपसम्पन्ने तत्समीपवर्तिनि, तद्गृहवासिनि (मृते सति)। पूर्वस्माच्छ्लोकात् सं स्थित इत्यनुवर्तते। अपि उपसम्पन्न इति मृतमाचक्षीत तद् गृहवासीति चाध्याह्रियेत। उभयथा हि शास्त्रार्थः शक्यो लापयितुम्। आभिधानिकास्तु उपसम्पन्नं हतमाहुर्न मृतम्। वाच्यलिङ्गाः प्रमीतोपसम्पन्नप्रोक्षिता हते इत्यमरः। तथा च श्रीहर्षे प्रयोगः—स बाल एव विधेर्बलवतो वशादुपसम्पन्नया व्ययुज्यत जनन्या (४१ पृ०)। स आयुष्मता शारिपुत्रेण प्रव्राजित उपसम्पादित आगमचतुष्टयं च ग्राहितः। उपसम्पादितः सुष्ठु संस्कृतः। प्रथमोऽचिरोपसम्पत्तौ (पा० ६।२।५६)। उपसम्पत्तिरुपश्लेष उपगमनम्। विनेयेन विनेतुरुपगमनम्।

—प्रच्छ् (प्रच्छ ज्ञीप्सायाम्)। उपसम्प्रष्टुमर्हामि तमहं केन हेतुना (भा० शां० ३७।१९)। उपसम्प्रष्टुम् उपगत्य सम्यक् प्रष्टुम्।

—भाष् (भाष व्यक्तायां वाचि)। भासनोपसंभाषा—(पा० १।३।४७)। उपसंभाषा उपसान्त्वनम्।

—यम् (यम उपरमे)। पञ्चाङ्ग्यामुपसंयतस्याश्वस्य (सुश्रुत० १।२८।६)। उपसंयतस्य बद्धस्य।

—यु (यु मिश्रणामिश्रणयोः)। ...काञ्चनं कल्पपादपम्। पलादूर्ध्वं यथा शक्त्या तण्डुलैस्तूपसंयुतम् (मात्स्य पु० १०१।५०)। नार्थ उपेन।

—रुध् (रुधिर् आवरणे)। यूयमित उपसंरोत्स्यथ (श० ब्रा० १।२।४।११)। उपसंरोत्स्यथ रोधं परिवेष्टनं करिष्यथेत्याह। उपसम्भ्यां विनापि स एवार्थः। अरुणद् यवनः साकेतमित्यत्र यथा।

—रुह् (रुह बीजजन्मनि)। व्रणश्चिरादुपसंरोहति (सुश्रुत० १।१८)।

—वद् (वद व्यक्तायां वाचि)। उपसंवादाशङ्कयोश्च (पा० ३।४।८)। उपसंवादः परिभाषणं कर्तव्ये पणबन्धः। यदि मे भवानिदं कुर्यादहमपि भवत

**इदं दास्यामीति तत्र वृत्तिग्रन्थः।**

—**विश् (विश प्रवेशने)।** जीना जीवन्तमुपसं विशेम (तै० ब्रा० ३।१।१।७)। **उपसंविशेम प्राप्नुयाम।** गृहानलुभ्यतो वयं संविशेमोप गोमत (अथर्व० ३।१०।११)। **उपसंविशेम उपेत्य सुखं निवसेम।** ततः संज्ञाय तुरगं विधिवद् याजकास्तदा। उपसंवेशयन्राजंस्ततस्तां द्रुपदात्मजाम् (भा० आश्व० ८९।२)। **उपसंवेशयन्=उपसमवेशयन्।** उपाशाययन्।

—**व्ये (व्येञ् संवरणे)।** रायश्च पोषमुपसंव्ययस्व (अथर्व० २।१३।२)। अन्तरं बहिर्योगोपसंव्यानयोः (पा० १।१।३६)। **उपसंव्यानं परिधानीयमुच्यते। संव्यानं तूत्तरीयम्। यत्प्रावरणमुच्यते बृहतिका च।** अन्तरीयोपसंव्यानपरिधानान्यधोंऽशुके इत्यमरः।

—**व्रज् (व्रज गतौ)।** न तापसैः…। आकीर्णं भिक्षुकैर्वान्यैरागारमुपसंव्रजेत् (मनु० ६।५१)। **उपसंव्रजेत् प्रविशेत्।**

—**हृ (हृञ् हरणे)।** सम्पन्नतरं प्रभूततरं च भैक्षमुपसंहरन्ति स्म (अवदा० जा० १२)। **उपसंहरन्ति उपहरन्ति उपनयन्ति समर्पयन्ति।** छेत्तुः पार्श्वगतां छायां नोपसंहरते द्रुमः (हितोप० १।५९)। **नोपसंहरते न प्रतिसंहरते।** स ज्ञानविशेष परलोके जन्मान्तरे फलमभ्युदयलक्षणमुपसंहरन्परलोकप्रयोजनो भवति (पा० ६।१।४९ सूत्रे वृत्तौ)। **उपसंहरन् प्रापयन्।** आचष्ट मौसले वृष्णीनन्योन्योपसंहृतान् (भा० मौ० ५।१) **अन्योन्योपसंहृतान् परस्परं विनिहतान्।** न तु धर्मवैशसे सुरेन्द्रतार्थे प्युपसंहृतं मनः (अवदा० जा० १२।१९)। **उपसंहृतमर्पितम्।** ततोऽग्निमुपसंहृत्य ब्राह्मेण विधिना मुनिः (भा० शां० १४१।९५)। **उपसंहृत्य उपसमाधाय, समुह्य।** इत्येनमभिसंराध्य शक्रस्तच्चास्य विभवसारमुपसंहृत्य (अवदा० अविषह्यश्रेष्ठि जा०)। **उपसंहृत्य उपहृत्य उपनीय।** क्रियतामुपसंहारो गुर्वर्थं द्विजसत्तम (भा० उ० ११६।१३)। **उपसंहारो धनसङ्ग्रहः।** न तु धर्मोपसंहारमधर्मफलसंहितम् (रा० ५।५१।२८)। **धर्मोपसंहारं धर्मोपसङ्ग्रहवन्तं पुरुषमिति तिलकः।** सामान्यमात्रोपसंहारे कृतोपक्षयमनुमानं न विशेषप्रतिपत्तौ समर्थमिति (यो० सू० १।२५ भाष्ये)। **उपसंहारो निश्चयः।** उदाहरणापेक्षस्तथेत्युपसंहारो न तथेति यः। साध्यस्योपनयः (न्या० सू० १।१।३८)। **उपसंह्रियते ऽनेनेत्युपसंहार उपन्यासः।** ओष्ठोपसंहार उवर्णे (तै० प्रा० २।२४)। **उपसंहारः=संकोचः।**

### उपसमाङ् (उप+सम्+आङ्)

—इ (इण् गतौ)। वयांसि च वायोविद्यिकाश्चोप समेता भवन्ति (श० ब्रा० १३।४।३।१३)। **पक्षिविद्याया विशेषज्ञा उपसमेताः समेताः समुदिता एकीभूताः।** इति श्रोत्रिया अप्रतिग्राहका उपसमेता भवन्ति (श० ब्रा० १३।४।३।१४)। प्रत्येत्याचार्यं सपर्षत्कं भोजयेत् सब्रह्मचारिणश्चोपसमेतान् (गो० गृ० ३।२।५२-५३)। **उदितचर एवार्थः।**

—धा (डुधाञ् धारणपोषणयोः)। तद् यत् किं चातो रात्र्योपसमादधात्याहुतिकृतं हैवास्मै तदुपसमादधाति (श० ब्रा० ६।६।४।१)। **समिधमुपर्यादधातीत्यर्थः।** उपसमाधीयमानपरिणयोपकरणे भवने (दशकु०)। **उपसमाधीयमानं संगृह्यमाणम्, राशीक्रियमाणम्।** यत्र क्व चाग्निमुपसमाधास्यन् स्यात् (आप० ध० २।१।१३)। **उपसमाधास्यन् प्रतिष्ठापयिष्यन्।** (कला) अन्नेनोपसमाहिता (छां० उ० ६।७।६)। मथित्वोपसमाधायोद्धृत्याहवनीयं यजन्ते (श० ब्रा० ४।६।८।३)। **उपसमाधायाश्मन्तकस्योपरि निधाय।** अग्नीन् उपसमाधाय (आप० श्रौ० ६।५।१९।१)। **उपसमाधाय काष्ठैरुपसमिध्य।** तम् (अङ्गारं) तृणैरुपसमाधाय (छां०उ० ६।७।५)। **उपसमाधाय आच्छाद्य।** निवासचितिशरीरोपसमाधानेष्वादेश्च कः (पा० ३।३।४१)। **उपसमाधानं राशीकरणमिति वृत्तिः।** यथा गोमयनिकाय इत्यत्र।

—वृत् (वृतु वर्तने)। उप मा प्रजाः समावर्तेरन् (श० ब्रा० ३।९।१।३)। **प्रतिनिवृत्य मामुपेयुरित्यर्थः।**

### उपसंनि (उप+सम्+नि)

—अस् (असु क्षेपे)। सम्यक्कर्मोपसंन्यासात् (भा० वन० २।७९)। **उपसंन्यासः संन्यासो न्यासस्त्यागः।**

## अथानुबन्धः

इत्थमनुक्रान्ताः प्रादय उपान्ता उपसर्गास्तेन तेन धातुना सम्प्रयुक्ताः। अवसितेऽस्मिन्ननुक्रमणे ऽस्मदधीतेरविरामादन्वेषणरुचेश्चानस्तमयाद्येऽलब्धपूर्वा अपूर्वा धातूपसर्गयोगा उपलब्धास्त इह निबध्यन्ते भूयसे बोधाय—

# प्र

—अज् ( अज गतिक्षेपणयोः ) । रथात् प्रवीतात् पतितः ( पा० १।४। २४) । वलादावार्धधातुके ऽजेर्वी इत्यादेशो वैकल्पिकः, तेन पक्षे प्राजितमित्यपि । प्रवीतो रथः सारथिना प्राजितः कालितः ।

—अर्ज् (अर्ज प्रतियत्ने) । यथा सावसान् (पशून्) कृत्वा प्रार्जयेत् तादृक् तत् (जै० ब्रा० १।३८) ।

—अर्थ् (अर्थ याच्ञायाम्) । स्वयं त्वहं प्रार्थये तत्र गन्तुम् (भा० उ० २६।४७) । प्रार्थये=इच्छामि । न च प्रार्थयते कश्चिन्मनसापि वसुन्धराम् ( =कोसलराज्यम् ) (रा० २।८८।२३) । न प्रार्थयते आक्रमितुं नेच्छति । मा नो रिपुः प्रार्थयतामनीकम् (भा० भीष्म० ७७।४१) । उक्तोऽर्थः । समीरणसहायोपि नाम्भःप्रार्थी दवानलः ( रघु० १७।५६ ) । अम्भःप्रार्थी जलास्कन्दी ।

—अश् (अश भोजने) । पूर्वा व्रतस्य प्राश्नती (अथर्व० ६।१३३।२) । प्रशब्दः पूर्वतामाह । प्राश्नती या पूर्वमश्नाति सा ।

—अश् (अशू व्याप्तौ) । प्र ते अश्नोतु कुक्ष्योः (ऋ० ३।५१।१२) । प्राश्नोतु प्राश्नुतां व्याप्नोतु । न नूनं ब्रह्मणामृणं प्राशूनामस्ति सुन्वताम् (ऋ० ८।५।१६) । सोमं प्राश्नुवते ये ते प्राशवः । स्वाध्यायविधिश्चोच्चारणोपयोगि प्राशुभावफलकतयैवाध्ययनं विधत्ते (भा०दी० १।२।४) । प्रकर्षेणाशुः प्राशुः, सत्वरतरः प्रतूर्तः, तस्य भावः । दोर्भिश्चातपदीप्तैश्च प्रासैः प्राशैश्च मूर्छनैः (मात्स्य० पु० १७७।१२) ।

—अस् (अस भुवि) । प्र ये महोभिरोजसोत सन्ति (ऋ० ७।५८।२) । प्रसन्ति प्रभवन्ति । प्र तद्वो अस्तु धूतयो देष्णम् (ऋ० ७।५८।४) । प्रास्तु प्रभूतमस्तु । देष्णं धनम् ।

—आप् (आप्लृ व्याप्तौ) । क्व प्रेप्सन्दीप्यते ऊर्ध्वो अग्निः क्व प्रेप्सन्पवते मातरिश्वा (अथर्व० १०।७।४) । प्रेप्सन् त्वरमाणः, त्वरया गच्छन् । प्रेप्सा त्वरा । पर्यर्थे प्रशब्दः । प्रेप्सन् प्राप्तुमिच्छन् इति वा प्रेप्सन्नित्युक्तः । तत्र किमिच्छन्निति नोक्तमिति सावशेषं वचः । स दोषः ।

—इ (इण् गतौ)। प्रेह्यभिप्रेहि प्रभरा सहस्व (तै० ब्रा० २।४।७।४)। प्रेहि गच्छ, प्रतिष्ठस्व। प्रवता वै देवाः स्वर्गं लोकं प्रायन्नुद्वतोदायन् (पञ्च० ब्रा० १४।४।२४)। प्रायन्प्रागच्छन्, गन्तुं प्रक्रान्ताः। प्रेयमगात् (तै० सं० १।१।२)। प्रागात् प्राचीमगच्छत्। प्रेहि सुतस्य कुल्यामनु (तै० सं० १।३।८)। प्राचीं गच्छेत्यर्थः। प्राच्यां हि स्वर्गो लोकः। प्रशब्देन प्राक्त्वं द्योत्यत इति भट्टभास्करः। यदद्य त्वा प्रयति यज्ञे अस्मिन्नग्ने होतारं वृणीमहीह (तै० सं० १।४।४४।२)। प्रयति प्रगच्छति प्रोत्सर्पतीति स्कन्दः। पितरं च प्रयन्त्सुवः (तै० सं० १।५।३)। प्रयन् प्रकर्षेणाविच्छेदेन गच्छन्। पङ्क्तिप्रायणो वै यज्ञः पङ्क्त्युदयनः (तै० सं० २।६।१०।४)। प्रायणं प्रारम्भः। उदयनं समाप्तिः। ब्रह्मवादिनो वदन्ति प्रायणतो द्विपदाः कार्या उदयनता ३ इति(पञ्च०ब्रा० १३। १२।५)। उक्तोर्थः। अप्रायुवो रक्षितारो दिवे दिवे (ऋ० १।८९।१)। अप्रायुवो ऽप्रगच्छन्तः। स्वकीयं रक्षितव्यमपरित्यजन्त इत्यर्थः। प्रशब्दो विप्रकर्षे वैदूर्ये। प्रेतिरसि धर्मणे त्वा (पञ्च० ब्रा० १।९।२)। प्रेतिः प्रकृष्टा गति र्यस्येति सायणः।

—इष् (इष गतौ)। तान्प्रैषमैच्छत्, तान्नाविन्दत् (पञ्च० ब्रा० १४। ४।७)। प्रैषम् अन्वेष्टुम्।

—ईक्ष् (ईक्ष दर्शने)। युवा प्रेक्षणकं द्रष्टुमेकं देवकुलं ययौ (कथा० ५७। ७४)। प्रेक्षणकं प्रेक्षा।

—ईर् (ईर गतौ)। प्र विप्राणां मतयो वाच ईरते (ऋ० ९।८५।७)। वाचः स्तुतीः प्रेरते प्रेरयन्तीत्यर्थः। ताविमौ शोकसन्तापौ शनैः प्रेरय भामिनि (रा० ४।२१।६)। प्रेरय अपनय अपनुद विगमय।

—उक्ष् (उक्ष सेचने)। वाच्यलिङ्गाः प्रमीतोपसम्पन्नप्रोक्षिता हते (अमरे २।७।२६)। प्रोक्षणं लक्षणया वध उच्यते। प्रोक्ष्य हि यज्ञे पशुर्हन्यत इति स्वामी।

—उञ्छ् (उछि उञ्छे, उञ्छः कणश आदानम्)। प्रोञ्छन्ति कौक्षेयकान् (हनुमन्नाटके ६।१)। प्रोञ्छन्ति विमली कुर्वन्ति। विधिना यल्लाटलिखितं तत्प्रोञ्छितुं कः समर्थः (हितोप० १।२७)। प्रोञ्छितुं प्रमार्ष्टुम्।

—ऊह् (ऊह वितर्के)। यदधोऽधोऽक्षं द्रोणकलशं प्रोहन्ति (जै० ब्रा० १।७७)। प्रोहन्ति प्रेरयन्ति प्रापयन्ति। इदमहमात्मानमेव प्राञ्चं प्रोहामि

तेजसे ब्रह्मवर्चसाय (नि० १।१५।५ दुर्गवृत्तौ)। **उक्तोऽर्थः।**

**—कम्प् ( कपि चलने )**। प्राकम्पत भुजः सव्यः ( रा० ३।२६।१४ )। **प्राकम्पत अस्पन्दत अस्फुरत्।**

**—काङ्क्ष्(काक्षि वाञ्छायाम्)**। तदस्य मुखवैशद्यं प्रकाङ्क्षां चान्नपानयोः (चरक० चि० ३।१५६)। **प्रकाङ्क्षा प्रकृष्टा ऽऽकाङ्क्षा।**

**…कृ (डुकृञ् करणे)**। यैरिमं प्राकरोत्सर्वं भूतग्रामं चतुर्विधम् (वामन पु० ४६।२७)। **प्राकरोदजनयत्।** कथां प्रचक्रिरे पुण्यां सदसिस्था महात्मनाम् (भा० वन० ६५।१६)। **प्रचक्रिरे प्रकथयामासुः।** पाण्डोः पुत्रं प्रकुरुष्वाधिपत्ये (भा० वन० ४।१४)। **प्रकुरुष्व अधिकुरु। साधु दारान्कुरुष्वेति पाठान्तरम्।** य ( अतिशयं ) हेतवः प्रकुर्वाणा न यान्ति वचनीयताम् ( तत्त्वसं० १६)। **प्रकुर्वाणा जनयन्तः साधयन्तः।** रक्षोवध प्रकृत इत्ययमेव शंसेत् (चम्पूरा० ३।६)। **प्रकृतः प्रारब्धः प्रक्रान्तः।** द्वौ प्रतिषेधौ प्रकृतार्थं गमयतः (नि० ६।१३।१) इत्यत्र स्कन्दः। **प्रकृतार्थं गमयतः प्रक्रान्तमप्रतिषिद्धमर्थं बोधयतः। अविसंवादकौ भवत इति यावत्।**

**—कृष् (कृष विलेखने)**। इदं तु मम दीनस्य मनो भूयः प्रकर्षति (रा० ६।१।१२)। **प्रकर्षति=कर्षति कदर्थयति।** आवयोरपि यत्सङ्गात्पवित्रत्वं प्रकृष्यते ( उत्तर० ७।८ )। **प्रकृष्यते वर्धते।** क्षेत्रं प्रकर्षयेदुत्तरैः प्रोष्ठपदैः फाल्गुनीभी रोहिण्या च(आश्व० गृ० २।१०।३))। **प्रकर्षयेत् कृषेदित्येवार्थः।** प्रतिवक्तुं प्रकृष्टे हि नापकृष्टस्तु शक्नुयात्(रा० ४।१८।४६)। **वालिन उक्तिरियं रामं प्रति। प्रकृष्टः श्रेयान्। अपकृष्टो जघन्यः।** उलूखल बुध्नो यूपः प्रकृष्यः (का० श्रौ० २४।५।२७)। **देशान्तरानयने प्रकृष्यः प्रकर्षणीयः, भूमिसंलग्न एव प्रेरणीय इत्यर्थः।**

**—क्रम् (क्रमु पादविक्षेपे)**। प्राक्रामत् पथि तस्मिन्नजातश्रमः (कथा० ४२।२२३)। **प्राक्रामत् अग्रे प्रासरत्।** पित्रोश्च पूजनं कृत्वा प्रक्रान्तिं च करोति यः (शिवपु० २।४।१६।३६)। **प्रक्रान्तिः=परिक्रमः। पर्यर्थे प्रः। अन्यत्र दुर्लभः प्रयोगः।**

**—ख्या (ख्या प्रकथने, चक्षिङ आदेशो वा)। प्रख्यायते कथ्यते प्रकाश्यते बुद्धे विषयतामापाद्यत इति यावत्** (पा० १।२।५४ सूत्रे न्यासे)। अभिख्या

ऽप्रख्यता चैव सर्वं लोभात् प्रवर्तते ( भा० शां० १५८।५ ) । अप्रख्यता ऽपकीर्तिः ।

—गम् (गम्लृ गतौ) । ततः स्तुता देववरैर्मृगेन्द्रमारुह्य देवी प्रगता वनाढ्यम् । (विन्ध्यम्) (वामनपु० १८।२१) । प्रगता प्रस्थिता ।

—गृध् (गृधु अभिकाङ्क्षायाम्) । पर्णं न वेरनु वाति प्रगर्धिनः (तै० सं० १।७।८) । प्रगर्धिनः=अवधिं (काष्ठाम्) प्राप्तुं काङ्क्षतो ऽस्याश्वस्य ।

—ग्रह् ( ग्रह उपादाने ) । रश्मीञ्शमीकतनयो मातलिः प्रग्रहीष्यति (वामन पु० ६६।१४७) । प्रग्रहीष्यति ग्रहीष्यति । सारथ्यं करिष्यतीत्यर्थः । तस्माद्राजा न प्रगृह्णीत लुब्धम् (भा० शां० १२०।४८) । न प्रगृह्णीत न सङ्गृह्णीत, नात्मीयं कुर्यात्, न तत्र स्निह्येत् । प्रगृहीतायुधस्येह मृत्योरिव महामृधे (रा० ६।६७।१०७) । प्रशब्दोऽत्र नान्तरमर्थे करोति । तान्यञ्जलिसहस्राणि प्रगृहीतानि नागरैः । व्याकोशानीव पद्मानि ददर्श भरताग्रजः (रा० ६।१२७।५२) ॥ प्रगृहीतानि बद्धानि । उत्पत्य च प्रगृह्योच्चैर्देवीं गगनमास्थितः (दुर्गा० १०।१८)। प्रगृह्य=उद्यम्य । ततो विलप्य विरता भर्तुः पादौ प्रगृह्य सा (भा०आश्व० ८०।१६) । प्रगृह्य=उपसंगृह्य निपीड्य । प्रगृह्य शिरसा पात्रीम् (रा० २।६।२) । प्रगृह्य=धृत्वा । इत्युक्तः कैकयीपुत्रः काकुत्स्थेन महात्मना प्रगृह्य··· (रा० २।१०४।४) । प्रगृह्य गाढं परिष्वज्य । यः प्रग्रहानुग्रहयोर्यथान्यायं विचक्षणः(रा० २।१।२५) । अयं पुस्तकेत्र धृतपूर्वः । प्रग्रहो नियन्त्रणमिति यन्निरदेशि तन्न सम्यक् । प्रग्रहो बाहुलकेन परिग्रहं परिपालनं तद्रूपमनुग्रहं वाह । आह चात्र महेश्वरतीर्थष्टीकाकारः—प्रथममात्मीयत्वेन परिग्रहः प्रग्रहः । परिगृहीतस्य नैरन्तर्येणानुवर्तनमनुग्रह इति । गोविन्दराजोपि तथा व्याकरोति । महोपकारं चाध्यक्षं प्रग्रहेणाभिपूजयेत् (कौ० अ० २।७।४१)। प्रग्रहोऽनुग्रहः । नृपेष्वथ प्रनष्टेपु तदा त्वप्रग्रहाः प्रजाः । (हरि०१।४१।६७) । अप्रग्रहा अनायकाः । सत्सङ्ग्रहप्रग्रहणे (रा० २।१।२६) । सत सङ्ग्रहे स्वीकारे प्रग्रहणे परिपालने च । समाहारद्वन्द्वः । प्रग्रहणान्ते धूम्रः खण्डग्रहणे शशी भवति कृष्णः (आर्य० ४।४६) । प्रग्रहणं प्रारम्भो ग्रहणस्य । साञ्जलिप्रग्रहाः स्थिताः (मात्स्यपु० १३७।१०) । साञ्जलिप्रग्रहाः साञ्जलिबन्धाः ।

—चर् (चर गतिभक्षणयोः) । तेनोपांशु प्रचरति (तै० ब्रा० १।३।१।५) । प्रचरति अनुतिष्ठति । माऽनुवोचो मा प्रचारीः (ऐ० ब्रा १।१३) । व्यग्रतया प्रचारमन्यथा ऽनुष्ठानं मा कार्षीरित्यर्थ इति सायणः । तस्यास्तीर्थं प्रचरितं

पुराणं प्रेक्ष्य राघवौ (रा० २।५५।५) । **प्रचरितं गमनागमनाभ्यामतिक्षुण्णमिति भूषणम्।** अहोरात्रे प्रचरे (जै० ब्रा०) । कुमारीणां प्रचारश्च सुरमण्यो भविष्यति (हरि० २।५५।११) । **प्रचारो विहारः ।** साधूनामुपकारज: प्रचारज्ञश्च कर्मणाम् (रा० ५।३५।१२) । **प्रचारज्ञः प्रयोगज्ञः ।** दृष्टधर्मप्रचारा (स्वप्न० १) । **प्रचारोऽनुष्ठानम् ।**

**—चल् (चल कम्पने) ।** भयं प्रचालाभ्याम् (तै० सं० ५।७।१३।४५) । **प्रचालौ पादयोरुपरि प्रदेशौ ।**

**—चि ( चिञ् चयने ) ।** पातकप्रचयवन्मम भूयः पुण्यपुञ्जमपि नाथ लुनीहि । काञ्चनी भवतु लोहमयी वा शृङ्खला यदि पदे न विशेषः (सा० सु० सि० ८।३८७) ।। **प्रचयः समूहः ।**

**—छिद् (छिदिर् द्वैधीकरणे) ।** प्रच्छिनति येनावपत् सविता (आश्व० गृ० १।१७।१०) । **प्रशब्दोऽनर्थक इति नारायणः । अन्ये तु क्षिप्रार्थ इत्याहुरिति च सः ।** अप्रच्छिन्नाग्रावनन्तर्गर्भौ प्रादेशमात्रौ कुशौ (आश्व० गृ० १।३।३) । **प्रशब्दः सौक्ष्म्ये । प्रच्छिन्नं सूक्ष्मच्छिन्नम् ।**

**—छो (छो तनूकरणे) ।** तेषामपाङ्गदेशे तु कुर्यात्प्रच्छानमेव तु (सुश्रुत० सूत्र० १६।१६) । **प्रच्छानमीषच्छेदनम् । प्रशब्द ईषदर्थ इति डल्लनः ।** स्नायुसन्ध्यस्थिमर्माणि त्यजन् प्रच्छानमाचरेत् (अष्टाङ्ग २६।५२) । **प्रच्छानं त्वग्भेदेन रक्तनिर्हरणम् ।**

**—जन् (जनी प्रादुर्भावे) ।** गर्दभो द्विरेताः सन् कनिष्ठं प्रजानां प्रजायते (तै० सं० ५।१।५।२५) । **प्रजायते ऽपत्यं जनयति ।** यथोपदेशं परिकीर्तितासु नरः प्रजायेत विचार्य बुद्धिमान् ( भा० अनु० ४८।३६ ) । **प्रजायेत रेतः सिञ्चेत्, आत्मानं जनयेत् ।** प्रजा च स्वाध्यायप्रवचने च । प्रजनश्च स्वाध्यायप्रवचने च । प्रजातिश्च स्वाध्यायप्रवचने च ( तै० उ० १।९।१-२ ) । **प्रजनः प्रजननमृतौ भार्यागमनम् । प्रजातिः पौत्रादिसन्तानसम्पादनम् ।**

**—जि (जि जये, अभिभवे च) ।** ते सोमाहुतिमजुहवुः । तयैनं प्राजयन् (जै० ब्रा० १।१३) । **प्राजयन् व्यजयन्त ।**

**—ज्ञा (ज्ञा अवबोधने) ।** मह्यमेकामाज्याहुतिं जुहुताहमेकां दिशं प्रज्ञास्यामि ( शां० ब्रा० ७।६ ) । **प्रज्ञास्यामि प्रविवेकेण ज्ञास्यामि ।** जातं च

निष्प्रभं सर्वं न प्राज्ञायत किञ्चन (मात्स्य पु० १७२।१८)। प्रविवेकेण ज्ञानं प्रज्ञानम् व्यक्तितः परिच्छेदः। प्रविवेकः पार्थक्यम्। आयतनं नः प्रजानीहीति (ऐ० उ० १।२)। प्रजानीहि चिन्तय। ममत्वं न प्रजानीयुर्यदि दण्डो न पालयेत् (भा० शां० १५।३८)। न प्रजानीयुः परिच्छिन्नं न जानीयुः। सर्वः सर्वत्र ममत्वं कुर्यात्, ममेदमिति मन्येतेति भावः। पक्षस्य मासस्य वा प्रज्ञातेऽह्नि (का० सू० १।४।१४)। यद्दिनं यस्या देवताया लोकप्रसिद्धं तत्प्रज्ञातम्।

—तङ्क् (तकि कृच्छ्रजीवने)। यो निलायं चरति यः प्रतङ्कम् (अथर्व० ४।१६।२)। प्रतङ्कम् प्रकर्षेण कृच्छ्रजीवनं प्राप्येति सायणः। प्रतङ्कमिति णमुलन्तम्। सायणभाषितेऽर्थेऽरुचि र्नः। न ह्येवं किञ्चित्सगतार्थमुक्तं भवति। निलायमित्यस्य विरोधितया प्रकाशं प्रसभं वेत्यर्थः स्यात्। बाढं धात्वर्थस्त्विममर्थं नानुगृह्णाति।

—तॄ (तॄ प्लवनतरणयोः)। आप ओषधीः प्र तिरन्त मे गिरः (ऋ० १०।९६।१०)। तरतिर्वृद्ध्यर्थ इति महेश्वरः(नि० ७।१०)। प्रतिरन्तु वर्धयन्तु। प्र चन्द्रमास्तिरते दीर्घमायुः (ऋ० १०।८५।१९)। उक्तोऽर्थः। अथ यत्रैनं ब्रूयुर्ब्रह्मन् प्रणेष्यामो ब्रह्मन् प्रतरिष्यामो ब्रह्मन् प्रस्थास्यामः (शां० ब्रा० ६। १२)। प्रतरिष्यामः प्रवत्स्यामः। आयुरेव तद् यजमानस्य प्रतारयति (ऐ० ब्रा० ६।३३)। प्रतारयति द्राघयति। वर्धयति। सोमो अह्नः प्रतरीतोषसो दिवः (ऋ० ९।८६।१९)। प्रतरीता प्रवर्धयिता। तृजन्तम्। हयो न विद्वाँ अयुजि स्वयं धुरि तां वहामि प्रतरणीमवस्युवम् (ऋ० ५।४६।१)। प्रतरणीं तारयित्रीम्। अवस्युवं रक्षित्रीम्।

—दह् (दह भस्मीकरणे)। ईश्वरं वै व्रतमविसृष्टं प्रदहः (तै० सं० १।७।६)। प्रदहः प्रदग्धुम्। ईश्वरे तोसुन्कसुनौ (पा० ३।४।१३) इति कसुन्। प्रशब्दः प्रकर्षे।

—दा (डुदाञ् दाने)। यदि वाचं प्रदास्यामि द्विजातिरिव संस्कृताम् (रा० ५।२०।१८)। प्रदास्यामि उच्चारयिष्यामि, व्याहरिष्यामि, वक्ष्यामि। यथा वत्सेन प्रत्तां गां दुहे(तै० सं० २।३।६।२३)। प्रत्तां क्षीरं दातुमारब्धाम्। प्रस्नुतस्तनीमिति यावत्। आदिकर्मणि निष्ठा। प्रशब्दश्चादिकर्मणो द्योतकः। प्रत्ता वै गौर्दुहे (तै० सं० १।७।१।३)। उक्तोऽर्थः।

—दिश् ( दिश अतिसर्जने, ) दिशिरुच्चारणक्रिय इति भाष्यम् । प्रदिशध्वं यथान्यायं केन हंसाः पताम्यहम् (भा० कर्ण० ४१।३१) । प्रदिशध्वं शंसत । रुद्राणामेति प्रदिशा विचक्षणः (ऋ० १।१०१।७) । प्रदिशा प्रदेशनेन दानेन ।

—दिह् ( दिह उपचये ) । शीताः प्रदेहा व्यजनानिलाश्च ( सुश्रुत० उत्तर० ४६।७) । प्रदेहः चन्दनादिविलेपः । सूदः सूपौदनं दद्यात् प्रदेहांश्च सुसंस्कृतान् (सुश्रुत० १।४६।५०१) । प्रदेहः प्रलेहः ।

—दृ (दृ विदारणे) । प्रदरः खन्यतामिति (रा० ३।४।२४) । प्रकृष्टो दरः, गर्तः, श्वभ्रम् ।

—धा (डुधाञ् धारणपोषणयोः) । यथा प्रधिर्यथोपधिर्यथा नभ्यं प्रधावधि (अथर्व० ६।७०।३) । प्रधिश्चक्रबाह्यवलयः, नेमिरिति यावत् । नभ्येव न उपधीव प्रधीव (ऋ० २।३९।४) ।

—धृ (धृञ् धारणे) । तस्योपकरणं प्रमाणं प्रहरणं प्रधारणमवधारणं च खरपट्टादागमयेत् (कौ० अ० ४।८।२४) । प्रधारणं निश्चयनम् ।

—नी (णीञ् प्रापणे) । तं धीरा वाचा प्र णयन्ति सप्त (ऋ० १०।११४।७) । होत्रादयः सप्त धीमन्तस्तमग्निं प्रकर्षेण प्रापयन्ति । मनुष्यलोक एवैनं पवयित्वा पूतं देवलोकं प्रणयति (तै० सं० ६।१।२।१०) । उक्तोऽर्थः । प्र तं मह्या रशनया नयन्ति (ऋ० ४।१।९) । प्रणयन्ति उत्तरवेद्यादिषु प्रक्षिपन्ति । तम् अग्निम् । यं त्वामय स्वधितिस्तेजमानः प्रणिनाय महते सौभगाय (ऋ० ३।८।११) । महत्सौभाग्यं प्रापयामासेत्यर्थः । उद्यन्नु खलु वा आदित्यः सर्वाणि भूतानि प्रणयति (ऐ० ब्रा० ५।३१) । प्रणयति चेष्टयति । प्रणयस्व च तत्त्वेन (रा० ५।२०।७) । प्रणयस्व स्नेहं कुर्विति भूषणम् । प्रसीदेति तीर्थः । अन्धकारे दीपिकाभि र्गच्छन्न स्खलति क्वचित् । एवं स्वरैः प्रणीतानां भवन्त्यर्थाः स्फुटा इति इति वेङ्कटमाधवो ऽनुक्रमण्याम् ।। स्वरैः प्रणीतानां स्वरैर्दर्शितपथानाम् । तत्प्रणीतमनसामुपेयुषाम् (शिशु० १४।३८) । हृष्टचित्तानाम् इति मल्लिः । मिथ्या प्रणीतात्मा (रा० ५।२१।१०) । प्रणीतात्मा स्निग्धमना इति भूषणम् । विनीतात्मेति तु तीर्थः । हे प्रणतप्रणीत ( स्कन्दपु० का ४।१६ ) । भक्तप्रणीतः = भक्तप्रणेयः = भक्तवश्यः । शुष्मणि प्रणयनादि संस्कृते (शिशु० १४।२२) । प्रणयनं गार्हपत्याद् उद्धृत्य मन्त्रेणायतने सादनम् इति मल्लिः ।

तत्प्रणेयं निबोधस्व त्रैलोक्यं सचराचरम् (हरि० ३।२।३२)। तत्प्रणेयं तद्वश्यं तदायत्तम्। वायुर्वै प्रणीर्यज्ञानाम् (ऐ० ब्रा० २।३४)। प्रणीः प्रणायकः।

—पत् (पत्लृ गतौ)। प्र राजन् पक्षिणः पतन्त्यवाऽपक्षा पद्यन्ते (पञ्च० ब्रा० १४।१।१२)। पक्षिणः पक्षवन्तः प्रपतन्ति उत्पतन्ति। पुरूरवो मा मृथा मा प्र पप्तः (ऋ० १०।९५।१५)। भृगोः पतनं मा कार्षीरित्यर्थः। प्रपातस्त्वतटो भृगुरित्यमरः। पुस्तके माऽपक्रमीः, मा पलायिष्ठा इति यदुक्तं तत्परेषां केषाञ्चिद् व्याख्यानं नास्माकम्। प्रकरणं च तद्विरुन्ध इति नादरणीयम्। तांस्ते (लोकान्) ददानि मा प्रपत प्रपातम् (भा० आदि० ९३।३)। प्रपातमिह णमुलन्तमिति नीलकण्ठः। तद्भसात्। अर्थासङ्गतेः। शास्त्रानुग्रहविरहाच्च। महाप्रमाणैर्विपुलैः प्रपातैर्मुक्ताकलापैरिव लम्बमानैः (रा० ४। २८।४८)। प्रपाता निर्झराः।

—पद् (पद गतौ)। अप्रवृत्ताः प्रपत्स्यन्ते समयाः शपथास्तथा (हरि० ३। ३।३०)। प्रपत्स्यन्ते प्रवर्त्स्यन्ति प्रवर्तिष्यन्ते। यदि पूर्वया द्वारा राजानं प्रपादयन्ति (शां० ब्रा० ९।६)। प्रपादयन्ति प्रवेशयन्ति। राजानं सोमम्। तं (विनाशं) यदि नेच्छसि तदा प्रत्तव्यः (रा० ५।२१।२० इत्यत्र भूषणे)। प्रपत्तव्यः शरणीकर्तव्यः। ननु भरतकृता प्रतिपत्तिः कुतो नाफलत् (रा० १।१। ३४ इत्यत्र भूषणे गोविन्दराज)। प्रपत्तिः शरणागतिः। एतद्वै खलु लोकद्वारम्। विदुषां प्रपदनं विरोधोऽविदुषाम् (छां० उ० ८।६।५)। प्रपदनं प्रापकम्।

—पा (पा पाने)। प्रपित्वे अह्नः कुयवं सहस्रा (ऋ० ४।१६।१२)। प्रपित्वे प्रक्रमे। आपित्वे नः प्रपित्वे तूयमागहि (ऋ० ८।४।३)।

—पृच् (पृची सम्पर्के)। वायो तव प्रपृञ्चती धेना जिगाति दाशुषे (ऋ० १।२।३)। प्रपृञ्चती प्रकर्षेण सोमसम्पर्कं कुर्वती। धेना वाक्।

—प्याय् (ओ प्यायी वृद्धौ)। प्रास्मै दिशः प्यायन्ते (तै० सं० १।६।११। ४)। प्रप्यायन्ते=प्रवर्धन्ते समृध्यन्ति समृद्धिमत्यो भवन्ति। प्रप्यानश्चन्द्रमाः। प्यायितुमारब्धः। आपूर्यमाण इत्यर्थः।

—प्लु (प्लुङ् गतौ)। तद्यथा लोके समुद्रं प्रप्लवेरन् (ऐ० ब्रा० ६।२१)। प्रप्लवो बाहुभ्यामितरतीरप्राप्तिः।

—बन्ध् (बन्ध बन्धने)। अर्थैरर्थाः प्रबध्यन्ते गजाः प्रतिगजैरिव (कौ० अ० ९।४।२७)। प्रबध्यन्ते बध्यन्ते। अर्थाः सन्तायन्त इत्यपि। प्रबन्धः सन्तानो भवति। स दर्भेण सुवर्णं हिरण्यं प्रबध्य पश्चाद्घरेत् (जै० ब्रा० १।६२)। प्रबध्य बद्ध्वा। सूर्यप्रभां न सहते स्रवति प्रबद्धम् (सुश्रुत० उत्तर० १९।९)। प्रबद्धमिति क्रियाविशेषणम्। सततं निरन्तरमित्यर्थः। अभिजनप्रबन्धो वंशः (पा० ४।१।१६३ इत्यत्र वृत्तौ)। प्रबन्धः सन्तानः, अविच्छेदः।

— ब्रू (ब्रूञ् व्यक्तायां वाचि) स निलायत। सोऽपः प्राविशत्। तं देवताः प्रैषमैच्छन्। तं मत्स्यः प्राब्रवीत् (तै० सं० २।६।३१।१)। प्राब्रवीत्=अयमसाविति सनिर्भेदमकथयत्।

—भा (भा दीप्तौ)। अथ यदेतत् प्रातः प्रभाति (जै० ब्रा० १।६)। प्रभाति व्युच्छति।

—भिद् (भिदिर् विदारणे)। यथा वै लाङ्गलेनोर्वरां प्रभिन्दन्ति (तै० सं० ६।६।७।२६)। प्रभिन्दन्ति प्रकर्षेण कृषन्ति।

—भुज् (भुजो कौटिल्ये)। प्रभुजति वाससी (प्रतिमायाः) (पा० १।३।६६ सूत्रे भाष्ये)। प्राञ्चं वै त्रयस्त्रिंशो यज्ञं प्रभुजति (पञ्च० ब्रा० २०।२।४)। प्रकर्षेण कुटिलं करोतीत्यर्थः। प्राञ्चम् ऋजुत्वेन गच्छन्तम्।

—भू (भू सत्तायाम्)। देवोऽयं दिनकृत्कुलैकतिलको न प्राभविष्यद्यदि (हनुमन्नाटके १।५२)। प्राभविष्यद् आविरभविष्यत्, अवातरिष्यत्। ततो वै तेभ्यो यज्ञः प्राभवत् (तै० ब्रा० २।२।२।६)। प्राभवत् पर्याप्नोत्। रक्तबीजस्य वै क्षिप्रं वधो हि प्रभविष्यति (स्कन्द पु० के० ८६।६१)। अनर्थकः प्रशब्दः। आकाशं प्रबभूवाथ विमानैश्च सुशोभितम् (स्कन्द पु० के० ८८।२८)। इहाप्यनर्थकः प्रो व्यवहारं विरुन्धे। वाचेमे होत्रे (पोतृनेष्ट्राख्ये) प्रभावयेमेति (ऐ० ब्रा० ६।१४)। प्रभावयेम समृद्धे करवाम। ऋचाग्नीध्रीयां प्रभावयाञ्चक्रुः (ऐ० ब्रा० ६।१४)। प्रभूतां चक्रुरित्यर्थः। ओषधयो वै प्रजाः प्रभवन्तीः प्रत्याभवन्ति (तै० सं० १।७।२)। प्रभवन्तीः प्रभवन्त्यः प्रभुत्वोपेताः। द्रोणस्य पुङ्खसंकाशां प्रभवन्तः शरासनात्। एको दीर्घ इवादृश्यदाकाशे संहतः शरः (भा० वि० ५८।४१)॥ प्रभवन्तः=निष्क्रामन्तः=निःसरन्तः। अदृश्यत्=अदृश्यत। तास्ते (धानाः) सन्तूद्भ्वीः प्रभ्वीः (अथर्व० १८।४।

४३) । प्रभ्वीः=प्रभावुकाः । यज्ञस्य प्रभूत्यै (तै० ब्रा० २।२।२।६) । प्रभूत्यै पर्याप्त्यै ।

—भृ (भृञ् भरणे) । भयेन प्रभृता नित्यं विचरिष्यन्ति शाश्वतम् (रा० ६।६४।३३) । प्रभृता भृताः पूर्णाः । इदं हि वां प्रभृतं मध्वो अग्रम् (ऋ० ७।६१।५) । प्रभृतमुपहृतमुपायनीकृतम् । यथा वै सोदर्कमेवं सप्रभृति (शां० ब्रा० २०।४) । समानोपक्रमं समानापवर्गम् इत्याह । प्रभृतिरादिः ।

—मन् (मन ज्ञाने, मनु अवबोधने) । वेदा एनं शब्दमर्थवन्तं कल्पयिष्यन्ति यदि कल्पयितव्यं प्रमंस्यन्ति (मी० १।१।५ शा० भा०) । प्रमंस्यन्ति प्रमंस्यन्ते निश्चेष्यन्ते । धीभि विप्रः प्रमतिमिच्छमानः (ऋ० ७।६३।४) । प्रमतिमनुग्रहबुद्धिम् । विभाहि ते प्रमतिं देव जामिवत् (ऋ० १०।२३।७) । उक्तोऽर्थः ।

—मा (माङ् माने) । न संस्कृतं प्र मिमीतः (अश्विनौ) (ऋ० ५।७६।२) । न प्रमिमीतो न हिंस्तामिति सायणः । अनेकार्थत्वाद्धातूनां हिंसार्थः । मीनातेः प्रयोगे विकरणभेदश्च । प्रमातुश्चेत्प्रमाणापेक्षा सिद्धिः कस्य प्रमित्सा स्यात् (उपदे० सा० २।६६) । प्रमातुमिच्छा प्रमित्सा ।

—मिह् (मिह सेचने) । रजः प्रमेहान्नारीणां मासि मासि विशुध्यति । सर्वं शरीरं दोषाश्च न प्रमेहन्त्यतः स्त्रियः (माधव० ३३।३६ इत्यत्र मधुकोशव्याख्यायामुद्धृतम्) । प्रमेहरोगेण न ग्रस्यन्त इत्याह ।

—मी (मीङ् हिंसायाम्) । न चाकाले प्रमीयते (सौन्दर० १।१५) । न प्रमीयते न प्राणैर्वियुज्यते, न म्रियते ।

—मुच् (मुच्लृ मोक्षणे) । तस्मादश्वः प्रमुक्तो बन्धनमागच्छति (तै० ब्रा० ३।८।६।४) । प्रमुक्तः स्वेच्छासंचाराय मुक्तः । अयमेव मोक्षप्रकर्षः प्रशब्दद्योत्यः ।

—मुह् (मुह वैचित्ये) । प्रमूढसंज्ञः परमापदं गतः (रा० २।८५।२१) । प्रमूढसंज्ञः नष्टसंज्ञः ।

—मृ (मृङ् प्राणत्यागे) । प्रम्रियमाणे वा राजन्यमात्यः कुल्यकुमारमुख्यान् ···विक्रामयेत् (कौ० अ० ५।६।२।२५) । प्रम्रियमाणे आसन्नमरणे ।

—मृष् (मृष तितिक्षायाम्)। न तत्ते अग्ने प्र मृषे निवर्तनं यद् दूरे सन्निहाभवः (ऋ० ३।९।२)।

—यज् ( यज देवपूजासंगतिकरणदानेषु )। प्रयाजवदनूयाजं प्रायणीयं कार्यमनूयाजवत् (तै० सं० ६।१।५।३६)। प्रारम्भे यष्टव्याः प्रयाजाः, अनु पश्चात् समाप्तौ यष्टव्या अनुयाजाः।

—यम् (यम उपरमे)। अस्मभ्यं तद्धर्यश्व प्रयन्धि (तै० सं० १।७।१३)। प्रयन्धि देहि। प्रयम्यमानान् प्रति षू गृभाय (ऋ० ३।३६।२)। प्रयम्यमानान् प्रदीयमानान् उपह्रियमाणान् इति सायणः। पूयमानान् इत्यर्थग्रहणे कः प्रतिबन्धः। प्रयतः पूतो भवति। प्रयतपरिग्रहद्वितीयः (रघु० १।९५)। प्रयतो नियतो नियमवान्, व्रती। पुष्पेण प्रयता स्नाता निशि कुन्ती चतुष्पथे (भा० आदि० १२०।३९)। प्रयता व्रतवती। पुष्पेण=आर्तवोपलक्षिता। पाणी प्रयन्तारा स्तुवते राध इन्द्र ( ऋ० ४।२१।९ )। प्रयन्तारा प्रयन्तारौ प्रदातारौ। तृन्नन्तमेतत्। प्रभूतैधोदके ग्रामे यत्रात्माधीनं प्रयमणं तत्र वासो धर्म्यो ब्राह्मणस्य ( सत्या० श्रौ० २६।४।८१ )। प्रयमणं प्रायत्यं मूत्रपुरीषप्रक्षालनादीनि। लोमानि प्रयतिर्मम ( तै० ब्रा० २।६।५।८)। प्रयतिः शुद्धिः। शुद्धिकराणि सन्त्वित्यर्थः।

—या ( या प्रापणे, प्रापणमिह गतिः )। यथाकाममप्रयाप्यः (ऐ० ब्रा० ७।२९)। अप्रयाप्यः=अप्रेष्यः=अनिर्वास्यः।

—यु (यु मिश्रणामिश्रणयोः)। पार्श्वेन वसाहोमं प्रयौति (तै० सं० ६।३।११।५७)। होतव्यां वसां प्रयौति आलोडयति। बौधायनश्रौतसूत्रे (४।९) प्येव ग्रन्थः स्थितः। यमुना प्रयुवती गच्छतीति वा (नि० ६।२६।१)। पुस्तके धृतचरोऽयङ् ग्रन्थः, अर्थो न निर्दिष्टः। स निर्दिश्यते। प्रयुवती सम्मिश्रयन्ती स्वानि जलानि। सर्वाणि ग्राम्याण्यारण्यान्याज्येन प्रयुत्य ( वाराहश्रौ० २।२।४।९)। प्रयुत्य संमिश्र्य। स्वप्नश्च नेदनृतस्य प्रयोता (ऋ० ७।८६।६ )। पुस्तके न्यस्तपूर्वमपीदमर्थनिर्देशाय पुनर्दीयते। प्रयोता प्रेरयिता। प्रयोक्ता।

—युच्छ् (युच्छ प्रमादे)। कदाचन प्रयुच्छसि (तै० सं० १।४।२२)। कदाचन न युच्छसि न प्रमाद्यसि। प्रशब्दो धात्वर्थस्य निवृत्तिं करोति प्रस्मरणं प्रस्थानं प्रपूरणमित्यत्र यथेति भट्टभास्करः। प्रशब्दो निषेधार्थं इति च सायणः। अप्रयुच्छन् पुर एतु प्रजानन् ( तै० ब्रा० २।४।१।६ )। अप्रयुच्छन् अप्रमाद्यन्।

—युज् (युजिर् योगे)। फाल्गुन्यां पौर्णमास्यां प्रयुङ्क्ते (शां० ब्रा० ५। १)। प्रयुङ्क्ते प्रारभते। तेभ्यः पूजां प्रयुञ्जीथा ब्राह्मणेभ्यः परन्तप (भा० अनु० ६०।६)। प्रयुञ्जीथा आचर, अनुतिष्ठ। पूजा प्रयुज्यतामाशु मुनीनां भावितात्मनाम् (भा० उ० ९४।४४)। प्रयुज्यतां क्रियतां रच्यतां विधीयताम्। कुवलयनयनेऽर्जुनः कपोऽब्धेः सह सितया सुनिराचरीकरोति। प्रियकरमिव कामिनी नवोढा लघुकुचशालिनि वक्षसि प्रयुक्तम् (वैद्यजीवने ३।२३)। प्रयुक्तं व्यापारितम्। चरीकरोतीति वाग्भ्रंशः सदृशो वैद्यस्य। परप्रयुक्ते न कथं विभावयेत् (भा० शां० १४०।७०)। परप्रयुक्ते परेणाभियोगे कृते सतीति नीलकण्ठः। स्तुतिनिन्दाप्रयुक्तमध्यारोपितार्थवचनमधिकार्थवचनम् (पा०२।१। ३३ सूत्रे वृत्तौ)। प्रयुक्तं प्रवर्तितं कारितम्।

—लप् (लप व्यक्तायां वाचि)। नाभानेदिष्ठो रपति प्र वेनन् (ऋ० १०। ६१।१८)। प्ररपति प्रलपति स्तौति।

—रिच् (रिचिर् विरेचने)। प्र ते मह्ना रिरिचे रोदस्योः (ऋ० ६।२४। ३)। प्ररिरिचे अतिरिरिचे। आसन्न इव वा ऽयं लोकः। प्ररिक्त इवासावन्यः (तै० ब्रा० २।३४)। प्ररिक्तो दूरस्थो विप्रकृष्टः।

—रुच् (रुच दीप्तावभिप्रीतौ च)। क्षुधां करोति प्ररुचिं तनोति (वैद्यजीवने १।३५)। प्ररुचिः प्रकृष्टा रुचिः।

—रुह् (रुह बीजजन्मनि)। यथा प्ररोहन्ति तृणान्ययत्नतः क्षितौ प्रयत्नात्तु भवन्ति शालयः (सौन्दर० ९।३९)। प्ररोहन्ति अङ्कुरितानि भवन्ति।

—लिख् (लिख अक्षरविन्यासे)। या प्रलिखते तस्यै खलतिः (तै० सं० २।५।१।७)। या केशान् प्रलिखति तस्यै खलतिः (पा० सू० २।३।६२ वृत्तौ)।

—लिप् (लिप उपदेहे)। भस्मप्रलिप्तदेहाय नकुलाय कपालिने (स्कन्दपु० के० ८६।४८)। प्रलिप्तोऽनुलिप्तः। स त्रिविधः—प्रलेपः प्रदेह आलेपश्च (सुश्रुत० सूत्र० १८।३)। तेषामन्तरम्—प्रलेपः शीतस्तनुरविशोषी विशोषी वा। प्रदेहस्तूष्णः शीतो वहलो ऽबहुरविशोषी च। मध्यमो ऽत्रालेपः।

—लू (लूञ् छेदने)। विशाखदामानि प्रलवांश्च (सत्या० श्रौ० २४।२। ६)। प्रलवाः स्वयं विशीर्णानि तृणानि।

—वच् (व्यक्तायां वाचि)। प्र तं विवक्मि वक्म्यो य एषाम् (ऋ० १।१।६७।७)। प्रविवक्मि प्रविवच्मि वर्णयामि। कस्तमेवं प्रवक्ष्यति (मात्स्य पु० २४२।३६)। प्रवचिरिह निन्दायाम्। अन्यत्रात्रार्थे विरलः प्रयोगः।

—वद् (वद व्यक्तायां वाचि)। बाणान् पञ्च प्रवदति जनः (हनुमन्नाटके २।१०)। पञ्चबाणः काम इति जनप्रवाद इत्यर्थः। प्रसृतः प्रथितो वादः प्रवादः। पुरा वाचः प्रवदितो निर्वपेत् (तै० सं० २।२।६।५)। यावद् वयसां विरावस्तावदेवोत्थाय निर्वपेदित्यर्थः।

—वस् (वस निवासे)। नाचार्यस्यानपाकृत्य प्रवासं प्राज्ञः कुर्वीत (भा० उ० ४४।१५)। प्रवास आश्रमान्तरे स्थितिः।

—वह् (वह प्रापणे)। प्रवहतु हृदये नः प्राणनाथः किशोरः (कृष्णामृते १३)। प्रवहतु प्रकर्षेण वर्तताम्। तप्तां भूमिमपास्य च प्रवहणं मन्ये क्वचित्संस्थितम् (मृच्छ० ८।११)। कर्णीरथः प्रवहणं डयनं च समं त्रयमित्यमरः।

—वल्ह् (वल्ह् परिभाषणहिंसाच्छादनेषु)। प्रवल्हिकाभिर्देवा असुरान् प्रवल्ह्याथैनानत्यायन् (ऐ० ब्रा० ६।३३)। प्रवल्हनं निर्हृदयं सान्त्वं वचनमुच्यत इति षड्गुरुशिष्यः।

—वी (गतिव्याप्तिप्रजनकान्त्यसनखादनेषु)। छन्दोभिरेवास्मै पशून् प्र जनयति···प्रैव तेन वापयति (तै० सं० ३।४।६।३०)। प्रवापयति गर्भं ग्राहयति। प्रजने वीयतेः (पा० ६।१।५५)। पुरोवातो गाः प्रवापयति (वृत्तौ)। उक्तोऽर्थः।

—वृज् (वृजि वृजी वर्जने)। न बृहत्या वषट् कुर्यात् पशूनामप्रवर्गाय (जै० ब्रा० १।१२०)। प्रवर्गो नाशः।

—वृत् (वृतु वर्तने)। उद्यानस्थं वरं द्रष्टुं प्रावर्तत निजात् पुरात् (कथा० ३५।१३६)। प्रावर्तत प्रातिष्ठत। प्रवृत्तं हि मलं स्निग्धो विरेको निर्हरेत् सुखम् (अष्टाङ्ग० सूत्र० १८।५५)। प्रवृत्तमीषत् पतितम्। तदेतत्पूर्णमप्रवर्ति पूर्णामप्रवर्तिनीं श्रियं लभते (छां० उ० ३।१२।६)। अप्रवर्ति अचलं स्थिरम्।

—वृह् (वृहू उद्यमने)। प्रजापतिर्लोकानभ्यतपत्। तेषां तप्यमानानां रसान्प्रावृहत् (छां० उ० ४।१७।१)। प्रावृहत् उदहरत्। यमेवामुं त्रय्यै विद्यायै

तेजो रसं प्रावृहत् (शां० ब्रा० ६।११)। उक्तोऽर्थः। मर्त्यः प्रवृह्य धर्म्यम् (कठोप० १।२।१३)। धर्मसाधनं धर्मसाध्यं वेदं शरीरं प्रवृह्य पृथक् कृत्वा। प्रारब्धावसानसमये परित्यज्येति यावत्।

—वे (वेञ् तन्तुसन्ताने। अथो दिश्येव दिशं प्र वयति (तै० सं० ५।७।६। ३९)। प्रवयति प्रोतां करोति। कोणासु दिक्षु अन्यासामनुप्रवेशाद् दिशः प्रोता इत्युच्यन्ते।

—व्ली (व्ली वरणे)। प्रजापतिर्यज्ञमसृजत सोऽस्मात्सृष्टः प्राङैत् स प्र यजुर्व्लीनात् (तै० सं० ६।१।२)। प्राव्लीनात् आच्छादयत्।

—शिष् (शिष्लृ विशेषणे)। ओष्ठ एनयोः साधारणो भवति तं गृहपतिरेव प्रशिष्यात् (ऐ० ब्रा० ७।१)। प्रशिष्यात् प्रविभज्य दद्यात्।

—शॄ (शॄञ् हिंसायाम्)। प्र पर्वाणि जातवेदः शृणीहि (ऋ० १०।८७।५)। प्रशृणीहि छिन्द्धि। प्रशब्दः प्रविवेके पार्थक्ये।

—श्रि (श्रिञ् सेवायाम्)। अथैनं प्राञ्चं प्रश्रित्य विस्रस्य राजानं ग्रावाणमुपांशुसवनमभि मिमीते (बौ० श्रौ० ७।५)। प्रश्रित्य निधाय।

—श्रु (श्रु श्रवणे)। प्राश्रावयं शवसा तुर्वशं यदुम् (ऋ० १०।४९।८)। प्राश्रावयं प्रश्रुतौ विश्रुतावकार्षम्।

—श्वस् (श्वस प्राणने)। ये के चास्मच्छ्रेयांसो ब्राह्मणाः, तेषां त्वयाऽऽसनेन प्रश्वसितव्यम् (तै० उ० १।११।३)। आसनदानेन विनयेन वर्तितव्यमिति गोपालानन्दस्वामी। प्रश्वसनं प्रश्वासः श्रमापनयः। आसनदानेन तेषां श्रमोऽपनेतव्य इति तु शङ्करः।

—सञ्ज् (षञ्ज सङ्गे)। तत्पक्षस्थोऽपि यो न प्रसजति यजने (विश्व० च० २९।३६६)। प्रसजति व्याप्रियते। हितं च पथ्यं च नयप्रसक्तं···वाक्यम् (रा० ४।३०।१९)। नयप्रसक्तं नीतियुक्तम्। प्रसज्य रामेण च वैरमुत्तमम् (रा० ३।५४।३०)। प्रसज्य बद्ध्वा समुत्पाद्य। यत्र द्वौ प्रसङ्गावन्यार्थावेकस्मिन्युगपत् प्राप्नुतः (पा० १।४।२ सूत्रे वृत्तौ)। प्रसज्येते विधीयेते इति प्रसङ्गौ विधी इति न्यासः। सप्रासङ्गं च शकटं सधान्यं वस्त्रसंयुतम् (भा० अनु० ६४।१९)। प्रासङ्गो धान्यादिपिधानयोग्यं चतुरस्रम् इति नीलकण्ठः।

प्रासङ्ग इत्यत्र **उपसर्गस्य घञ्यमनुष्ये बहुलम्** (पा० ६।३।१२२) इत्यनेनो-पसर्गस्य दीर्घः ।

**—सह्** (**षह मर्षणे**) । विषादो यं प्रसहते विक्रमे समुपस्थिते (रा० ४।६४।१०) । **प्रसहतेऽभिभवति । यो विषादं प्रसहत इति पाठान्तरम् । तन्नादेयमनिष्टार्थगतेः ।** काककङ्ककुररचाषभासशशघात्युलूकचिल्लिश्येनगृध्रप्रभृतयः प्रसहाः (सुश्रुत० सू० ४६।७२) । **प्रसह्य भक्षयन्तीति प्रसहाः ।**

**—सि** (**षिञ् बन्धने**) । कण्ठं तस्य प्रसिनु रभसाद् बाहुपाशद्वयेन (सा० द० ७।१८ व्याख्यायां रामचरणतर्कवागीशकृतायामुद्धृतः श्लोकांशः) । **प्रसिनु प्रसिनीहि बधान ।** त्रिर्यातुधानः प्रसितिं त एतु (ऋ० १०।८७।११) । **प्रसितिर्बन्धनम् ।** कृणुष्व पाजः प्रसितिं न पृथ्वीम् (शां० ब्रा० ८।४) । **प्रसितिः पाश्या मृगबन्धनहेतुभूता । पाजस्तेजः ।** प्रसितोत्सुकाभ्यां तृतीया च (पा० २।३।४४) । **प्रसितः=प्रसक्तः=यस्तत्र नित्यमेवावबद्ध इति वृत्तिः ।**

**—सिच्** (**षिच क्षरणे**) । क्षतोरस्कः प्रसेकी (सुश्रुत० १।४६।४९५) । **प्रसेकी लालास्रावी ।**

**—सिध्** (**षिध संराद्धौ, षिध गत्याम्**) । न प्रसिध्यन्ति कर्माणि क्रियतामविचारणात् (हरि० २।५१।२१) । **प्रसिध्यन्ति सिध्यन्ति । अनर्थकः प्रशब्दः । क्रियतां कुर्वताम् ।** ताभ्यां युक्त्वा प्रासेधत् न उदजयत् (पञ्च० ब्रा० १४।३।१३) । **प्रासेधत् प्रागच्छत् प्रातिष्ठत ।** एतौ मे गावौ प्रमरस्य युक्तौ मो षु प्र सेधीर्मुहुरिन्ममन्धि (ऋ० १०।२७।२०) । **मा प्रसेधीः=मा स्म अपाजः, माऽपगमय ।** धनुष्कोणानिषुणा व्रात्याः प्रसेधमाना यन्ति (लाट्या० श्रौ० ८।६।८) ।

**—सु** (**षुञ् अभिषवे**)। तस्मात्तव सुतं प्रसुतमासुतं कुले दृश्यते (छां० उ० ५।१२।१) । **एकाहः अहीनः सत्रम् इति विभागः कर्मणाम् । तेषु प्रवर्तमानं सोमाभिषवणं क्रमात् सुतादिशब्दैरभिधीयते ।**

**—सू** (**षू प्रेरणे**) । अर्षन्त्वापस्त्वयेह प्रसूताः (ऋ० ३।३०।६) । **प्रसूताः प्रेरिताः ।**

**—सू** (**षू प्राणिप्रसवे, षूङ् प्राणिगर्भविमोचने**) । बृहस्पतिप्रसूतो यजमानः (तै० सं० १।६।१।१) । **प्रसूतोऽभ्यनुज्ञातः । षु प्रसवैश्व-**

यंयोरित्यत्र धात्वर्थनिर्देशे प्रसवो ऽभ्यनुज्ञानमाहेति विवरीतारः। इदमहं बृहस्पतेः सदसि सीदामि प्रसूतो देवेन सवित्रा (का० श्री० २।२।१)। उक्तोर्थः। प्रवात्सु घोरेष्वपि मारुतेषु न ह्यप्रसूतास्तरवश्चलन्ति (सौन्दर० १६।१०)। अप्रसूता अजाता अनुद्भूताः। संस्कृतं प्रसवं याति (भा० वन० ३।८२)। संस्कृतं पक्वमन्नं वर्धत इत्यर्थः।

—सृ (सृ गतौ)। प्रसृतश्च गजः श्रीमानौपवाह्यः प्रतीक्षते (रा० २।१५।११)। प्रसृतः=स्रवन्मदः। आश्चर्यं भोः प्रसारणं कृतं गणिकाया नानापक्षिसमूहैः (मृच्छ० ४)। इतस्ततः प्रसृता दृश्यन्ते पक्षिसमूहा इत्यर्थः। सर्वतो वनाजीवः प्रसारः (कौ० अ० १०।२।५)। प्रसारो नाम सर्वतः स्थितेभ्यो वनेभ्य आजीवोपकरणसङ्ग्रहणम्।

—सृज् (सृज विसर्गे)। प्रान्तर्ऋषयः स्थाविरीरसृक्षत (ऋ० ६।८६।४)। अन्तः पात्रमध्ये प्रासृक्षत प्रसृजन्ति क्षिपन्ति। ग्राम्यान्पशून् आलभन्ते प्रारण्यान् सृजन्ति (पञ्च० ब्रा० २१।४।१३)। प्रसृजन्ति उत्सृजन्ति। नेद्रक्षसां भागेन दैवं भागं प्रसृजानि (शां० ब्रा० १०।४)। रक्षोभागात् परेण स्थापयामि। मुखे प्रस्रक्ष्यमाणो नाम प्र ब्रुवीत (आश्व० गृ० ३।१०।१)। समावर्तनकाले विस्रक्ष्यमाण इत्यर्थः। त्वत्प्रसृष्टं माऽभिवदेत्प्रतीतः। (कठोप० १।१।१०)। त्वत्प्रसृष्टं त्वया विसृष्टम्। यथापुरस्ताद् भविता प्रतीत औद्दालकिरारुणिर्मत्प्रसृष्टः (कठोप० १।१।११)। मत्प्रसृष्टः=मया प्रेरितः। अन्येषां च प्रसृष्टस्त्रीकाणाम् (कौ० अ० ३।४।२२)। प्रसृष्टा दत्तकामचारानुज्ञाः। प्रसृष्टा अनुमन्त्रयेत (अर्घ्या अपः)। (आश्व० गृ० ४।७।१३)। प्रसृष्टा निनीताः।

—स्कन्द् (स्कन्दिर् गतिशोषणयोः)। प्राणं वा एते स्कन्दन्ति ये दिवा रत्या संयुज्यन्ते (प्रश्नोप० १।१३)। प्रस्कन्दन्ति विकिरन्ति। स्नेहप्रस्कन्नमनसा मयैतत् समुदीरितम् (रा० ५।३८।७)। प्रस्कन्नं शिथिलमिति भूषणकारः।

—स्तु (ष्टुञ् स्तुतौ)। जग्मुस्तत्र ततो देवीं विष्णुमायां प्रतुष्टुवुः (दुर्गा० ५।७)। प्रतुष्टुवुः स्तोतुमारेभिरे। प्रशब्द आदिकर्मणि। अनर्थको वा। गत्वा ननाम तं कृष्णं प्रतुष्टाव यथागमम् (ब्रह्मवै० पु० ४।१५।६१)। उक्तोऽर्थः। कथयितुं प्रास्तावीत् (हर्ष०)। प्रास्तावीत् प्रारब्ध। बृहस्पतिरभिकनिक्रदद् गा उत प्रास्तौत् (तै० सं० ३।४।११।४३)। मेघसन्निधानादिना वृष्ट्या ऽऽभि-

**मुख्यवतीः कृतवानित्यर्थ इति भट्टभास्करः।** दृष्ट्वा माद्यति मोदते ऽभिरमते प्रस्तौति विद्वानपि (प्र० च० ४।८)। **प्रस्तौति पुनः पुनस्तदेवारभते।** (भूतेश्वरम्) द्वैतध्वान्तमपास्य यान्ति कृतिनः प्रस्तौमि तं पूरुषम् (प्र० च० ६। १४। **प्रस्तौमि तात्पर्येण प्रतिपादयामि।** यथेप्सितं प्रस्तुत कर्म धर्म्यम् (भट्टि० २।२८)। **प्रस्तुत प्रारभध्वम्।** **पुस्तके त्वन्यथा गृहीतमन्यथा च व्याख्यातम्। तच्छोध्यम्।** तत्रोपमन्त्रितस्तेन प्रस्तुतो भोक्तुम् (बृ० क० म० वेताल १।१७०)। **प्रस्तुतः प्रारब्धः। प्रवृत्तः।** गन्तुं किं युज्यते पुत्रि प्रस्तावेऽत्र भयावहे (बृ० क० को० ६७।२५)। **प्रस्तावो ऽवसरः।**

**—स्था (ष्ठा गतिनिवृत्तौ)।** प्र सीता जीरो अध्वरेष्वस्थात् (ऋ० ७। ६२।२)। **प्रास्थात् प्रातिष्ठिपत्। पुरस्तादुत्तरवेदिं प्रापितवानिति सायणः।** अग्नीषोमा हविषः प्रस्थितस्य वीतम् (तै० सं० २।३।१४।२)। **प्रस्थितस्य उपस्थितस्य प्रारब्धस्य वा।** कोदण्डो गिरिराज एष भुजगप्रष्ठस्तदीयो गुणः (त्रिपुर० १।७ )। **प्रष्ठोऽग्रगामी।** प्रष्ठो ऽग्रगामिनि ( पा० ८।३।९२ इत्यत्र निपातितम्।

**—स्ना (ष्णा शौचे)।** यो वा अप्लवः समुद्रं प्रस्नाति न स तत उदेति(पञ्च० ब्रा० ४।५।१७)। **प्रस्नाति अवगाहते प्रविशति।** मा नो देवानां विशः प्रस्नातीरिवोस्राः कृशं न हासुरघ्नियाः (तै० सं० २।६।११।२)। **प्रस्नातीः प्रस्नुवतीः प्रस्नुताः।** करस्नौ बाहू कर्मणां प्रस्नातारौ (नि० ६।१७।१)। **प्रस्नातारौ निर्वर्तयिताराविति दुर्गः।**

**—स्नु (ष्णु प्रस्रवणे)।** **प्रास्मा इमे** लोकाः स्नुवन्ति (तै० सं० २।१।४। ८)। **सस्नेहं वसूनि दुहन्तीत्यर्थः।**

**—हा (ओहाक् त्यागे)।** नीडं शकुन्ता इव जातपक्षाश्छन्दांस्येनं प्रजहत्यन्तकाले (भा० उ० ४३।५)। **प्रजहति विजहति। प्रशब्दः प्रकर्षे।** आयुर्मा प्रहासीत् (तै० ब्रा० १।२।१।२७)। **मा प्रहासीत् मा त्याक्षीत्।**

**—हि (हि गतौ वृद्धौ च)।** प्रहितोऽश्वोऽश्वतर उपतिष्ठति (जै० ब्रा० १।३८)। **प्रहितः प्राजितः।** इयमद्य निशा पूर्वा सौमित्रे प्रहिता वनम्। वनवासस्य···(रा० २।४६।२)॥ **प्रहिता गतप्रायेति गोविन्दराजः। एवं वनमित्यनन्वयं तिष्ठति। वनं प्रहिता वने प्राप्तेति रामानुजीयं व्याख्यानम्। एवमपि वनमिति द्वितीया नोपपत्तिमती भवति।** अहं तु मन्ये वनं प्रहिता

वयम् इति मध्येवाक्यमवान्तरवाक्यं प्रक्षिप्तम् इति । इत ऊती वो अजरं प्रहेतारमप्रहितम् । आशुं जेतारं हेतारं रथीतमम्…(अथर्व० २०।१०५।३) ॥ **प्रहेतारम् प्रेरयितारम् । अप्रहितम् अन्येनाप्रेरितम् ।**

**—हु (हु दानादनयो:, प्रीणन इत्येके)** । प्रहुतो भौतिको बलिः (मनु० ३।७४) । **प्रहुत इति भूतबलेः संज्ञान्तरं मुन्यन्तरकृतम् ।**

**— हृ (हृञ् हरणे)** । तस्माद्दक्षणया पशवोऽङ्गानि प्रहरन्ति (तै० सं० ५।२।७।४०) । **प्रहरन्ति गमनादिषु क्षिपन्ति । (शयनादिषु चोपसंहरन्ति) ।** ततः शिलां च महतीं प्रगृह्य दनुजः किल । भ्रामयित्वा दशगुणं प्राहरत् केशवोरसि (हरि० ३।१२३।१०-११) ॥ **प्राहरत् प्रास्यत्, प्राक्षिपत् ।** पादाविव प्रहरन् अन्यमन्यं कृणोति पूर्वमपरं शचीभिः (ऋ० ६।४७।१५) । **प्रहरन् प्रक्षिपन् ।** स्वतन्त्रेण त्वया शम्भो सर्वगर्वप्रहारिणा (शिव पु० २।४। १५।७०) । **प्रहारिणा=हारिणा । अस्थाने प्रः ।** ताविन्द्रो नाशकदभि वज्रं प्रहर्तुम् (शां० ब्रा० ३।६) । **प्रहर्तुं प्रासितुम् ।**

**—ह्वे ( ह्वेञ् स्पर्धायां शब्दे च )** । प्रति त्यं चारुमध्वरं गोपीथाय प्र हूयसे (ऋ० १।१९।१) । **प्रहूयसे आकार्यसे, निमन्त्र्यसे ।** तिष्ठन्नासीनः प्रह्वो वा नियमो यत्र नेदृशः । तदासीनेन कर्त्तव्यं न प्रह्वेन न तिष्ठता (गो० स्मृ० १।१०) ॥ **पुस्तके प्रथमार्धस्य न्यासः । उत्तरार्धन्यासाय कृत्स्नः श्लोक आवर्त्यते विवक्षितार्थस्य कात्स्न्र्याय ।**

## प्राधि (प्र+अधि)

**—इ (इङ् अध्ययने)** । सममब्राह्मणे दानम् । प्राधीते शतसाहस्रम्… ( मनु० ७।८५ ) । **प्राधीते प्रक्रान्ताध्ययने । आदिकर्मणि निष्ठा । प्रश्चादिकर्मणो द्योतकः ।** उदिते प्राध्ययनम् (शां० गृ० २।९।३) **प्राध्ययनमध्ययनारम्भः ।** अधीयीरंश्चेद् अहोरात्रमुपरम्य प्राध्ययनम् (शां० गृ० ४।६।९) । **उक्तोऽर्थः ।**

## प्राङ् (प्र+आङ्)

**—रुह् (रुह बीजजन्मनि)** । ते सुवर्गं लोकमा प्रारोहन् (तै० ब्रा० १।१। २) । **प्रारोहन्=आरोढुमारभन्त ।**

—लम्ब् (अबि रबि लबि शब्दे, लबि अवस्रंसने च)। किन्तु रणप्रकर्ष-विगलत्सद्वीररमुण्डोत्करप्रालम्बप्रतिकर्मसम्भृतमहं सम्पादयिष्ये मुहुः (किरात० व्या० )। प्रालम्बमृजुलम्बि स्यात् कण्ठादित्यमरः।

—वृत् (वृतु वर्तने)। प्रावर्तनं च कूपेषु येन सिञ्चेत् प्रवाटिकाम् (वराह-पु० १७०।३०)। प्रावर्तनमरघट्टः स्यात् (?)।

## प्रोद् (प्र+उद्)

—वृत् (वृतु वर्तने)। एतस्मिन्नन्तरे देवी प्रोद्वर्तयत गात्रकम्। उद्वर्तन-मलेनाथ नरं चक्रे गजाननम् (स्कन्द पु० मा० कौ० २।२७।४)॥ उद्वर्तनोत्सा-दने द्वे क्लीबे इत्यमरः। प्रोद्वर्तयत गात्रकम्=शरीरमलं मृदित्वोदसादय-दपागमयत्। प्रोद्वर्तयद् इत्यत्राण्न कृतः, स पुराणकारस्य कामकारः। प्रशब्द-श्चातिरिक्तः। उच्छब्दस्त्वपरिहार्यः।

## प्रणि (प्र+नि)।

—धा (डुधाञ् धारणपोषणयोः)। औषधयुक्तां वर्तिं प्रणिदध्यात् (सुश्रुत० १।५।१३)। प्रणिदध्यात् प्रवेशयेत्। तथात्मा प्रणिधीयताम् (भा० वि० ३७।१७)। चित्तं सावधानं क्रियतामित्याह। पूर्वं प्रणिहिता वा द्वाराणि दद्युः (कौ० अ० )। प्रणिहिता निभृतमवस्था-पिताः। एकदा खल्वयं प्रबोधकालं प्रणिधाय सुप्तः प्रणिधानवशात् प्रबुध्यते (न्याय० २।१।२६ भा०)। प्रणिधाय सङ्कल्प्य। अमुकसमये मयोत्थातव्य-मिति। ततः प्रणिहिताः सर्वा वानर्योऽस्य वशानुगाः (रा० ४।२५।३४)। प्रणिहिताः=आप्ताः। काममयं वृथापलितो हतबुद्धिरप्रणिहितः सरित्सुतः (शिशु० १५।१६)। अप्रणिहितो ऽनवहितः। शिशुपालस्योक्तिरियम्। एतौ वनमिदं दुर्गं वालिप्रणिहितौ ध्रुवम् (रा० ४।२।१६)। प्रणिहितौ प्रणिधी। चारौ।

## प्रवि (प्र+वि)

—चर् (चर गतिभक्षणयोः)। द्वादशान्नप्रविचारानेतानेव प्रचक्षते (सुश्रुत० उत्तर० ६४।२२)। प्रविचारान् भेदान् विशेषान्।

## प्रसम् (प्र+सम्)

—चक्ष् (चक्षिङ् व्यक्तायां वाचि) । तान् (रागद्वेषमोहान्)पूर्वं प्रसंचक्षीत (न्या० ४।२।२ सूत्रभाष्ये) । प्रसंचक्षीत तत्त्वतो जानीयात् ।

## परा

—अय् (अय गतौ) । यो वां प्राणो बलं यच्च या च वो वैरिता ऽसुराः । तत्कृत्वा हृदये चैव पलायध्वमितः पुरम् (मात्स्य पु० १३९।६) । पलायध्वं शीघ्रं धावत ।

—अस् (असु क्षेपे) । देवाँ उप प्रैत् सप्तभिः परा मार्तण्डमास्यत् (ऋ० १०।७२।९ ) । परा स्थालीरस्यन्त्युद् वायव्यानि हरन्ति । तस्मात् स्त्रियं जातां परास्यन्ति उत् पुमांसं हरन्ति (तै० सं० ६।५।१०।३८) । जातां परिपक्वाम् । परास्यन्ति परस्मिन्कुले ददतीति भट्टभास्करः । उद्धृतचरीयं श्रुतिः पुस्तके, केवलं व्याख्यायामभिनिवेशविशेषनिदर्शनाय पुनरुदाह्रियते । परासिः परकुले दाने वर्तत इति महती समुत्प्रेक्षा । पूर्ववाक्यार्थाननुगतश्चायमर्थं इति च नेक्ष्यते ।

—इ (इण् गतौ) । परेतकल्पा हि गतायुषो नरा हितं न गृह्णन्ति सुहृद्भिरीरितम् (रा० ३।४१।२०) । परेतकल्पा मृतप्रायाः । मा वयमेतमवहाय परागाम ( काठक० ७।१२।५० ) । एतमग्निं पृष्ठतो विहाय मा स्म दूरे गच्छामेत्याह ।

—क्रम् ( क्रमु पादविक्षेपे ) । पराक्रान्तं चात्र सूरिभिरिति ग्रन्थभूयस्त्वभयादुपरम्यते (सर्वद० बौ० । पराक्रान्तं सोत्साहं प्रगल्भं च प्रवृत्तमित्युपचरितोऽर्थः । न हि रामं पराक्रम्य जीवन् प्रतिनिवर्तते (रा० ३।४२।३) । पराक्रम्य=आक्रम्य=अभियाय=प्राप्य ।

—क्रुश् (क्रुश आह्वाने रोदने च) । आर्येणेव पराक्रुष्टं हा सीते लक्ष्मणेति च (रा० ३।५९।७) । पराक्रुष्टमुच्चैराक्रन्दितम्, अत्यन्तमुद्घोषितम् ।

—गम् ( गम्लृ गतौ ) । अग्रहीज्जङ्घयोः पश्चात्तां चाचान्तपरागतम् (कथा० १२१।२७) । परागतं प्रत्यावृत्तम् ।

—जि ( जि जये अभिभवे च ) । येन जयासि न पराजयासै ( तै० ब्रा० २।४।७।८) । न पराजयासै पराजयं नाप्स्यसि । तल्पसद्यं मा पराजेषि (तै०

ब्रा० १।२।६।६) । **मा पराजेषि मा स्म हारयम् । तल्पसद्यं तल्पावस्थानम् । धनिकत्वमिति यावत् ।** अविद्यो दुर्बलः श्रीमान् हिरण्यममितं मया । अजेयो बलदेवोऽयमक्षद्यूते पराजितः (हरि० २।६१।३२) ॥ **पराजितो हारितः । द्विकर्म्मको जिः । अप्रधाने कर्मणि लकारः ।** भ्रष्टाभरणकौशेयां शोकवेगपराजिताम् ( रा० ४।५६।२१ ) । **पराजितामभिभूताम् ।** भर्तृशोकपराजिता (रा० ६।११०।५) । **उक्तोऽर्थः ।** गावो वर्षपराजिताः (हरि० २।१८।२५) । **वर्षेण वृष्ट्या उद्वेजिता इत्याह ।**

**—दा (डुदाञ् दाने) ।** मा नो अर्यो अनुकामं परा दाः (ऋ० ८।४८।८) । **यथाकाममरेर्मा नोऽर्पिपः ।** य उशता मनसा सोममस्मै सर्वहृदा देवकामः सुनोति । न गा इन्द्रस्तस्य परा ददाति (ऋ० १०।१६०।३)॥ **न पराददाति न नाशयति । परादानं नाश इति सायणः ।** यदिष्टं यत्परादानं यद् दत्तं या च दक्षिणा (तै० सं० ५।७।७।३१)। **परादानं नात्यादरेण दानमिति भट्टभास्करः ।** मा भूम हरिवः परादै ( तै० सं० १।६।१२ ) । **अन्येभ्यो दानं परादाः । क्विप् चेति क्विप् । परादानाय प्रत्याख्यानाय । त्वया त्याज्या मा भूमेत्यर्थः ।**

**—नी (णीञ् प्रापणे) ।** ये गोपतिं पराणीयाथाहुर्मा ददा इति (अथर्व० १२।४।५२) । **पराणीय परतो नीत्वा । अर्थनिर्देशायेहानुवादः ।**

**—ब्रू (ब्रूञ् व्यक्तायां वाचि) ।** यद् ब्राह्मणायाध्याहात्मनेऽध्याह । यद् ब्राह्मणं पराहात्मानं पराह (तै० सं० २।५।११।९) । **पराह=अनादरेणाह ।**

**—भू ( भू सत्तायाम् ) ।** प्रान्यानि पात्राणि युज्यन्ते नान्यानि यानि पराचीनानि प्रयुज्यन्ते तान्यन्वोषधयः परा भवन्ति यानि पुनः प्रयुज्यन्ते तान्यन्वोषधयः पुनरा भवन्ति ( तै० सं० ६।५।११ ) । **पराभवन्ति फलपाके विनश्यन्ति ।** न यज्ञः पराभवति न यजमानः (तै० सं० ६।१।५) । **न पराभवति न नश्यति ।**

**—मृश् (मृश आमर्शने, आमर्शनं स्पर्शः) ।** वेदिमिव परामृष्टाम् (रा० ५।१९।१५ ) । **परामृष्टां दूषितां शूद्रादिभिः ।** हस्तिहस्तपरामृष्टामाकुलामिव पद्मिनीम् (रा० ५।१९।१६) । **पुस्तके भारते वनपर्वणि दृष्टोऽयं श्लोकार्धं इत्युक्तम् । श्रीरामायणेपि तथाभूतो न्यास इति निदर्शनायेह पुनरुपन्यासः ।** दृष्ट्वा सीतां परामृष्टां दीनां दिव्येन चक्षुषा (रा० ३।५२।१३) ।

परामृष्टामपहृताम् । वैदेह्याश्च परामर्शो रक्षोभिश्च समागमम् (रा० ६।१००।४६) । परामर्शो बलाद् ग्रहणम् । तदेष ब्राह्मणः करोतु संवादिनोः स्वप्नयोरर्थपरामर्शम् (नलच० तृ० उ०) । परामर्शश्चिन्ता । तदलमिदानीमलीकपरामर्शमन्थरतया ( त्रिपुर० १ ) । परामर्शः प्रमार्जनं प्रोञ्छनम् ।

—वप् (डुवप् बीजसन्ताने) । यत्त्वा क्रुद्धः परोवप मन्युना यदवर्त्या (तै० सं० १।५।३।१-२) । परोवप उद्वासितवानस्मि । परापूर्वस्य वपते लिट्युत्तमैकवचने रूपम् । तासां सृष्टानां परावापाद् अबिभेत् । ...नास्य वित्तं परोप्यते य एवं वेद (जै० ब्रा० १।१०४) । परोप्यते विकीर्यते । नश्यतीति यावत् । परावापः परासनम् ।

—वृज् (वृजि वृजी वर्जने) । मा नो अस्मिन्महाधने परावर्क् (तै० सं० २।६।११।३) । मा परावर्क् मा पराणैषीः, मा परिहार्षीः, मा हासीः ।

—वृत् ( वृतु वर्तने ) । या गतिर्यज्ञशीलानामाहिताग्नेश्च या गतिः । ...अपरावृत्तिरस्तु ते ॥ अपरावृत्ति र्मोक्षः । यस्तु भीतः परावृत्तः सङ्ग्रामे हन्यते परैः । परावृत्तः पराङ्मुखः ।

—सिच् (षिच क्षरणे) । मा नो गयमारे अस्मत् परा सिचः (ऋ० ६।८१।३) । माऽस्मत् परासिचः=दूरे मा प्रेरय । गयं धनम् । मा परासेचि मद्धनम् (शां० गृ० ३।४।४) । मा परासेचि मा परासि ।

—सू (षू प्रेरणे) । पर ऋणा सावीरध मत्कृतानि माहं राजन्नन्यकृतेन भोजम् (ऋ० २।२८।९) । परासावीः=पराचीनं प्रेरय=अपाकुरु । अनृणो यथा स्याम् ।

—हन् ( हन हिंसागत्योः ) । इत्येतच्च भवद्वाक्यं परस्परपराहतम् (तत्त्वसं० ११४७) । पराहतं व्याहतं संकुलम् ।

## अप

—अन् ( अन प्राणने ) । दक्षिणां प्रतिग्रहीष्यन्त्सप्तदशकृत्वोऽपान्यात् (तै० सं० २।३।२।१) । वायोरन्तराकर्षणरूपं निश्वासं कुर्यादित्यर्थः । प्राण्यादपान्यात् (जै० ब्रा० १।१०४) । उक्तोऽर्थः ।

—इ (इण् गतौ)। अपेतयुद्धाभिनिवेशसौम्यः (शिशु० ३।१)। अपेतो वीतो युद्धेऽभिनिवेश आग्रहः। धर्मपथ्यर्थन्यायादनपेते (पा० ४।४।९२)। अनपेतमपृथग्भूतम्। उदवहृदनवद्यां तामवद्यादपेतः (रघु० ७।७०)। उक्तोऽर्थः। सूर्यापाये न खलु कमलं पुष्यति स्वामभिख्याम् (उत्तर मेघ० २०)। सूर्यापाये सूर्यस्यापगमे। तदनेन पापबुद्धिनोपायश्चिन्तितो नापायः (पञ्चत०)। अपायो हानिः क्षतिः।

—उम्भ् (उम्भ पूरणे)। तमन्तरेव सन्तं दाम्ना ऽपौम्भन् (तै० सं० २।४।१३।१)। अपरुद्धशक्तिकाङ्गमबध्नन्निति भट्टभास्करः।

—ऊह् (ऊह वितर्के)। ऋद्धिमन्तमधिकर्द्धिरुत्तरः पूर्वमुत्सवमपोहदुत्सवः (रघु० १९।५)। अपौहत्—अपानुदत्। प्रत्यादिशदित्यर्थः।

—ऋ (ऋ गतौ)। ऽप या माता ऋणुते व्रजं गोः (ऋ० ५।४५।६)। अपार्णुते ऽपावृणोति। अरण्यमपार्णं ग्रामात् (नि० ९।२९)। अपार्णमपगतम्।

—कर्ण् (कर्ण इति धात्वन्तरमित्येकीयं मतम्, अनिर्दिष्टार्थम्)। अपकर्ण्य महीपालो मन्त्रिणो मन्त्रकोविदान् (बृ० क० को० ८५।४)। अपकर्ण्य =अनाकर्ण्य।

—कृ (डुकृञ् करणे)। विपतां निषेवितमपक्रियया (शिशु० ९।६८)। अपक्रिया विपरीतः प्रयोगः। पुरा वाराहकल्पे ते यन्मयाऽपकृतं शिरः (वामनपु० ४९।२०)। अपकृतमपहृतमपाकृष्टं छिन्नम् इत्यनर्थान्तरम्।

—कृष् (कृष विलेखने)। ये धनादपकर्षन्ति नरं स्वबलमास्थिताः (भा० उ० ७२।२४)। धनाद्विना कुर्वन्ति, पृथक् कुर्वन्ति। यावदस्य पुनर्बुद्धिं विदुरो नापकर्षति (भा० वन० ७।४)। नापकर्षति न हरति। ऋतवः संपलाय्य पद्गृहीतमपकर्षन्ति (जै० ब्रा० १।१८)। अपकर्षन्ति अपगच्छन्ति। पित्र्यं हि राज्यं विदितं नृपाणां ममापकृष्टं धृतराष्ट्रपुत्रैः (भा० उ० १।१५)। अपकृष्टमाच्छिन्नमामृष्टमपहृतम्। मोहोद्वेगौ स्वनः श्रोत्रे गात्राणामपकर्षणम् (सुश्रुत० उत्तर० ६२।४)। अपकर्षणं दुर्बलीभवनम्।

—क्रम् (क्रमु पादविक्षेपे)। अपेहि मनसस्पते ऽप क्राम परश्चर (ऋ० १०।१६४।१)। अपक्राम देशान्तरं गन्तुं पादौ विक्षिप। श्रुतवन्तं नापक्रमेत्। नातिक्रम्य यायात्। तथा च (शां० गृ० १।२।४) इत्यत्र न श्रुतमतीयादिति

स्मर्यंते । युगापक्रमणे सर्वे भविष्यन्ति द्विजातयः (हरि० ३।३।२६) । युगापक्रमणे युगात्यये युगक्षये । कलिप्रारम्भ इत्यर्थः ।

—क्री (डुक्रीञ् द्रव्यविनिमये) । अपक्रीताः सहीयसी र्वीरुधो या अभिष्टुताः (अथर्व० ८।७।११) । अपक्रीताः=क्रीताः । अपशब्दो नान्तरमर्थं करोति ।

—क्षिप् ( क्षिप प्रेरणे ) । सं ते (यजुः ११।३९ ) इति वातमपक्षिपति (का० श्रौ० १६।३।२) । अपक्षिपति अधः क्षिपति । अपक्षिपन्ति स्तुग्भाण्डान् (रा० २।११६।१७) । अपक्षिपन्ति विप्रकिरन्ति, दूरे क्षिपन्ति । यतो न शक्नुयादाक्षिकवदस्यापक्षेपेण प्रहर्तुम् (कौ० अ० १२।२।२१) । अपक्षेपोऽन्यायः क्षेपो ऽक्षाणाम् ।

—गुर् (गुरी उद्यमने) । श्मशानसञ्चयोपि गर्त उच्यते । गुरतेरपगूर्णो भवति (नि० ३।५।२) । अपगूर्ण उच्यत उत्थितः ।

—गुह् (गुहू संवरणे) । अपागूहन्नमृतां मर्त्येभ्यः (सरण्यूम्) (ऋ० १०।१७।२ ) । अपागूहन् संवृतवन्तः । मा वर्पो अस्मद् अप गूह एतत् ( ऋ० ७।१००।६)। मापगूहः संवृतं मा कुरु । इन्द्राग्नी वा एतस्य प्रजामप गूहतः (मै० सं० २।२।१।१) । पदं न गोरपगूढं विविद्वान् (ऋ० ४।५।३) । अपगूढमत्यन्तं गूढं तिरस्कृतं तिरोहितम् ।

—गॄ (गॄ निगरणे) । :सुवर्णं खादित्वाऽपगिरति (ऐ० आ० ३।२।४) । अपगिरति उद्गिरति वमति ।

—ग्रह् (ग्रह उपादाने) । अंशूनप गृह्णाति ( तै० सं० ६।४।५।१९ ) । अपगृह्णाति सङ्घातादपादत्ते । आहुतिभिरेवैनमप गृह्णाति ( तै० सं० ५।१।१।२) ।

—चर् (चर गतिभक्षणयोः) । रसेन स्वपण्यान्यपचारयेयुः (कौ० अ० १२।४।८ ) । अपचारयेयुः संनयेयुः संगमयेयुः । ते ह्येनमपचरन्तमपि न त्यजन्ति सगन्धत्वात् (कौ० अ० १।८।१७) । अपचरन्तमपराध्यन्तं दुर्व्यवहरन्तम् । यद्यपि तावदयं पराशब्दो दृष्टापचार उपसर्गश्चानुपसर्गश्च (पा० १।३।१९ सूत्रे भाष्ये) । अपचारो व्यभिचारः ( उपसर्गत्वस्य ) । पलाशं कुशस्तम्बं वा पलाशापचारे (आश्व० गृ० १।२२।१९) । अपचारोऽभावः ।

—चि (चिञ् चयने)। यश्चापि विधिमुत्सृज्य …। प्राप्नोत्यपचयं घोरम् (ना० शा० ५।१७१) अपचयो दृष्टे प्रत्यवायः।

—चाय् ( चायृ पूजानिशामनयोः )। अक्षरस्यापचित्यै महिम्ना रसेन (छां० उ० १।१।९)। अपचित्यै पूजायै।

—च्यु (च्युङ् गतौ)। गिरा वज्रो न संभृतः सबलो अनपच्युतः (तै० ब्रा० १।५।८।३)। अनपच्युतोऽपलायितः। अभ्यर्षाऽनपच्युतो रयिम् (ऋ० ९।४।८)। अनपच्युतो ऽनाहतः (शत्रुभिः)। बृहत्सुवीरमनपच्युतं सहः (ऋ० ५।४४।६)। अनपच्युतमनुपक्षीणम्।

—छिद् (छिदिर् द्वैधीकरणे)। अपच्छिन्नया (भूम्या) शत्रोरुपरुद्धम् (उपग्राहयेत्) (कौ०अ० ७।१६।१६)। अपच्छिन्ना—आच्छिन्ना—अपहृता।

— जि ( जि जये अभिभवे च )। अपाशनायां च पुनर्मृत्युं च जयन्ति ( शां० ब्रा० २५।१ )। अपजयन्ति विजयन्ते प्रसहन्ते। एतौ मे पुनर्मृत्युमप जेष्यतः ( जै० ब्रा० १।२६ )। उक्तोऽर्थः। तदहः पुनर्मृत्युमपजयति ( बृह० उ० १।५।२)। अपजयति वारयति। देवा वै यज्ञं पराजयन्त तमाग्नीध्रात्पुनरपाजयन् (तै० सं० ६।३।१। १)। अपाजयन् अपादाय स्ववशेऽकुर्वन्।

—ज्ञा (ज्ञा अवबोधने)। न जातु चिदपजानीमहे दृष्टमर्थाभिधानस्योपकारकत्वम् (मी० शा० भा० १।२।४।३२)। नापजानीमहे नापलपामः।

—तन् (तनु विस्तारे)। अपत्यं कस्मात्। अपततं भवति (नि० ४।१)। पितुः सकाशादेत्य पृथगिव भवतीति दुर्गः। त्वो ऽपततः (नि० ३।२०।५)। अपततः—अपेत्य ततः (दुर्गः)।

—दिश् (दिश अतिसर्जने, दिशिरुच्चारणक्रिय इति भाष्यम्)। चोरेणाभिशस्तो वैरद्वेषाभ्यामपदिष्टकः शुद्धः स्यात् (कौ० अ० ४।८।७)। अपदिष्टको मिथ्यादूषितः। हित्वा नरपतिबन्धनापदेश-व्यापत्ति-व्यसनमहार्णवं महान्तम् ( प्रतिज्ञा० )। नरपतिबन्धनमपदेशो निमित्तं यस्या व्यापत्तेः सा, सैव व्यसनमहार्णवः। तांश्चापदेशैः प्रतिसमानयेत् ( कौ० अ० ४।८।२)। अपदेश उपन्यासः प्रतिज्ञानम्।

—दै (दैप् शोधने)। शङ्कनीये देशे पूर्वापदाने च गृहीतमनुयुञ्जीत

(कौ० अ० २।३६।३६) । अपदानमपचारो दुर्वृत्तम् । अवदानं तु सोत्कर्षं चरितं भवति निर्व्यूढम् इत्यपावयोर्भेदः ।

—नी (णीञ् प्रापणे)। प्रह्लादं चास्य विज्ञाय ताः स्त्रीरपनयेत् पुनः (सुश्रुत० उत्तर० ३९।१३३) । अपनयेत् विश्लेषयेत्, पृथक् कुर्यात् ।

—नुद् ( णुद प्रेरणे ) । अपनुत्तौ शण्डामर्कौ सहामुना (तै० ब्रा० १।१। १।५) । अपनुत्तौ निराकृतौ पराकृतौ । यत्पराचीमपनुदन् गायेद् वाचं प्रधमेत् । वागस्मादपक्रामुका स्यात् ( जै० ब्रा० १।१०२ ) । तुन्दशोकयोः परिमृजापनुदोः (पा० ३।२।५) । शोकापनुदः सुतः, शोकमपनुद्य सुखमाहरति यः, सः ।

—प्लु ( प्लुङ् गतौ ) । पाप्मानमेवास्माच्छमलमपप्लावयति (तै० ब्रा० ३।८।४।३) । प्लावनेनापनयतीत्यर्थः ।

—बाध् ( बाधृ लोडने ) । अपामीवां बाधमानो मृधश्च (ऋ० ६।६७। ४३) । अपबाधमानोऽपद्रावयन् । बाधमाना अप द्विषः । (ऋ० १।९०।३) । उक्तोऽर्थः । आराच्छत्रुमप बाधस्व दूरमुग्रो यः शम्वः पुरुहूत तेन (नि० ५। २४।२ ) । शम्बो वज्रः । अपबाधस्व नाशय । उषा याति ज्योतिषा बाधमाना विश्वा तमांसि दुरिताप देवी (ऋ० ७।७८।२) ।

—भज् (भज सेवायाम्) । अप ते गवां सुभगे भजाम (ऋ० १०।१०८। ९) । पुस्तके पठितचर ऋक्चरणः । सायणीयं व्याख्यानमुपन्यसितुमिहानुवादः । आह च भाष्यकारः—पर्वतादपगमय्य भजाम विभजाम त्वं च वयं चेति ।

—भू (भू सत्तायाम्) । यो ज्येष्ठबन्धुरपभूतः स्यात् (तै० सं० ३।४। ८।२८) । अपभूतो न्यक्कृतः । इहोप यात शवसो नपातः सौधन्वना ऋभवो माप भूत (ऋ० ४।३।५।१) । मापभूत=दूरे मास्म भवत ।

—भ्रंश् (भ्रंशु अवस्रंसने) । देवाः स्वर्गं लोकमायन्नपासुरा अभ्रंशन्त (मै० सं० ४।६।४) । अपाभ्रंशन्त प्राच्यवन्त ।

—मृद् (मृद क्षोदे) । अपमृद्य पतिं हराभि सीताम् (आश्चर्य० ३।१६) । अपमृद्य निहत्य ।

—म्लुच् (म्लुचु गतौ) । मां देवा दधिरे हव्यवाहम् अप म्लुक्तं बहु कृच्छ्रा चरन्तम् (ऋ० १०।५२।४) । अपम्लुक्तमपक्रम्यागतम् ।

**—राध्** ( राध साध संसिद्धौ ) । एवं को वाऽपराध्नोत्यमुमविगणयन् बाहुमत्रेति घुष्यम् (चम्पू० भा० २।५०) । **अत्र मयि कोऽपराध्नोत्यपराध्यति। अपराधमाचरति । श्नुविकरणोपि राधिरत्राकर्मकः ।**

**—रुध्** (रुधिर् आवरणे) । एतां वाव स देवतामपरुणद्धि योऽलमग्निहोत्रः सन्नाग्निहोत्रं जुहोति (ऐ० ब्रा० ५।३०) । **अपरुणद्धि निः सारयति ।** अपेमं जीवा अरुधन् गृहेभ्यः (अथर्व० १८।२।२७) । **अपारुधन् बहिरकुर्वन् । व्यपावर्तयन् ।** आदित्येभ्यो धारयद् दद्भ्यश्चरुं निर्वपेदपरुद्धो वाऽपरुध्यमानो वा (तै० सं० २।३।१।१) । **अपरुद्धो वैरिणा स्वराष्ट्रान्निःसारितः । राजान्तरेणापहृतराष्ट्र इति यावत् ।** यद्यु वा एनमुपधावेद्राष्ट्रादपरुध्यमानः (ऐ० ब्रा० ८।१०) । **राष्ट्रादपरुध्यमानः = राष्ट्रान्निर्वासितः, भ्रंशितः, ।** द्यावापृथिव्यां धेनुमालभेत ज्योगपरुद्धः (तै० सं० २।१।४) । **अपरुद्धश्चिरं दुर्गतः ।** अपरुद्धं तु मुख्यपुत्रापसर्पाः प्रतिपाद्यानयेयुः ( कौ० अ० १।१८।१३ ) । **अपरुद्धमप्रियं राजकुमारम् ।**

**—वद्** (वद व्यक्तायां वाचि) । उत्तीर्णाञ्शुचौ देशे शाद्वलवत्युपविष्टांस्तत्रैतानपवदेयुः (पा० गृ० ३।२२) । **प्रेतगुणकथनेन संसारासारताख्यापनेन शोकरहितान्कुर्युरिति हरिहरः ।**

**—वप्** (डुवप बीजसन्ताने) । तेनाभिधाय दस्यूनां शक्रः सेनामपावपत् (अथर्व० ८।८।५) । **सेनामपावपत् शत्रुबलं परास्थत्, व्यनीनशत् ।** सो (क्षुरपविः) ऽसुरानपोप्य देवानभ्यावर्तत (जै० ब्रा० १।१२६) । **अपोप्य परिहृत्य ।**

**—वल्ग्** (वल्ग गतौ) । अपवल्गिता गवाक्षेषु वातं गृह्णन्ति सलिलगर्गर्यः (मृच्छ० ४) । **अपवल्गिता अधोमुख्यो ऽवलम्बिताः ।**

**—वह्** (वह प्रापणे) । निष्पत्तौ निक्षिपेद्वादमात्मानं वाऽपवाहयेत् (कौ० अ० २।८।३२) । **आत्मानमपवाहयेत् अपयायात्, अपेयात् ।** अथानपोढार्गलमप्यगारम् (रघु० १६।६) । **अनपोढार्गलमनुद्घाटितविष्कम्भम् ।**

**—वृ** (वृञ् वरणे) । गवामप व्रजं वृधि (ऋ० १।१०।७) । **अपवृधि अपावृणु ।** अपवारितं पक्षद्वारके सज्जं प्रवहणं तिष्ठति (मृच्छ० ६) । **अपवारितं परिवृतं परिवेष्टितम् ।**

**—वृज्** (वृजी वर्जने, वृजि इत्येके) । भल्लापवर्जितैः (शिरोभिः) (रघु० ४।६३) । **अपवर्जितैः = छिन्नैः, कृत्तैः ।** अभिव्याप्यापकर्षणमपवर्गः (सुश्रुत०

उत्तर० ६५।१४-१५)। इदं पुस्तके धृतपूर्वम्। व्याख्यावैशद्यायेहानुवादः। गुणक्रियादिभिः सर्वतो वाऽभिव्याप्य कस्यचित्पदार्थस्य तेभ्यो गुणक्रियादिभ्यः पृथक्करणमपवर्ग इति डल्लनः। सर्वत्र पुरस्तादुपक्रमः प्रदक्षिणमुत्तरतोऽपवर्गः (सत्या० श्रौ० २३।३।६)। अपवर्गः परिसमाप्तिः। उदगपवर्गा यूपा दक्षिणापवर्गाः पशवः (वाराह श्रौ० ३।२।६।११)। किमुत्पन्नापवर्गिणी बुद्धिः शब्दवत् (न्या भा० ३।२।४३)। अपवर्गिणी ध्वंसयोगिनी।

—वृत् (वृतु वर्तने)। गौरिति वाऽश्व इति वा सामान्यवाचिनः पदात् सर्वगवीषु सर्वाश्वेषु च बुद्धिरुपसर्पन्ती श्रुतिजनितवाक्यानुरोधेन कुतश्चिद् विशेषादपवर्तेत (मी० शा० भा० १।१।७।२३)। अपवर्तेत व्यपवर्तेत व्यावर्तेत। अपवृत्तं त्वया संख्ये राम रावणजं भयम् (रा० ६।११९।३)। अपवृत्तं निवर्तितं निवारितम्। मुकुटेनापवृत्तेन भास्कराकारवर्चसा (रा० ६।१०९।३)। अपवृत्तेनावस्रस्तेन, अधः पातितेन। रामबाणैस्त्याजितेनेति यावत्। उद्वृत्तापवृत्तफलयोनयः (सुश्रुत० सूत्र० ११।१७)। अपवृत्तफलः स्थानान्तरस्रस्ताण्डः। बहूनि दुःखान्यपवर्तितानि (सौन्दर० १७।६३)। अपवर्तितानि विभक्तानि अपकृष्टानि। समेन केनाप्यपवर्त्य (लीला० १८)। निःशेषभजनमपवर्तनम्।

—व्यध् (व्यध ताडने)। अप शत्रून् विध्यतां संविदाने आर्त्नी इमे (ऋ० ६।७५।४)। पुस्तके धृतमिदम्। उक्तपूर्वस्याभिव्यक्तये चेहानुवादः। अपपूर्वो व्यधिरपनये वर्तते। अपविद्धो निरस्त उच्यत इति महेश्वरो निरुक्तटीकाकारः (नि० ६।४०)। भूषणान्यपविध्यन्ती गात्राणि च विधून्वती (रा० ४।५८।१६)। अपविध्यन्ती विकिरन्ती। अनयैवापविद्धानि स्वनवन्ति महान्ति च (आभरणानि) (रा० ५।१५।४६)। अपविद्धानि विकीर्णानि पातितानि।

—शुष् (शुष शोषणे)। इमे वा एतस्मै लोका अपशुष्काः (तै० सं० २।१।४।८)। अपशुष्का अपरक्ता इति भट्टभास्करः।

—श्रि (श्रिञ् सेवायाम्)। एषो अपश्रितो वलो गोमतीमव तिष्ठति (ऋ० ८।२४।३०)। अपश्रितः कृतप्रस्थानः, अन्यत्र दूरे संश्रयं गतः, निलीन इति वा। सायणस्तु अपश्रितः सर्वैराश्रितः, विवृतद्वारो वेत्याह। इयं चासति कुड्ये चित्रमिवानालम्बना समुत्प्रेक्षा भाष्यकारस्य। सर्वाश्रितत्वमपशब्दो विरुन्धे, विवृतद्वारतां च न समर्थयते। विपूर्वः श्रयति विवरणे श्रूयते नापपूर्वः। इच्छन्न-

श्वस्य यच्छिरः । पर्त्तेष्त्रपश्रितम् ( तै० ब्रा० १।५।८।१ ) । अपश्रितं निलीनम् ।

—सू (षू प्रेरणे) । अपास्य ये सिनाः पाशा मृत्योरेकशतं सुवे (काठक० ३८।१३) । अपसुवे विकिरामि विसिनोमि विषितान्करोमि ।

—सर्पय् (सर्पय नामधातुः) । तान्राजा स्वविषये मन्त्रिपुरोहित···दुर्गान्त-पालाटविकेषु·· भक्तितः सामर्थ्ययोगाच्चापसर्पयेत् ( कौ० अ० १।१२।६ ) । अपसर्पयेत् अपसर्पान्कुर्यात्, चरान् प्रणिदध्यात् ।

—सृ (सृ गतौ) । अपोषा अनसः सरत् सम्पिष्टादह बिभ्युषी ( ऋ० ४। ३०।१०) । अपासरत् अपागमत्, अवातरत्, अवाप्लवत । स चेदपसारमधि-गच्छेत्, अपसरेदपसारक्षयात् (कौ० अ० ३।१६।१५) । अपसरेत् दोषादात्मानं मोक्षयेत् । अपसारोऽनपराद्धतायाः प्रसाधकं प्रमाणं निर्दोषीकरणे सहायो वा । अपसारतः सुगुप्तकक्षं बन्धनागारं कारयेत् ( कौ० अ० २।५।५ ) । अपसारः पलायनम् । सुषिरस्तम्भप्रवेशापसारं वा वासगृहं···कारयेत् (कौ० अ० १।२०। २) । अपसारो निर्गमद्वारम् । कर्तुर्द्विगुणः सापसारश्चेत् (कौ० अ० २।१४। १२) । अनपसारः कण्टकशोधनाय नीयेत (कौ० अ० २।१४।१३) । अपसारो दोषलाघवकरो निर्दोषत्वसाधको वाऽर्थः । अपसरणतो ह वा अग्रे देवा जयन्तो ऽजयन् (श० ब्रा० १।६।३।११) । अपसरणे पलायने सति शत्रूणाम् ।

—सृप् (सृप्लृ गतौ) । तुल्यशील पुंश्चली-प्रापाविक-कथावकाश-भोजन-दातृभिरपसर्पयेत् (कौ० अ० ४।८।१५) । एभिरपसर्पैरवेक्षेतेत्यर्थः ।

—स्फुर् (स्फुर ईषच्चलने) । अपस्फुरं गृभायत सोममिन्द्राय पातवे (ऋ० ६।६६।१०) । अपस्फुरमुच्छलन्तम्, उत्सिच्यमानं निष्पतन्तम् । अति-वृद्धमिति तु सायणः । स च शब्दमर्यादया दुर्लभोऽर्थः ।

—स्मृ (स्मृ चिन्तायाम्) । स्मृतेरपगमं प्राहुरपस्मारं भिषग्विदः (चरक० चि० १०।१ ) । निगदव्याख्यातम् । स्मृतिर्भूतार्थविज्ञानमपस्तत्परिवर्जने । अपस्मार इति प्रोक्तस्ततोऽयं व्याधिरन्तकृत् (सुश्रुत० उत्तर० ६१।३) ॥ स्पष्टम् । बहुशो ऽपस्मरन्तं तु प्रक्षीणं चलितभ्रुवम् (सुश्रुत० सूत्र० ३३।२४)। अपस्मरन्तमपस्मारवेगवन्तम् ।

—हन् ( हन हिंसागत्योः ) । अर्बुदः सर्प एताभिर्मृतां त्वचमपाहत

( पञ्च० ब्रा० ४।६।५ ) । **अपाहत=अपाहन्=अपागमयत्।** यज्ञाद्रक्षांस्य-पहन्ति (तै० ब्रा० ३।८।१५।१) । **अपहन्ति हननेनापकर्षति, अपगमयति ।** अप सोम मृधो जहि ( ऋ० ६।४।३ ) । **उक्तोऽर्थः ।** तानश्वा भूत्वा पद्भिरपाघ्नत ( ऐ० ब्रा० ५।१ ) । **अपाघ्नत=अपाघ्नन्=अवाताडयन् ।** अपजहि परिधिम् (छां० उ० २।२४।६) । **अपसारयार्गलम्, उद्घाटय विष्कम्भम् इत्याह ।** तेऽत्रिमब्रुवन्नृषे त्वमिदमपजहीति (जै० ब्रा० १।८०) । **इदं (तमः) अपनयेत्यर्थः ।** अमेध्यमपहन्ति (तै० ब्रा० १।१।३।१) । **अपहन्ति अपसारयति दूरी करोति ।** अपघ्नन्नेपि पवमान शत्रून् (ऋ० ६।६६।२३) । **विनाशयन्नित्यर्थः ।**

—हृ (हृञ् हरणे) । पूर्वकृतापदानं प्रतिज्ञायापहरन्तम् (कौ० अ० ४।८। २६) । स्वीकृत्योक्तं प्रतिसंहरन्तमित्यर्थः ।

—ह्नु (ह्नुङ् अपनयने) । अङ्गैरपह्नुतोप्यन्यैर्यस्या दिव्यानुकारिभिः । चक्षुषा चपलेनोक्तो मर्त्यभावो निमेषतः (कथा० ७४।२१६) ।। **अपह्नुतो गोपितः, संवृतः ।**

## अपाङ् (अप+आङ्)

—कृ ( डुकृञ् करणे ) । तेन देशकालजातिसङ्घानां समयस्यानपाकर्म व्याख्यातम् (कौ० अ० ३।१०।४५) । **समयस्य संविदोऽनपाकर्म अपालनम् ।**

—छिद् (छिदिर् द्वैधीकरणे) । दैत्यहस्तादपाच्छिद्य सुहृदा सम्प्रति त्वया (विक्रम० १।३५) । **अपाच्छिद्य आच्छिद्य विमोच्य ।**

—दह् (दह भस्मीकरणे) । अपि वाऽरण्ये कक्षमपादहेत् (शां० गृ० ३। १४।५) । **अपादहेत् अपादाय दहेत् ।**

—दा (डुदाञ् दाने) । ये राष्ट्रस्य प्रदातारः । ये ऽपादातारः (तै० ब्रा० १।७।६) । **अपादातारो हर्तारः ।**

—यम् (यम उपरमे) । लक्षणेन दक्षिणाऽपायम्य (सत्या० श्रौ० २५।१। ६) । **अपायम्य प्रसार्य ।**

—वृ (वृञ् वरणे) । अप कृष्णां निर्णिजं देव्यावः (ऋ० १।११३।१४) । **अपावः=अपावृणोत् । देव्युषाः । निर्णिगिति रूपनाम ।**

—श्रि (श्रिञ् सेवायाम्) । वत्सराजस्य भुजच्छायामपाश्रिता (कथा० ३४।३६) । अपाश्रिता आश्रिता संश्रिता । त्वं हि नस्तात सर्वेषां दुःखितानामपाश्रयः (भा० वन० ३१२।२१) । अपाश्रय आश्रयः शरणम् ।

—स्था (ष्ठा गतिनिवृत्तौ) । स ह नेत्युक्त्वा धनुरादायारण्यमपातस्थौ (ऐ० ब्रा० ७।१४) । अरण्यं प्रति प्रतस्थ इत्याह । अपाष्ठाच्छृङ्गात्कुल्मलान्निरवोचमहं विषम् (अथर्व० ४।६।५) । अपाष्ठः शल्याग्रं भवति । तृष्टमेतत् कटुकमेतदपाष्ठवद् विषवन्नैतदत्तवे (ऋ० १०।८५।३४) । उक्तोऽर्थः ।

## अपोद् (अप+उद्)

—इ (इण् गतौ) । तामब्रूतामपोदिहि (ऐ० ब्रा० ४।८) । उत्कर्षेणापेहि, दूरेऽपसर, अपध्वंस ।

—क्रम् (क्रमु पादविक्षेपे) । यन्मेध्यं यज्ञियं सदेवमासीत्तदपोदक्रामत् (तै० सं० ६।१।१।७) । अपोदक्रामत् अपहायोर्ध्वमगच्छत् ।

## अपनि (अप+नि)

—धा (डुधाञ् धारणपोषणयोः) । अप न्यधुः पौरुषेयं वधं यमिन्द्राग्नी धाता सविता बृहस्पतिः (अथर्व० १९।२०।२१) । अपन्यधुः=निभृतं निश्चितवन्तः । ते अहोरात्रयोर्महिमानमपनिधाय देवानुपावर्तेताम् (तै० सं० ६।१।३।१७) । अपनिधाय अपादाय ।

—ह्नु (ह्नुङ् अपनयने) । को नु माऽनुशिष्याद्भो इतीहापेव निह्नुते (छां० उ० ४।१४।२) । अपनिह्नुत इव=अपह्नवमिव करोति ।

## अपप्र (अप+प्र)

—इ (इण् गतौ) । अप प्रागात्तम आ ज्योतिरेति (ऋ० १।११३।१६) । अपप्रागात् दूरमपासरत् ।

—जन् (जनी प्रादुर्भावे) । स्त्रीणामपप्रजातानां प्रजातानां तथाऽहितः (सुश्रुत० नि० ९।२०) । अपप्रजातानां पतितगर्भाणाम् । प्रजातानां प्रसूतानाम् ।

—वस् (वस निवासे) । यदग्नीनाधायाथाप प्रवसति (जै० ब्रा० १।२०) ।

प्रशब्दः प्रागेव विप्रकर्षमाह, तस्य भूयस्त्वविवक्षयाऽपशब्दप्रयोगः । दूरतरं गतो भवतीत्यर्थः ।

## अपवि (अप+वि)

—ज्ञा ( ज्ञा अवबोधने ) । मोहापविज्ञातबन्धकीहृदयसारः (दुर्योधनः) (वेणी०) । अपविज्ञातोऽपह्नुतः । प्रायेणापजानातिरेवापह्नवमाह ।

## अपसम् (अप+सम्)

—धा (डुधाञ् धारणपोषणयोः) । परस्यापसन्धेयतां दूष्यातिसन्धानेन स्थापयित्वा (कौ० अ० ७।६।२१) । अपसन्धेयः सन्धिच्छेदार्हः ।

—वृत् (वृतु वर्तने) । उषा अप स्वसुस्तमः सं वर्तयति वर्तनिं सुजातता (ऋ० १०।१७२।४) । अपसंवर्तयति अपगमयति निवर्तयति ।

## सम्

—अच् ( अञ्चु गतिपूजनयोः, अचु इत्येके ) । मायाभिरश्विना युवं वृक्षं सं च वि चाचथः (ऋ० ५।७८।६) । समचथः संयोजयथः । रात्र्या समच (तै० ब्रा० ३।१०।४।३) । रात्रिनिमित्तं स्वं तेजः समच संकुचितं कुरु ।

—अज् (अज गतिक्षेपणयोः) । समर्यो गा अजति यस्य वष्टि (ऋ० १। ३३।३, नि० ६।२२।२) । समजति समस्ताः क्षिपति । गा अपः । अर्य इन्द्र ईश्वरः ।

—अन् (अन प्राणने) । ऋचा प्राणिहि यजुषा समनिहि (शां० गृ० १। २४।२) ।

—अम् (अम गत्यादिषु, आदिना शब्दसम्भक्त्योर्ग्रहणम्) । संवत्सराय वा एतौ सममाते (तै० सं० २।२।६।२) । सममाते शपथं कुर्वाते एतस्मिन्विषये ऽन्योन्यमावाभ्यां न द्रोग्धव्यमिति । अमाते इत्यत्रात्मनेपदमार्षम् ।

—अर्थ् (अर्थ याच्ञायाम्) । एतस्मिन्नाश्रमे वासं चिरं तु न समर्थये (रा० ३।७।२१) । न समर्थये नेच्छामि । समर्थ्य चात्यर्थविशारदावुभौ (रा० ३।४।२८) । समर्थ्य निश्चित्य ।

—अश् ( अश भोजने ) । मृद्वीका रसिता सिता समशिता (भामिनी० ४।७) । समशिता अशिता । नार्थः समा । समशनं तु संभूयाशनमाह । यथा समाजेषु समाशेषु समवायेषु इत्यत्र (पा० सू० १।१।५० भाष्ये) ।

—अश् ( अशू व्याप्तौ ) । सुवर्गस्य लोकस्य समष्ट्यै (तै० सं० ५।७।२।२।) । समष्ट्यै प्राप्त्यै । समानंश सुमतिभिः को अस्य (ऋ० ४।२३।२) । समानंश समानशे संभेजे संजग्मे ।

—अस् (असु क्षेपे) । यद् द्वौ द्वौ पशू समस्येयुः । कनीय आयुः कुर्वीरन् (तै० ब्रा० १।२।५।३)। समस्येयुः समस्यालभेरन्, समं हन्युरित्यर्थः । ते ब्रह्मविद्भिश्च समस्यमानाः (सम्पूज्यमानाश्च सुरैः सशक्रैः) (हरि० ३।५२।५३) । समस्यमानाः सङ्गच्छमानाः । अस्यत्यूह्योर्वा वचनमिति वा तङ् । तद्यत्रैतत् सुप्तः समस्तः (छां० उ० ८।६।३) । समस्तः संहृतसकलकरणव्यापारः । तस्य सप्त पदानि समस्यावस्येत् (शां० ब्रा० ३।२) । समस्य सङ्ग्रथ्य संश्लिष्य । यद्यप्येनान् उत्क्रान्तप्राणान् शूलेन समासं व्यतिसन्दहेत् (छां० उ० ७।१५।३) । समासं प्रक्षिप्य । णमुलन्तमेतत् ।

—अस् (अस भुवि) । त्वं च तान्त्सं च प्रति चासि मन्मना (ऋ० २।१।१५) । तान्देवान्समसि संगच्छसि ।

—आप् ( आप्लृ व्याप्तौ ) । इष्टं स्यात् क्रतुभिस्तेन समाप्तवरदक्षिणैः (याज्ञ० १।३५९) । समाप्ता पर्याप्ता प्रभूता भूरिः । अयं सर्वः समाप्ताङ्गः श्रितः कृष्णमृगो मया (रा० २।५६।२८) । समाप्ताङ्गः परिपूर्णाङ्गः ।

—इ (इण् गतौ)। सम् अन्या यन्त्युप यन्त्यन्या (तै० सं० २।५।१२।१-२)। संयन्ति संगच्छन्ते सम्भेदमापद्यन्ते । कश्चिद्वै स्वर्गे लोके समेति (ऐ० ब्रा० ६।२६) । समेति प्राप्तो भवति । तौ मिथुनं समैताम् (बृह० उ० १।५।१२) । मिथुनं समैतां समविशतां समभवताम् समगच्छेताम् । सर्व एव समेष्यन्ति संयुक्ताः परया मुदा (रा० ६।१२०।१५) । समेष्यन्ति संगंस्यन्ते संयोक्ष्यन्ते (प्राणैः) । गदापरिघहस्तौ तौ युधि वीरौ समीयतुः (रा० ६।६७।१६) । समीयतुः समासेदतुः, युयुधाते,सङ्ग्रामयाञ्चक्राते । ततो भिन्नप्रहरणौ मुष्टिभ्यां तौ समीयतुः ( रा० ६।६७।२५ ) । युयुधाते इत्यसांशयिकोऽर्थः । ईश्वरौ वा एतौ संयन्तौ यजमानं हिंसितोः (ऐ० ब्रा० ५।४) । संयन्तौ सङ्गच्छमानौ

(इति षड्गुरु०)। स्पर्धमानौ (इति गोविन्द०)। सङ्ग्रामं कुर्वाणौ (इति सायणः)।

—ईर् (ईर गतौ)। स ऐक्ष्वाको ऽधावयत्, ब्राह्मणकुमारं रथेन व्यच्छिनत्... तमेतेन साम्ना समैरयत् (पञ्च० ब्रा० १३।३।१२)। समैरयत् सङ्गतावयवमकरोत्। कश्यपस्त्वामसृजत कश्यपस्त्वा समैरयत् (अथर्व० ८।५।१४)। त्वां मणिम्। उक्तपूर्व एवार्थः।

—ईष् (ईष गतिहिंसादर्शनेषु)। पशवो वै समीषन्ती (त्रिष्टुतिः) (पञ्च० ब्रा० ३।१२।४)। समित्येकीभावे। एकीभूय ईषति गच्छति। सङ्गमनीत्यर्थः। एष वामनः समीषितः पशुभ्य एव प्रजाभ्यः प्रतिष्ठां दधाति (तै० सं० २।१।५।२)। समीषितः सम्यग् ईषितो गमितः।

—ऋ (ऋ गतिप्रापणयोः)। कथा न क्षोणी र्भियसा समारत (ऋ० १।५४।१)। भयेन किमिति न समं प्रद्रवन्तीत्याह। क्षोणीः=क्षोण्यः। तात्स्थ्याल्लोका जनाः। समरन्त पर्व (=पर्वाणि) (ऋ० ४।१९।९)। समरन्त समारन्त समगच्छन्त, समधीयन्त समाहितान्यभवन्। पर्वाणि अङ्गानि। धिया रथं न कुलिशः समृण्वति (शां० ब्रा० १९।९)। समृण्वति समानयति। साधुर्वा यदि वा ऽसाधुः परैरेष समर्पितः (रा० ५।५२।१९)। समर्पितः सम्प्रेषितः।

—ऋच्छ् (ऋच्छ गतीन्द्रियप्रलयमूर्त्तिभावेषु)। यथाल्पधान्ये (अनसि) पात्राणि समृच्छेरन्नेव तस्योक्थानि समृच्छन्ते (शां० ब्रा० ११।८)। समृच्छेरन् सङ्घट्टेरन्। समृच्छन्ते परस्परमाहन्यन्ते। उक्थानामनुसमरमीश्वरो यजमानं श्रेयोऽन्वेतोः (शां० ब्रा० ११।८)। समरः सङ्घट्टनम्।

—ऋञ्ज् (ऋञ्जतिः प्रसाधनकर्मा छान्दसः)। समस्मिन्नृञ्जते गिरः (ऋ० १।६।९)।

—कित् (कित निवासे)। सं जानते मनसा सं चिकित्रे (ऋ० १०।३०।६)। संचिकित्रे=संचिकितिरे संकेतयन्ति सम्यक् पश्यन्ति बुध्यन्ते।

—कृ (डुकृञ् करणे)। मधुना समकारि कानने रुचिरा काचन कान्तिरुच्चकैः (पारिजात० ११।८)। भूषणाद्यर्थाभावे सुट् न कृत इति साधु कृतम्। सम्शब्दप्रयोगस्तु पादपूरणः कवेरशक्तिं व्यनक्ति। स प्रथमः संकृतिर्विश्वकर्मा (तै० ब्रा० १।१।१।५)। संकृतिः समीचीनव्यापारः।

—कॄ (कॄ विक्षेपे)। न संकिरेत्तदन्नं च (भा० अनु० १३६।१३)। इदं पुस्तके धृतपूर्वम्। व्याख्यान्तरन्यासार्थेहानुवादः। पुनर्भोजनं न कुर्यादिति वाक्यार्थः। आप्तान्वितमसंकीर्णं शुचि कार्यं महानसम् (सुश्रुत० सूत्र० ४६। ५०१)। असंकीर्णमसङ्कटम्। सावकाशम्।

—क्रम् (क्रमु पादविक्षेपे)। कथं ज्वरश्च शोषश्च नेत्राभिष्यन्द एव च। औपसर्गिकरोगाश्च सङ्क्रामन्ति नरान्तरम् (सुश्रुत० निदा० ५।२६)॥ संक्रामन्ति आविशन्ति। सोऽभवन्मन्मथाक्रान्तः सङ्क्रान्तः स्वेदवारिणि ( )। सङ्क्रान्तः प्रतिबिम्बितः प्रतिफलितः। मिथोदर्पण सङ्क्रान्ताः (बृ० क० म० वेताल १।१६०)। संक्रान्ताः सङ्गताः समं क्रान्ता वा। योषिद्भिः सह संक्रान्ताश्चिक्रीडुर्जहृषुश्च वै (रा० ७।२६।८)। संक्रान्ताः संगताः सहचरिताः। न पर हृदि संक्रान्ता चित्रं दिक्ष्वपि शून्यता (कथा० ३३।१३८)। संक्रान्ता व्याप्ता।

—क्रीड् (क्रीडृ विहारे)। सङ्क्रीडते खले रामा नगे मेघोऽम्बु मुञ्चति (बृ० क० को० ५८।२९)। सङ्क्रीडते क्रीडति खेलति। खले इति सामीप्ये सप्तमी। तासां सङ्क्रीडमानानामेव वादित्रनिःस्वनः (रा० ३।११।२०)। उक्तोऽर्थः।

—क्रुश् (क्रुश आह्वाने रोदने च)। एतेन वा अङ्गिरसः संक्रोशमानाः स्वर्गं लोकमायन् (पञ्च० ब्रा० १२।३।२३)। संक्रोशमानाः संहत्य शब्दं परस्पराह्वानरूपं प्रियवाक्यं वदन्तः।

—क्षिप् (क्षिप प्रेरणे)। मार्गशीर्षं तु यो मासमेकभक्तेन संक्षिपेत् (भा० अनु० १०६।१७)। संक्षिपेत् उपसंहरेत्, समाप्नुयात् यापयेत्। यान्याम्बाणानर्जुनस्तु संचिक्षेप शिवोपरि (स्कन्दपु० के० १८१।६२)। संचिक्षेप प्रास। अस्थाने सम्शब्दः। विरुद्धमतिकृद्धि सः। तत्र तत्र च दृश्यन्ते संक्षिप्ताः काष्ठसंचयाः (रा० ३।११।४२)। संक्षिप्ताः सङ्गृहीताः, राशीकृताः। सर्वास्त्राणि निकृत्तानि संक्षिप्तान्यमरैर्गणैः (शि० पु० २।४।१५।६०)। संक्षिप्तानि क्षिप्तानि। अस्थाने सम्शब्दः। शस्त्राण्यस्त्राण्यनेकानि संक्षिप्तानि ह्यवुद्धितः। दधीचस्याश्रमे···(स्कन्द पु० १।१६।६१)॥ संक्षिप्तानि निक्षिप्तानि। हारं वक्षसि केनापि दत्तमज्ञेन मर्कटः। लेढि जिघ्रति संक्षिप्य करोत्युत्तममासनम् (भामिनी० १।९४)॥ संक्षिप्य=अवक्षिप्य=अधः क्षिप्त्वा। सम्शब्दस्त्वत्रार्थेऽशक्तः। पादपूरण इति चेत्। हन्त पण्डितराजेनापि पादपूरणस्य समाश्रय

इति दोषलेशास्पृष्टानां गिरां क्वावकाशः। गतः सत्त्वस्य संक्षेपः (रा० ६। १०९।६)। संक्षेपः संग्रहस्थानम् इति तिलकः। सङ्ग्रह इति भूषणे गोविन्दराजः। रावणवधे विलपतो विभीषणस्योक्तिरियम्।

—क्ष्णु (क्ष्णु तेजने)। वक्षःपीठे घनास्त्रव्रणकिणकठिने संक्ष्णुवानः पृषत्कान् (हनुमन्नाटके १।३१)। तीक्ष्णी कुर्वन्नित्यर्थः। समः क्ष्णुव इति तङ्।

—ख्या (ख्या प्रकथने, चक्षिङ आदेशो वा)। नैष शक्यो मया वीरः संख्यातुं रथसत्तमः (भा० उ० १६७।५)। संख्यातुं योधयितुम्। संख्यं हि युद्धं भवति।

—गम् (गम्लृ गतौ)। सं यस्मिन् विश्वा वसूनि जग्मुः (ऋ० १०।६।६)। संजग्मुः स्वत्वेन संगतानि भवन्ति। सं त्वमग्ने सूर्यस्य वर्चसाऽगथाः (तै० सं० १।५।५।५)। समगथाः समगंस्थाः सम्पृक्तोसि। औदुम्बर्या दक्षिणा (=दक्षिणतः) प्रावृतो निपद्यते तदेव (=तदानीमेव) सङ्गच्छते (पञ्च० ब्रा० १७।१२।५)। सङ्गच्छते म्रियते। दरिद्रशब्दस्यैकस्य नासीत्तत्रार्थसङ्गतिः (कथा० ३४।१२०)। अर्थसंगतिः=अर्थान्वयः=अर्थेन योगः। संगत्या भरतः श्रीमान् राज्येनार्थी स्वयं भवेत् (रा० ६।१२५।१७)। संगत्या चिरपरिचयेन कैकेयीसंगत्या वेति तिलककारः। इद व्यवहारानवबोधमूलकम्, अनभिप्रेतं च रामस्य। वस्तुतः संगत्येति समापत्त्या, यदृच्छया, दैवयोगादित्यादिभिः समानार्थकम्। पुस्तके भारतगतेन प्रमाणप्राचुर्येण प्रतिष्ठापितोऽयमर्थ इति नेह वितायते। रामश्च मानुष्यकसुलभचित्तवृत्तिपरिवृत्तिमेव कादाचित्कीं निमित्तीकृत्य भरतस्य राज्यकामत्वमाशङ्कते। श्रीमान् श्रियं प्राप्तः श्रियं हातुं नेच्छेदित्यभिप्रायः। अहं राष्ट्री संगमनी वसूनाम् (ऋ० १०।१२५।३)। संगमनी संगमयित्री, उपासकानां प्रापयित्री।

—गॄ (गॄ शब्दे)। दक्षिणानां च सङ्गरे घ्नन् धर्मेण न दुष्यति (मनु० ८।३४९)। सङ्गरोऽवरोध इति मेधातिथिः। दक्षिणाधनगवाद्यपहारनिमित्ते संगरे संग्रामे इति कुल्लूकः।

—ग्रह् (ग्रह उपादाने)। इत्युक्त्वा निशितं बाणं समगृह्णाद् दुरासदम् (पद्मपु० ५।३४।२५)। अस्थाने समुपसर्गः। विमानं पुष्पकं दिव्यं संगृहीतं

तु रक्षसा (रा० ६।१२७।६२)। संगृहीतं हृतं स्ववशे कृतम्। द्रव्यान्तरानुत्पत्तौ च तृणोपलकाष्ठादिषु जतुसंगृहीतेष्वपि नाभविष्यताम् (धारणकर्षणे) (न्याय भा० २।१ )। जतुसंगृहीतेषु जतुना संयुक्तेषु। क्रियतां दारसङ्ग्रहः (कथा०११८।१२१)। सङ्ग्रहो ग्रहणम्। ततो निक्षिप्य काकुत्स्थो लक्ष्मणं द्वारि सङ्ग्रहम्(रा० ७।१०३।१५)। सङ्ग्रहं रक्षितारमिति भूषणम्। द्वारपालम् इति यावत्। सम्यगुक्तार्थग्रहणवन्तम् इति तु तिलकः। नेदं हृदयग्रहणीयम्। न ह्येवं दुरूहमुदाहरन्त्यृषयः। धर्म्यमर्थ्यं यशस्यं च सोपदेशं ससङ्ग्रहम्(ना०शा० १। १४)। सङ्ग्रहः सम्यग् ग्रहणमित्यभिनवगुप्तः। त्वत्सुतासङ्ग्रहो ऽस्माकं राजन् विशति नो स्फुटम् (बृ० क० को० १०।८७)। संग्रहः संजीवनम्। इति मद्वचनाद्रामो वक्तव्यो मम सङ्ग्रहः (रा० ७।४८।१८)। रामं प्रति वक्तव्यस्य सन्देशस्य सङ्ग्रहः संक्षेपः। संग्रहः सामदानोक्तिरिति कोषः। संग्रहो नाम संयोगसहचरितं गुणान्तरं स्नेहद्रवत्वकारितम् अपां संयोगादामे कुम्भे ऽग्निसंयोगात्पक्वे ( न्या० भा० २।१।३६ )। संग्रह एकीभावः। परदाराभिमर्शेषु (मनु० ८।३५२)। अभिमर्शः सङ्ग्रहणम्। अत्रार्थे संग्रहणशब्दप्रयोगः ३५६—३५९ श्लोकेषु वरीवृत्यते। परस्त्रीकामत्वं संग्रहणमिति मेधातिथिः। सूतश्च गामणी च क्षत्ता च सङ्ग्रहीता (पञ्च० ब्रा० १९।१।४)। सङ्ग्रहीता भाण्डागारस्य पालक इति सायणः। त्यागिनं सङ्ग्रहीतारं सानुक्रोशं जितेन्द्रियम् (रा० ६।१२२।८)। संग्रहीतारं यथाकालं यथान्यायं रत्नादेः समाहर्तारम्।

—घृष् (घृषु सङ्घर्षे)। पुष्पमासे हि तरव सङ्घर्षादिव पुष्पिताः (रा० ४।१।९२)। सङ्घर्षः स्पर्धा।

—चक्ष् (चक्षिङ् व्यक्तायां वाचि, वेदे बहुत्र दर्शनार्थः)। दशावयवानेके नैयायिका वाक्ये संचक्षते (न्याभा० १।१।३२)। संचक्षते संगृणते प्रतिजानते। न पततः संचक्षीत (सत्या० श्रौ० २६।८।३५)। पुस्तके धृतमिदमापस्तम्बीयमिति कृत्वा। इह सत्याषाढीयं तदनूद्यते व्याख्यान्तरयोजनाय। ज्योतींषि पतन्ति न कथयेत्परस्मा इति व्याख्यान्तरम्।

—चर् ( चर गतिभक्षणयोः )। तस्मात् प्राणापानौ सं चरतः (तै० सं० ५।२।१०।५९)। संचरतः सह चरतः। एतेन ह वा एवं सञ्चरमाणमग्नयो विदुरयमस्मासु होष्यतीति ( ऐ० ब्रा० ७।१० )। एतेन पथा सञ्चरमाणं क्रामन्तम्। अपरेण वेदिं प्रतिप्रस्थातुः संचरः (का० श्रौ० ५।३।१७)। संचरो गमनागमनमार्गः। यं द्विष्यात्तस्य संचरे पशूनां न्यस्येत् (तै० सं० ५।४।४।

१३)। संचरः संचरणदेशः। प्राग्वाऽसञ्चरे निनयेत् (पा० गृ० १।३।२४)। असंचरे जनसंचाररहिते प्रदेशे, निर्जन इत्यर्थः। असञ्चरे प्रोक्षणीर्निधाय (का० श्रौ० २।३।३६)। प्रणीताहवनीयान्तराले ऽसंचरे वेदिमध्ये। प्रार्थितेन पुनस्तेन जरा संचारिणी कृता (लिङ्गपु० पू० ६७।६)। संचारिणी संक्रमिणी।

—चृत् (चृती हिंसाग्रन्थनयोः)। कृण्वन्त्संचृतं विचृतमभिष्टये (ऋ० ६।८४।२)। संचृतं सङ्ग्रथितम्।

—जल्प् (जप जल्प व्यक्तायां वाचि)। संगता मुनयः सर्वे संजजल्पुरथो मिथः (रा० १।७४।२१)। सम्शब्दोऽधिकः। मिथ इत्यनेन गतार्थत्वात्। संबभाषिरे, समूदिरे।

—जि (जि जये अभिभवे च)। सं च जयति वि च जयते (ऐ० ब्रा० ३।१६)। संयुज्य (शत्रून्) जयति। येनेमा विश्वा भुवनानि संजिता (तै० ब्रा० ३।१।१७)। संजितानि सम्यग् जितानि।

—जीव् (जीव प्राणधारणे)। यस्यै निक्रमणे घृतं प्रजाः संजीवन्तीः पिबन्ति (तै० सं० १।७।२)। संजीवन्तीः संजीवन्त्य उपजीवन्त्यः।

—ज्ञा (ज्ञा अवबोधने)। तस्मै विशः संजानते (ऐ० ब्रा० ८।२५)। राज्ञा सहैकमत्यं प्राप्नुवन्तीत्याह। यन्नः पिता संजानीते तस्मिंस्तिष्ठामहे वयम् (ऐ० ब्रा० ७।१८)। संजानीतेऽङ्गीकरोति, प्रतिजानीते। यदिदमाहुर्न वा ऊर्वौ पलितौ संजानाते (पञ्च० ब्रा० २१।१०।६)। न संजानाते नोत्पद्येते इति सायणः। ऊर्वौ ऊर्ववंशजौ। नान्योन्यमभिजानीत इति त्वन्ये। जानातिरुत्पत्त्यर्थे न प्रसिध्यतीत्यवश्यमभ्युपेयम्। समिन्द्रो मरुद्भिर्यज्ञियैः समादित्यै र्नो वरुणो अजिज्ञपत् (तै० सं० २।१।११।१५)। समजिज्ञपत् सम्यग्ज्ञापयतु अभ्युपगच्छत्विति भट्टभास्करः। घ्नन्ति वा एतत् पशुं यत् संज्ञपयन्ति (तै० सं० ६।३।११।६२)। निगदव्याख्यातम्। प्रजापतिः प्रजा असृजत ता अविधृता असञ्जानाना अन्योन्यमादन् (पञ्च० ब्रा० २४।११।२)। असञ्जानाना ऐकमत्यरहिताः। गतासु तासु मैथिल्या सञ्जानानो ऽनिलात्मजः (भट्टि० ८।१०२)। संजानान इयं सेत्यवगच्छन्निति जयमङ्गला। अन्वेषमाणः, विचिन्वान इत्यन्ये। संज्ञोऽन्यतरस्यां कर्मणि (पा० २।३।२२) इति कर्मणि तृतीया। शब्देन संज्ञाकरणं व्यवहारार्थं लोके (नि० १।२)। संक्षेपेण ज्ञायतेऽनयेति संज्ञा देवदत्तो यज्ञदत्त इति इति स्कन्दस्वामी।

**—तन्** (**तनु विस्तारे**)। ते वै देवाश्च ऋषयश्चाद्रियन्त समानेन यज्ञं सन्तनवामेति (ऐ० ब्रा० ६।१७)। **सन्तनवाम श्लिष्टं करवाम।**

**—तृद्** (**उतृदिर् हिंसानादरयोः**)। तस्मात् सन्तृण्णा अन्तरतः प्राणाः (तै० सं० ६।२।११।५७)। **अधस्तादेकीकृता इत्यर्थः।**

**—दंश्** (**दंश दशने**)। तस्यापि वाचनिकाङ्गसन्दष्टत्वेन बलवत्त्वात् (भा०दी० ३।३।७)। **सन्दष्टत्वेन सम्बद्धत्वेन।** रक्तबीजो रक्तनेत्रः सन्दष्टदशनच्छदः (स्कन्दपु० के० ८७।१)। **दन्तोपपीडिताधर इत्यर्थः।**

**—दा** (**डुदाञ् दाने**)। दीर्घमायुरपि सन्ददौ यमः (पारिजात० १७।२७)। **दानेर्थे सम्पूर्वको ददातिः सुदुर्लभः, काममर्थान्तरे वर्तमानस्तु बहुलं प्रयोगमवतरन्दृष्टः। तेन सुपरिहरः समः प्रयोगः।**

**—दिश्** (**दिश अतिसर्जने, दिशिरुच्चारणक्रिय इति भाष्यम्**)। अङ्गदप्रमुखान् वीरान्...सन्दिदेश विशेषवित् (रा० ४।४१।५)। **सन्दिदेश प्रेषयामास।** आहारार्थं तु सन्दिष्टौ दैवेन गतचेतसौ (रा० ३।७०।२)। **सन्दिष्टौ प्रेषितौ, प्रहितौ, विसृष्टौ, प्रेरितौ।**

**—दिह्** (**दिह उपचये**)। वर्णानां च सन्देहो युगान्ते रविनन्दन (मात्स्य पु० १६५।१८)। **सन्देहः संकरः।**

**—दृश्** (**दृशिर् प्रेक्षणे**)। सन्दर्शनं प्रार्थनायां व्यवसाये त्वनन्तरा। व्यवसायस्तथाऽऽरम्भे साधनत्वाय कल्पते (वा० प० ३।७।१६)॥ **सन्दर्शनं फलविषयः सङ्कल्पः।** सन्दर्शने तु चैतन्यं विशिष्टं साधनं विदुः (वा० प० ३।७।१७)। **निगदव्याख्यातम्।** सम्पश्यन्तु च मे क्रियाः (हरि० २।५१।२२)। **सम्पश्यन्तु सम्पन्ना भवन्त्विति नीलकण्ठः। वस्तुतोऽपपाठ एषः। सन्दृशेस्तत्रार्थेऽशक्तत्वात्। अस्ति सम्पत्स्यन्तु इति पाठान्तरम्। तच्च संस्कारहीनमिति परिहृतम्। लोटि स्यो दुर्लभः। तत्रात्मनेपदव्यत्ययश्चापि दूषणम्। स च पुराणेषु बहुल इत्यकिञ्चित्करः।**

**—धा** (**डुधाञ् धारणपोषणयोः**)। इन्द्रनीलनिभं लक्ष्म सन्दधात्यलिनः श्रियम् (काव्यादर्शे १।५६)। **सन्दधाति दधाति। नार्थः समा।** सन्धीयते प्रजया पशुभि र्ब्रह्मवर्चसेन (तै० उ० १।३।४)। **संधीयते युज्यते।** इन्द्रश्च वै नमुचिश्चासुरः समदधातां न नो नक्तं न दिवा ऽहन्नार्द्रेण न शुष्केणेति (पञ्च०

ब्रा० १२।६।८) । समदधातां सन्धिमकुरुताम्, संविदं व्यधत्ताम्। सन्धां तु सन्दधावहै (तै० सं० २।४।१२।५) । एकत्वं प्रतिपद्यामहा इत्यर्थः। शरं ह्युपासानिशितं सन्दधीत (मुण्ड० उ० २।२।३) । सन्दधीत आरोपयेत्। स्वधर्मं सन्दधानो हि प्रेत्य चेह च नन्दति (कौ० अ० १।१।३) । सन्दधानोऽनुष्ठापयन्। इमं हि सालं सहितस्त्वया शरः (रा० ४।११।९२) । सहितः संहितः, धनुरारोपितः। मेखला चेदसन्धेया भवत्यन्यां कृत्वानुमन्त्रयते (शां० गृ० २।१३।४) । असन्धेयाऽबन्धनीया। नापागाः शीघ्रान्न्यायादसन्धेयं कृतम् (ऐ० ब्रा० ७।१७)। असन्धेयमप्रतिसमाधेयम्। सन्धिन्यनिर्दशावत्सागोपयः परिवर्जयेत् (याज्ञ० १।१७०) । सन्धिनी (गौः) या वृषेण सन्धीयते। अथ सन्धिनी आक्रान्ता वृषभेणेत्यमरः।

—धृ (धृङ् अवस्थाने) । तेऽदित्यां समध्रियन्त (तै० सं० ६।१।५।३४)। समध्रियन्त सम्भूयातिष्ठन्।

—नी (णीञ् प्रापणे) । एतदस्मै संनयत (तै० सं० २।५।३।२) । संनयत सम्यक् प्रापयत। यदीदहं युधये सन्नयान्यदेवयून् (ऋ० १०।२७।२) । सन्नयानि संगमयामि। इन्द्रियेणैवैनं देवताभिः सं नयति (तै० सं० ६।१।४।३१) । संनयति संयोजयति। ऋणमास्मिन् सं नयति (ऐ० ब्रा० ७।१३) । सन्नयति सम्यगवस्थस्थापयति, संक्रमयति। स संनयः स विनयः पुरोहितः (ऋ० २।२४।९) । संनयो विश्लिष्टानां मन्त्रैः संगमयिता।

—पठ् (पठ व्यक्तायां वाचि) । यज्ञकर्मणीति किम्। सम्पाठे मा भूत् (पा० १।२।३४ सूत्रवृत्तौ) । सम्पाठः स्वाध्यायकाल इति न्यासः।

—पत् (पत्लृ गतौ) । एतौ वै लोकौ सह सन्तौ व्यैताम्। तयोर्न किंचन समपतत् (जै० ब्रा० १।११६) । न समपतत् न सङ्गतमभूत्। सम्पतन्ति च मे शिष्याः प्रवृत्त्याख्याः पुरीमितः (रा० ६।१२४।१६) । सम्पतन्ति पुरा संगच्छन्ति। सम्पतन्ति नगाग्रेषु समवायांश्च कुर्वते (भा० भीष्म० २।१७) । सम्पतन्ति एकीभूय पतन्ति। तान् (सम्पातान्) क्षिप्रं समपतत् (ऐ० ब्रा० ६।१८) । शिष्येभ्यः क्षिप्रं प्रापितवान् इति सायणः। सम्पतिरिहोच्चारणक्रिय इति तु षड्गुरुशिष्यः। आस्थानीं समये समं नृपजनः सायन्तने सम्पतन् (रत्ना० १।२३) । सम्पतन् संगच्छन् प्राप्नुवन्। अथो महद्भिः पथि सम्पतद्भिः (सौन्दर० ५।४) । सम्पतद्भिः सङ्गच्छमानैः। पावकानिलसम्पातो रराज युधि दानवः (मात्स्य पु० १७७।५९) । सम्पातः सम्मि-

श्रीभावः, संसर्गः। अग्नावाज्यस्य हुत्वा मन्थे सम्पातमवनयेत् (छां० उ० ५।२।४)। हुतावशिष्टं स्रुवसंलग्नं सम्पातः। तान् वा एतान्सम्पातान् विश्वामित्रः प्रथममपश्यत् (ऐ० ब्रा० ६।१८)। सम्पाताः (त्रयो) सूक्तविशेषाः। ग्रामादनिर्णयनमसम्पातं च सुरायाः (कौ० अ० २।२५।३)। असम्पातोऽसङ्ग्रहः। भुरण्युः शकुनिर्भूरिमध्वानं नयति स्वर्गस्य लोकस्यापि वोढा, तत्सम्पाती भुरण्युः (नि० १२।२२।१)। तत्सम्पाती तेन युक्तः (अग्निचित्)।

—पद् (पद गतौ)। तच्चास्य प्रार्थितं न सम्पद्यते, सम्पद्य वा विपद्यते (न्याभा० ४।१।५७)। सम्पद्यते सिध्यति समृध्यति। सम्पत्स्यन्ते ते ऽद्य कामाः सर्वे ये चिरचिन्तिताः (स्कन्दपु० का० ४।७१।४४)। सम्पत्स्यन्ते सेत्स्यन्ति समर्धिष्यन्ति समत्स्यन्ति फलिष्यन्ति। उभे हि तेजसी सम्पद्येते (तै० ब्रा० २।१।२।६)। सम्पद्येते संगते मिश्रिते व्यतिकीर्णे भवतः। दण्डेन सम्पद्यत इति वा (दण्ड्य) (नि० २।२।१२)। सम्पद्यते संयुज्यते। सम्पद्यते शोभते (पापनिवृत्तिहेतुत्वाद् दण्डस्य) इति तु स्कन्दस्वामी। दूराधिरोहिणी कल्पना, यद्यपि रुचिरा। अथ कस्माद् वदस्येतत् सम्पादय सुकर्मणा (रा० ६।८८।२७)। सम्पादय संगमय। स्वामी च सम्पन्नः स्वसम्पद्भिः प्रकृतीः सम्पादयति (कौ० अ० ८।१।१६)। सम्पादयति सम्पद्वतीः करोति। स ह सम्पादयाञ्चकार (छां० उ० ५।११।३)। मनसि निश्चयमकरोत् सोऽध्रियत, स दध्रे। तेऽब्रुवन्—वीरं भजामहा इति। तस्य विभागे न समपादयन् (जै० ब्रा० २।१२८)। न समपादयन् ऐकमत्यं नाध्यगच्छन्। तौ (मातापितरौ) मध्यमे सम्पादयाञ्चक्रतुः (ऐ० ब्रा० ७।१५)। ऐकमत्यमापतुः, दानमङ्गीकृतवन्तौ। मध्यमे मध्यमं सुतमधिकृत्य। पितृलोकेन सम्पन्नो महीयते (छां० उ० ८।२।१)। सम्पन्नः संगतः। सम्पन्नहस्ता गुणवादिनी च (हरि० २।७६।१२)। समृद्धहस्ता। मुक्तहस्ता इत्यर्थः। अनाभरणसम्पन्ना परमाम्बरवर्जिता (भा० वन० १२३।७)। अनाभरणसम्पन्ना ऽनलङ्कारापि सुन्दरी। व्यूहेदेकाक्षरीभावात्पदेषूनेषु सम्पदे (ऋक्प्रा० १७।१३)। सम्पदे पूर्त्यै।

—पा (पा पाने)। यस्मिन्वृक्षे सुपलाशे देवैः सम्पिबते यमः (नि० १२।२९।१)। अर्थनिर्देशायेह पुनरुपन्यासः। सम्पिबते संगच्छत इति यास्कः।

—पाशय् (पाशय् पाशाण्णिचि नामधातुः)। पाशाद् विमोचने संगमने च (सरस्वती० १।३।४६)। पाशैः संयोजयति सम्पाशयति।

—प्लु (प्लुङ् गतौ)। मेघो यत्सम्प्लवते (छां० उ० २।४।१)। इदं पुस्तके

धृतम् । अन्यथाप्यर्थापयन्तीति निदर्शनायेहानूद्यते । वियति मिथः संगत्य प्लवत इत्येवमपि व्याख्यानयन्ति । अभ्रे चैवाभ्रसम्प्लवम् (सुश्रुत० उत्तर० ७।६) । मेघानां सर्वतो गमनं सम्प्लवः । रसनस्येन्द्रियान्तरस्य विकारो रसानुस्मृतौ रसगर्धिप्रवर्तितो दन्तोदकसम्प्लवभूतो गृह्यते ( न्याभा० ३।१।१२ ) । उदकसम्प्लव उदकसंचारः ।

—बाध्(बाधृ लोडने, लोडलं प्रतिघातः) । आकाशवतो वै लोकान्प्रकाशवते ऽसम्बाधान् (छां० उ० ७।१२।२) । सम्बाधोऽन्योन्योपमर्दः, तद्रहितान् । सम्बाधमन्ये सम्प्राप्य न शेकुश्चलितुं रथात् (मात्स्यपु० १७७।३३) । सम्बाधो जनसंमर्दः । सम्बाधः सङ्घट्टो वराङ्गं चेति हैमः । वराङ्गं भगो योनिः ।

—बुध् ( बुध अवगमने ) । एते सम्बोधयामस्त्वां धर्मं च अनुपालय (लिङ्गपु० पू० ६६।८३) । सम्बोधयामः प्रबोधयामः ।

—भिद् (भिदिर् विदारणे) । न संभिनत्ति (तै० सं० ६।२।११।५७) । न संभिनति नैकीकरोति । यन्न दुःखेन संभिन्नं न च ग्रस्तमनन्तरम् । अभिलाषोपनीतं च तत्सुखं स्वः पदास्पदम् ।। संभिन्नं व्यामिश्रम्, सम्पृक्तम् । इदंलक्षणं हि सुखमिष्टं याज्ञिकानाम् । अङ्गानां सम्भेदः (सुश्रुत० नि० अ० ५) । संभेदो भङ्गः । सभेदखेदजननी द्युनदी लसच्छ्रीः (स्कन्दपु० का० ४। ३०।८१) । सम्यग्भेदः संभेदः तस्य खेदः प्रतिघातो नाशः । स (विश्वामित्रः) ...विपाट् छतुद्र्योः संभेदमाययौ (नि० २।२४) । सम्भेदः सिन्धुसङ्गम इत्यमरः । पुरा संभेदाच्छायानामाहवनीयमुद्धरेत् ( ऐ० ब्रा० ७।११ ) । संभेदो मिश्रणं व्यतिकरः ।

—भू ( भू सत्तायाम् ) । सं ज्योतिषा ऽभूवम् (तै० सं० १।७।६।३) । समभूवम्—समगंसि । सोऽस्यात्माऽमुष्मिन्नादित्ये संभवति (जै० ब्रा० १।१७)। संभवति जायते । इन्द्रश्च बृहच्च (साम) समभवताम् (पञ्च० ब्रा० १२। १३।१) । समभवतां साकमजायेताम् । देवाश्च वा असुराश्चास्पर्धन्त यं देवानामघ्नन् न स समभवत्, यमसुराणां सं सोऽभवत् (पञ्च० ब्रा० १२।५। २३) । समभवत् समजीवत्, पुनर्जीवोऽभवत् । ज्ञातुं देवं संभवन्ति वदन्त्येवं पुरातनाः (शिवपु० २।२।३६।२६) । संभवन्ति प्रभवन्ति । क्षिप्र एव सम्भवति (शां० ब्रा० १।१) । संभवति समृध्यति, भूतिमान् भवति । अभ्युदयते । संविदाने रोदसी सं बभूवतुः (तै० ब्रा० १।२।१।२३) । सम्बभूवतुः—एकी बभूवतुः । अग्नीषोमौ समभवताम् (तै० सं० २।३।३।१) । ऐकमत्यं जग्मतुः ।

इयं ते शुक्र तनूरिदं वर्चस्तया संभव (तै० सं० १।२।४)। संभव सङ्गच्छस्व। वेलानिलः केतकरेणुभिस्ते सम्भावयत्याननमायताक्षि ( रघु० १३।१६ )। **सम्भावयति अलंकरोति।** अनेनसं स विज्ञाय तां त्वाष्ट्रीमश्वरूपिणीम्। स हरिर्हरिरूपेण मुखेन समभावयत् (स्कन्दपु० का० ४।१७।११८)॥ **समभावयत् मैथुनं चकार। हरिः सूर्यः। हरिरूपेणाश्वरूपेण।** यदुक्तमपि च यदेतद् वक्ष्यमाणम् इति उतशब्द एवमुभयं संभावयति (नि० ४।१५।२ इत्यत्र दुर्गः)। **संभावयति योजयति।** रौद्री द्वाविव संभूतौ यथा द्वाविव भास्करौ (भा० कर्ण० १५।३२)। **संभूतौ संगतौ समासन्नौ।** अपमानो वधः प्रोक्तः पुत्र संभावितस्य च (मात्स्यपु० १४६।५०)। **सम्भावितः सम्मानितः सत्कृतः।** वीराः संभावितात्मानो न दैवं पर्युपासते ( रा० २।२३।१६ )। **इदमुदाहृतचरं पुस्तके। व्याख्यानान्तरं न्यसिष्यामीत्यनुवदामि। इदम् इत्थं व्याख्याति भूषणकारः—सम्भावितः सम्यक् प्रापितः, दृढ इति यावत्। आत्मा मनो येषां ते। धीरा इत्यर्थः। क्लिष्टकल्पनया मुधा क्लिश्यते भूषणकारः।** मायासंभावितो वीर कालः सर्व-समाहरः (रा० उ० १०४।२)। **संभावितः=उत्पादितः। तत्परिणाम इत्यर्थः।** सम्भावितस्थितयो धटा व्याख्याताः (का० श्रौ० सू० १।४।१८)। **देशकालापेक्षया कृतव्यवस्था इत्यर्थः।** हिमान्ते पश्य सौमित्रे वृक्षाणां पुष्पसंभवम् ( रा० ४।१।६१ )। **पुष्पसम्भवं कुसुमसमृद्धिम्।** पर्वताः पतिताश्चैव चक्रुः सङ्ग्राम सम्भवम् (शिवपु० २।४।१५।५७)। **संभवं संकुलमित्यर्थो भाति।**

**—भृ (भृञ् भरणे, भृञ् धारणपोषणयोः)।** तस्मा एतामासन्दीं समभरन् (ऐ० ब्रा० ८।१२)। **समभरन् निरमिमत, निर्मितवन्तः।** दक्षिणेन पवनेन सम्भृतं प्रेक्ष्य चूतकुसुमं सपल्लवन् (रघु० १९।४३)। **संभृतं जनितम्।** पञ्चधा संभृतः कायो यदि पञ्चत्वमागतः। कर्मभिश्च शरीरस्थैस्तत्र का परिदेवना (गो० स्मृ० ३।४२ )। **संभृतो निर्मितः।** कर्मभिः स्वशरीरोत्थैरिति याज्ञवल्क्यस्मृतिपाठो ज्यायान्। प्रतिष्ठत्येषा हि संसारे संभृताघविनाशिनी (मार्क० २४५।४२)। **संभृतं पुञ्जीकृतम्, राशीकृतम्।** संभाराः खलु तेऽन्य एव विधिना यैरेष सृष्टो युवा (का० प्र० ७।२१९)। **संभाराः कारणकलापः, उपकरणजातम्।** तज्जहीहि रणारम्भदम्भ-संभारमञ्जसा ( परिजात० १३।२६)। **सम्भारो भारो भरो ऽतिशयः। अत्रार्थे सम्शब्दं न प्रयुञ्जते कवय इत्यस्थान एवायम्।** तस्मात्सव्यो हस्तयोः संभार्यतरः ( तै० सं० ५।३।३।५)।

—भ्रम् (भ्रमु चलने, भ्रमु अनवस्थाने)। सूचीतोदैः सम्भ्रमश्च शस्तः (सुश्रुत० उत्तर० ५०।१२)। सम्भ्रमो मनस आकुलीकरणम्। उद्भ्रमः सम्भ्रमश्चैव गणौ ते परिचारकौ। तवाज्ञया करिष्येते लोकस्योद्भ्रमसम्भ्रमौ (मात्स्यपु० १८०।९९)।

—मन् (मन ज्ञाने)। अदृष्टपूर्वव्यसनां भूयः सम्मन्तुमर्हसि (रा० २। ३८।१६)। सम्मन्तुं सम्मानयितुम्।

—मा (मा माने, माङ् माने)। पारीन्द्रः शिशुरेष पाणिपुटके संमातु किं तावता (सा० द० १०। १३ इत्यत्रोदाहरणम्)। संमातु समाविशतु, संभवतु, अवकाशं लभताम्। चमरी शबरीकेशैः संमिमीते स्ववालधिम् (स्कन्दपु० का० ४।३।४७) संमिमीते परिमाति।

—मि (डुमिञ् प्रक्षेपे)। यद्वत्सानपाकरोति सदोहविर्धाने एव संमिनोति (तै० सं० २।५।५।५)। संमिनोति प्रक्षिपति।

—यज् (यज देवपूजासंगतिकरणदानेषु)। एते असृग्रमिन्दव इति वहूनां संयजमानानां प्रतिपदं कुर्यात् (जै० ब्रा० १।६४)। संयजमानानां साकं जुह्वताम्।

—यत् (यती प्रयत्ने)। तया पपस्व धारया इति सङ्ग्रामं संयतिष्यमाणस्य प्रतिपदं कुर्यात्। जन्या वा एष गा आजिहीर्षति यः सङ्ग्रामं संयतते (जै० ब्रा० १।९२)। संयतते युध्यते। सं दानुचित्रा उषसो यतन्ताम् (ऋ० ५।५९।८)। संयतन्तां स्पर्धन्ताम्। दानेऽन्योन्यसङ्घर्षेण प्रवर्तन्तामित्याह। देवा वै मृत्युना समयतन्त (जै० ब्रा० १।१२)। मृत्यौ प्रातिभट्येन प्रावर्तन्त। मृत्युना समं विरोधमाचरन्नित्यर्थः।

—यम् (यम उपरमे)। संयमनी यमराजधानी भवति।

—या (या प्रापणे, प्रापणमिह गतिः)। यथाऽप्सु नावा सं यात्येवमेवैताभिर्यजमान इमाँल्लोकान्संयाति (तै० सं० ५।३।१०।४०-४१)। संयात्रेति समुद्रयानमाह रूढ्या। अतएव सांयात्रिकः पोतवणिग् भवति। कथं शक्ष्यसि संयातुं मां चैव परिरक्षितुम् (रा० ५।३७।४९)। संयातुं योद्धुम्।

—यु (यु मिश्रणामिश्रणयोः)। सं समिद्युवसे वृषन्नग्ने विश्वान्यर्य आ (तै० सं० २।६।११।४)। संयुवसे राशी करोषि (भक्तेभ्यः प्रदातुम्)।

—रभ् (रभ राभस्ये)। संरब्धाः संसर्पन्ति (छां० उ० १।१२।४)। संरब्धाः संलग्नाः। अश्मन्वती रीयते संरभध्वम् (ऋ० १०।५३।८)। संरभध्वं त्वरध्वम्।

—रुध् ( रुधिर् आवरणे )। संरोधादायुषश्चैव व्यस्यन्ते द्वापरे च ते (वेदाः) (मात्स्य० १४२।४८)। संरोधः संकोचः, अपकर्षः।

—रुष् ( रुष रिष हिंसायाम् )। संरोषयेत्तु नयनं भिषक् चूर्णैस्तु लावणैः (सुश्रुत० उत्तर० १५।२)। संरोषयेत् रक्ततामापादयेत्।

—लभ् (डुलभष् प्राप्तौ)। तौ (इन्द्रनमुची) समलभेताम् (तै० ब्रा० १।७।१)। समलभेताम् परस्परमर्दनपराबभूताम्। ऊषरं कर्मसस्यानां क्षेत्रं वाराणसी पुरी। यत्र संलभ्यते मोक्षः समं चाण्डालपण्डितैः (भोज० १०९)॥ सारवद्रम्यं वचः। सम्-शब्दस्तु नार्थस्योपकरोति वैयर्थ्यं चाश्नुते।

—लुभ् ( लुभ विमोहने, विमोहनमाकुलीकरणम् )। साधुविभक्ता नो लोकास्तान्न शक्ष्यामः संलोभयितुम् (जै० ब्रा० १।१५५)। संलोभयितुमाकुलीकर्तुम्।

—वद् (वद व्यक्तायां वाचि)। प्रतिप्रस्थातः पशुं संवदस्व (मानवश्रौ० २।५।१।२३)। संवदस्व अनुमानय। अनुकूलय। अन्तर्णीतण्यर्थको वदिः।

—वन् (वन षण संभक्तौ)। हृदयानुप्रवेशो हि प्रभोः संवननं परम् (कथा० ३४।१६९)। वशक्रिया संवननमित्यमरः।

—वल् (वल वल्ल संवरणे संचरणे च)। ततिषु संवलिताः खलु भास्वतः (पारिजात० १०।१६)। संवलिताः संगताः संमिश्रिताः।

—वह् (वह प्रापणे)। नृणां शतानि पञ्चाशद् व्यायतानां महात्मनाम्। मञ्जूषामष्टचक्रां तां समूहुस्ते कथं चन (रा० १।६७।४)॥ समूहुः=उन्नमितवन्तः, उत्थापितवन्तः। यथा गोमयान्कुर्विति संवाहे (मी० शा० भा० १।१।६।१४)। संवाहः समाहारः। स्वात्मानमैक्षत समूढमुपात्तनिद्रा (शं० दिग्० २।६४)। समूढं सम्यग्गूढम्।

—विद् (विद ज्ञाने, विद चेतनाख्याननिवासेषु)। वाग्घ्यष्टमी ब्रह्मणा संवित्ते (बृह० उ० २।२।३)। संवित्ते संवादं करोति। न चायं स्मर्ता सर्वं स्मृतिहेतुं संवेदयते (न्याभा० ३।२।३४)। संवेदयते चेतयतेऽनुभवति। यो

अनूचानो ब्राह्मणो युक्त आसीत् का स्वित् तत्र यजमानस्य संवित् (ऋ० ८।५८।१ वालखिल्ये)। संवित् प्रज्ञा। तत्र यजमानस्य प्रज्ञापाटवेन नार्थ इति भावः। कृत्वा तु तौ यथान्यायं यथार्हं तेन संविदम् (दुर्गा० १।२८)। संविदं संभाषाम्। अबुधैः कृतमानसंविदस्तव पार्थैः कुत एव योग्यता (शिशु० १६। ४७)। संवित् तोषणम्। संवित् स्त्रियां प्रतिज्ञायां सङ्केताचारनामसु। संभाषणे तोषणे चेति विश्वः। संविदा देयम् (तै० उ० १।११।३)। संविन्मैत्री।

—विश् (विश प्रवेशने)। अनिपद्यमानमिति न ह्येष कदाचन संविशति (ऐ० आ० २।१।६)। संवेशसं व्यापारोपरमः। एष प्राणः। नार्द्रपादस्तु संविशेत् (मनु० ४।७६)। संवेशनं शयने गात्रसंयोजनमिति मेधातिथिः। संवेशाय त्वोपवेशाय त्वा (तै० ब्रा० १।४।६।४)। सम्प्राप्यावस्थितिः संवेशः।

—वृ (वृञ् वरणे)। यावद् वस्त्रं च वेणीं च विस्रस्तां संवृणोम्यहम् (कथा० ६४।३८)। संवृणोमि व्यवस्थापयामि, समादधामि। ऋतौ व्यतीते नार्यास्तु योनिः संव्रियते तथा (सुश्रुत० शारीर० ३।७)। संव्रियते संकुचति। योनिर्गर्भाशयः। मुहुरङ्गुलिसंवृताधरोष्ठम् (शा० ३।२५)। संवृतं पिहितमाच्छादितम्। तस्य संवृतमन्त्रस्य (रघु० १।२०)। संवृतो गोपितः। ततो राज्ञां बहुशतैर्गजाश्वरथयायिभिः। संवृतं समरे भीष्मं देवैरपि दुरासदम् (भा० भीष्म० ८४।४३)॥ संवृतं वेष्टितं परिक्षिप्तम्। दृष्ट्या प्रसादामलया कुमारं प्रत्यग्रहीत् संवरणस्रजेव (रघु० ६।८०)। संवरणमित्यत्र सम्शब्दो विरुद्धमतिकृदिति सुत्यजः। अहो महाकवयोपि च्छन्दोवशगा वाचमाकुलयन्ति। संवरणं हि तत् (मालती० १)। संवरणं गोपनम्। याति विकृतिमपि संवृतिमत् किमु यन्निसर्ग-निरवग्रहं मनः (शिशु० १५।११)। संवृतिर्विकारगुप्तिः, तद्वत्। धीरमित्यर्थः।

—वृज् (वृजी वर्जने, वृजि इत्येके)। कथं न्वहमेषामिमाः क्षियः संवृञ्जीयेति (जै० ब्रा० २।१३९)। संवृञ्जीय आच्छिन्द्यां संविभजेय।

—वृत् (वृतु वर्तने)। तच्छश्वत् संवर्तते (छां० ६।१३।३)। तदुदकेऽभिप्रास्तं लवणमद्यापि सुष्ठु वर्तत इत्याह। सं ते वज्रो वर्ततामिन्द्र गव्युः (तै० ब्रा० २।४।३।१३)। संवर्ततां सम्यग् वर्तताम्। ओजस्तदस्य तित्विष उभे यत् समवर्तयदिन्द्रश्चर्मेव रोदसी (अथर्व० २०।१०७।२)। समवर्तयत् संयुते अकरोत्। अङ्गदो मुष्टिमात्मनः। संवर्तयत्सुसङ्क्रुद्धः(रा० ६।९८।२०)॥

**संवर्तयत् समवर्तयत् समगृह्णात्, अबध्नात्।** तेषां कोटिसहस्राणां राहस्रं समवर्तत (रा० ४।३७।२३) । **समवर्तत समवैत् ।** चितां चन्दनकाष्ठैश्च पद्मकोशीरचन्दनैः । आह्यचा संवर्तयामासू राङ्कवास्तरसंवृताम् (रा० ६। १११।११३)। **संवर्तयामासुः—निर्वर्तयामासुः—सम्पादयामासुः—रचयामासुः।** संवर्तमानाः समरे सन्दष्टोष्ठपुटा जनाः ( मात्स्य० १७७।३० ) । **संवर्तमानाः समासीदन्तः ।** संवर्तयन् शत्रुवधे समुद्यतः (रा० ४।२७।४८) । **मृगराजादीन् नाशयन् । संवर्धयन् शत्रुवधे समुद्यममिति पाठान्तरमिति भूषणकारः ।** अर्थेभ्योऽथ प्रवृद्धेभ्यः संवृत्तेभ्य इतस्ततः (रा० ६।८३।३२) । **संवृत्तेभ्यः समुदितेभ्यः समाहृतेभ्यः ।** कोपसंवर्तितेक्षणः (रा० ५।३८।२९) । **कोपेन संवर्तिते विवर्तिते ईक्षणे यस्य सः ।** उदरे संवर्तधानी··उपनिदधाति (जै० ब्रा० १।४८) । **संवर्ताः पुरोडाशपिण्डाः ।**

**—व्ये (व्येञ् संवरणे)** । तस्मै देवा अमृतास् संव्ययन्ताम् (तै० सं० ३।३। ११।३) । **संव्ययन्ताम् वसूनि संहृत्य ददत्वित्यर्थः ।** संवीतासितवाससम् (कथा० ७३।२८३)। **सितसिचयाच्छन्नम् ।** पुनरुत्स्यूतो जरत्संव्यायः (शां० ब्रा० १।५)। **जरत्संव्यायः पुराणं संव्यानं प्रावरणम् ।**

**—व्ली (व्ली वरणे)** । देवानां वै सुवर्गं लोकं यतां दिशः समव्लीयन्त (तै० सं० ५।३।२।७) । **समव्लीयन्त वृताश्छन्नास्तिरोहिता अभूवन् ।**

**—शी (शीङ् स्वप्ने)** । आपत्संशयिता श्रेयः (रा० ६।५७।११) । **संशयिता सांशयिकी ।**

**—शॄ (शॄञ् हिंसायाम्)** । तमभिपद्य त्रेधा समशृणन् (जै० ब्रा० १।९७) । **समशृणन् व्यशसन्, व्यकृन्तन् ।** सं वै गुरुर्भाः शृणाति (ऐ० ब्रा० ४।१३) । **संशृणाति हिनस्ति । क्षिणोति ।**

**—शो ( शो तनूकरणे )** । सैवास्य सेनां संश्यति ( तै० सं० २।२।८ ) । **संश्यति उत्साहवतीं करोति, उत्तेजयति ।**

**—श्री (श्रीञ् पाके)** । तैरात्मानं समश्रीणात् (पञ्च० ब्रा० ९।३।७) । **समश्रीणात् समस्करोत् । समगमयत् ।**

**—सद् (षद्लृ विशरणगत्यवसादनेषु )** । एताभिर्वै देवाः स्वर्गे लोके समसीदन् स्वर्गे लोके सीदामेत्येताः (पञ्च० ब्रा० २३।१९।२) । **समसीदन् आ-**

स्पदं लेभिरे । संसादय सुहृज्जनम् (रा० ४।११।३४) । **संसादय संगच्छ । स्वार्थे णिच् ।** देवता एवास्मै संसादयति (तै० सं० ५।१।४।२०) । **संसादयति संगताः स्थापयति ।**

**—सन् (वन षण संभक्तौ)** । देवानां पत्नीरुशतीरवन्तु नः प्रावन्तु नस्तुजये वाजसातये । तुजयेऽ पत्यजननाय चान्नसंसननाय (नि० १२।४५।१) । **अन्नसंसननायान्नलाभाय ।**

**—सिध् ( षिध गत्याम्, षिधु संराद्धौ )** । यत्संसाधयति ते विष्णुक्रमाः (सत्या० श्रौ० २७।२।३०) । **संसाधयति अनुव्रजति ।** ·· संसिद्धं प्रियराघवम् । सुमित्रा गच्छ गच्छेति पुनः पुनरुवाच तम् (रा० २।४०।८) । **संसिद्धं गमनोद्युक्तम् इति गोविन्दराजः ।**

**—सूद् (षूद क्षरणे)** । ऊर्जं संसूदेन (तै० सं० ५।७।१२।४३) । **संसूदः सततक्षरणो नासिकादिः ।**

**—सृज् (सृज विसर्गे)** । भियाऽमित्रान् संसृज ( अथर्व० ११।६।१२ ) । **संसृज युङ्ग्धि ।** पुनर्विश्वं संसृजति विभर्ति च पुनर्हरिः । **सम्शब्दोऽस्थाने ।** अमृतं विषसंसृष्टं त्वया वानर भाषितम् (रा० ५।३७।२) । **विषसंसृष्टं गरलसम्पृक्तम् ।**

**—सृप् ( सृप्लृ गतौ )** । संसर्पोऽसि (तै० सं० १।४।१४) । **संसर्प इति त्रयोदशो मास उच्यते । स हि द्वादशेन मासेन सह संसर्पति सङ्गच्छते ।**

**—स्तु (ष्टुञ् स्तुतौ)** । ते श्मशानसंस्तुताः (सत्या० श्रौ० २६।१।३८) । **श्मशानमिति कीर्तिताः, तत्तुल्या इत्यर्थः ।** चकार । समुद्रसेननाम्ना सा वणिजा सह संस्तवम् (कथा० २६।१०१) ।। **संस्तवः परिचयः ।**

**—स्तॄ (स्तॄञ् आच्छादने)।** प्रच्छन्नं क्रियतां गजाजिनमिदं वैरस्य संस्तारकम् (त्रिपुर० १।१६) । **संस्तारकं विस्तारकम् ।**

**—स्था ( ष्ठा गतिनिवृत्तौ )** । विद्युन्नीचकुलोद्गतेव युवति र्नैकत्र सन्तिष्ठते (मृच्छ० ५।१४) । **सन्तिष्ठते अवतिष्ठते ।** असंस्थितं वै रेतसः समृद्धम् (ऐ० ब्रा० ६।३) । **असंस्थितमसमाप्तमनुपरतं रेतसः सेचनम् ।** त्वां संस्थाप्य (मित्रमौपयिकं कर्तुम् रा० ५।२१।१९ इत्यस्य विवरणे गोविन्दराजवचनम्) । **संस्थाप्य हत्वा ।** यो भ्रातृव्यवान्त्स्यात् स पौर्णमासं संस्थाप्यैतामिष्टिमनुनिर्व-

पेत् (तै० सं० २।५।४)। **संस्थाप्य समाप्य।** श्यामानि चिरयुक्तत्वात्तथा संस्थानवन्ति च (रा० ५।१५।४३)। **संस्थानं सन्निवेशः। आभरणानीति विशेष्यम्।** तस्य संस्था कृतमिदं बालस्य परमेष्ठिनः (हरि० ३।२।३१)। **तस्य क्रतोः संस्था निष्ठा समाप्तिः।** अपरो ब्राह्मणस्तेषां चतुर्णामपि सर्वदा। संस्थामेकां ददात्येष चारुनादेन सर्वदा (बृ० क० को० १५७।२१)॥ **संस्था सम्यगाचारः समाचारः समुदाचारः।** यस्य संस्थे न वृण्वते हरी समत्सु शत्रवः (ऋ० १।५।४)। संस्थे रथे।

**—स्पश् (स्पश ग्रहणसंश्लेषणयोः)।** गार्ग्यो ह वै बालाकिरनूचानः संस्पष्ट आस (कौ० ब्रा० उ० ४।१)। **संस्पष्टः सर्वत्र प्रसिद्धः।**

**—हन्(हन हिंसागत्योः)।** पित्तं कफो द्वावपि वा संहन्येतेऽनिलेन चेत्(वाग्-भट० नि० अ० ६)। **संहन्येते स्त्यानी क्रियेते।** संहन्त्यपो दिव्या मारुतोग्निश्च वैद्युतः (सुश्रुत० वि० ३।१७)। **संहन्ति कठिनाः करोति।** कुमारं चापि संक्रुद्धः स्वशक्त्या संजघान सः (शि० पु० २।४।१०।१७)। **अस्थाने सम्शब्दः। जघानेत्येव साधु।** विष्णुरग्रस्थितो याति सबलः संहताञ्जलिः (हरि० ३।३२।३६)। **संहताञ्जलिः समानीतकरपुटः।** अयं ममाशां संहत्य शेते भूमौ धनञ्जयः (भा० वन० ३१३।१०)। **संहत्य निहत्य, प्रणाश्य।** पाषाणवत् संहननोपपन्नः (माधव० ३८।१४)। **संहननं काठिन्यम्।** ससङ्घातादीन् वाक् (शु० य० प्रा० १।६)। **सङ्घातः पुरुषप्रयत्न इत्युवटः।**

**—हा (ओहाङ् गतौ)।** विद्युतो ज्योतिः परिसंजिहानं मित्रावरुणा यदपश्यतां त्वा (ऋ० ७।३३।१०)। **सञ्जिहानमुत्थितम्।** संहाय सौर्याणि स्वस्त्ययनानि च जपित्वा (आश्व० गृ० २।३।१२)। **संहाय संशस्येति नारायणो वृत्तिकारः। सम्पूर्व ओहाङ् शय्यात उत्थाने रूढ इति प्रस्मरणप्रत्ययमेतत्। पूर्वसूत्रे संहाय अतो देवा ब्रुवन्तु न इत्यत्र संहायेत्युत्थायेत्येवं स्वेनैवार्थाभिधानात्।**

**—हृ (हृञ् हरणे)।** नदीनदेभ्यः संहृत्य तीर्थेभ्यश्च समन्ततः (रा० ४।२६।३१)। **संहृत्य=आहृत्य। संमिश्रीकृत्येति तु भूषणकारः।** सिक्ता रुधिरधाराभिः संहृत्य परमद्विपाः (रा० ३।७३।३६)। **संहृत्य अन्योन्यं प्रहृत्य।** संहृत्यैव शशिज्योत्स्नां महान्सूर्य इवोदितः (रा० ३।६४।५६)। **संहृत्य अभिभूय।** एको वेदश्चतुष्पादः संहृत्य पुनः पुनः (मात्स्य पु० १४४।१०)। **संहृत्य संक्षिप्य।** ···यज्ञ प्रावर्तयत प्रभुः। दैवतैः सह संहृत्य सर्वसाधनसंवृतः

(मात्स्य पु० १४३।५-६)। संहृत्य संगत्य समेत्य। संहारो जयता दिशो दश मया स्त्रीणां कृतः पुष्पके (आश्चर्य०। ३।२०)। संहारः संभूय हरणम्, आहरणमिति यावदिति शङ्करष्टीकाकारः। धेनूः कृत्वा यजमानः संहार-विहाराभ्यामुपतिष्ठते (सत्या० श्रौ० २३।२।३४)। संहारः समाहारः।

—हृष् (हृषु अलीके)। अस्थिविवरगते ऽस्थिपूर्णताऽस्थितोदः संहर्षो बलवांश्च (सुश्रुत० १।२६।६)। मारुतोपद्रवो रोमाञ्चप्रायो वेदनाविशेषः संहर्षः। सङ्घट्टनमित्येक इति डल्लनः।

## समनु (सम्+अनु)

—ई (ईङ् गतौ)। पदार्थ एव वाक्यार्थे समन्वीयते (सर्व० द० सं० पात० पं० ८०)। समन्वीयते=अन्वयं लभते।

—ज्ञा (ज्ञा अवबोधने)। संवासात्परुषं किञ्चिदज्ञानाद्वापि यत्कृतम्। तन्मे समनुजानीत…(रा० २।३९।३८)॥ क्षान्तमित्यनुज्ञां कुरुतेत्यर्थ इति भूषणकारः।

## समभि (सम्+अभि)

—गर्ज् (गर्ज शब्दे)। कथमेवमशक्तस्त्वमस्मान् समभिगर्जसि (भा० उ० १६२।५६)। समभिगर्जसि समाह्वयसे।

—द्रु (द्रु गतौ)। (पन्थानम्) अयोमुखैश्च काकाद्यैर्गृध्रैश्च समभिद्रुतम् (भा० स्वर्गा० २।२०)। समभिद्रुतमाक्रान्तम्।

—वृत् (वृतु वर्तने। नात्र कश्चिद् यथाभावं प्राणी समभिवर्तते (रा० २।१०५।२८)। यथाभिलाषं बन्धुभिः सह न भवतीत्युक्तं भवति।

—हृ (हृञ् हरणे)। तत्र यः फलान्तं पाकमवसाय्य क्रियान्तरमनारभ्य पुनः पाकमेवारभते स प्रधानक्रियां समभिहरति (पा० ३।१।२२ सूत्रे न्यासः)। समभिहरति पुनः पुनरनुतिष्ठति।

## समव (सम्+अव)

—इ (इण् गतौ)। अश्वैरश्विनावित्येतन्निर्वचनम्। अथास्मिन्पक्षे इतिहासे समवैति (नि० १२।१।८ दुर्ग०)। समवैति युज्यते संगच्छते। श्रुतिलिङ्गवाक्य-

प्रकरणस्थानसमाख्यानां समवाये पारदौर्बल्यमर्थविप्रकर्षात् (मी० ३।३।१४)। **समवायः संनिपातः, युगपत्प्राप्तिः।** यस्य कोशश्च दण्डश्च मित्राण्यात्मा च भूमिप। समवेतानि सर्वाणि स राज्यं महदश्नुते (रा० ४।२९।११)॥ **समवेतानि सह स्थितानि, समं विद्यमानानिः, परस्परानुबन्धीनि।**

**—दो (दो अवखण्डने)।** या न इमाः प्रियास्तनुवस्ताः समवद्यामहै (तै० सं० ६।२।२।१)। **समवद्यामहै समवद्याम, एकत्र सङ्घी कुर्मः।**

**समाङ् (सम्+आङ्)**

**—इ (इण् गतौ)।** मत्प्रियेष्वभिरक्ता न मृत्युं गणयन्ति ये। त्वत्प्रसादात्समेयुस्ते… (रा० ६।१२०।८)॥ **प्रत्यागच्छेयुः, सजीवेयुः, पुनर्जीवितमाप्नुयुः।** तद्यथा प्रवृत्तस्य (=वृत्तस्य वर्तुलस्य) अन्तौ समेतौ स्याताम् (शां० ब्रा० ५।१)। **समेतौ संयुक्तौ।**

**—गम् (गम्लृ गतौ)।** तारया प्रतिषिद्धोपि सुग्रीवेण समागतः (रा० ४।१७।१८)। **समागतः समाससाद, युयुधे।** तद् दार्शैरेव दातव्यं समागम्य स्वतोंशतः (मनु० ८।४०८)। **समागम्य संभूय।**

**—चर् (चर गतिभक्षणयोः)।**…तस्य च प्रथमं मया। ताम्बूलादिसमाचारः कर्तव्यो हि सदा भवेत् (कथा० ७५।१३८)। **समाचारः सत्कार उपचारः।**

**—ज्ञा (ज्ञा अवबोधने)।** यद्यहं तं समाज्ञास्यमीश्वरोऽसावनीश्वरः। तदा कथमदास्यं त्वां तस्मै मायास्वरूपिणे॥ **समाज्ञास्यम्=सम्यग् अज्ञास्यम्।** बन्धनसमाज्ञातो हि रागः। न च बन्धने सत्यपि कश्चिन्मुक्त इत्युपपद्यते (न्याभा० १। )। **समाज्ञातः संज्ञातः, बन्धनापरनामेत्यर्थः।**

**—दा (डुदाञ् दाने)।** ततो वाक्यं समाददे (रा० ६।११९।१२)। **वक्तुं प्रचक्रम इत्यर्थः।**

**—दिश् (दिश अतिसर्जने, दिशिरुच्चारणक्रिय इति भाष्यम्)।** भ्रातुः शृणु समादेशं सुग्रीवस्य महात्मनः (रा० ५।५१।३)। **समादेशं सन्देशम्।**

**—धा (डुधाञ् धारणपोषणयोः)।** यावता चित्रकूटस्य नरः शृङ्गाण्यवेक्षते। कल्याणानि समाधत्ते न मोहे कुरुते मनः (रा० २।५४।३०)॥

**समाधत्ते मनसा कर्तुमाशास्त इति तिलक: । प्राप्नोति आचरतीति वेति भूषणम् । तदवरम् ।** यद् बाहूनुद्गृह्णन्ति यजमानमेव तत् स्वर्गे लोके समादधति(जै० ब्रा० १।८६) । **समादधति सम्यङ् निवेशयन्ति प्रतिष्ठापयन्ति ।** तमहं त्वत्कृते पुत्र समाधास्ये जयोत्सुकम् (रा० १।४६।१५) । **समाधास्ये विगतवैरं करिष्यामीत्यर्थः ।** दानोपभोगवन्ध्या या सुहृद्भिर्या न भुज्यते । पुंसां समाहिता लक्ष्मीरलक्ष्मी: क्रमशो भवेत् (भोज० ६१) ।। **समाहिता समाहृता संचिता ।** पुण्ये नक्षत्रयोगे च मुहूर्ते च समाहिते (रा० २।१४।२५) । **समाहिते संनिहित इति भूषणम् । तथा च समागते इति पाठान्तरम् ।** न ते (दोषाः) शक्याः समाधातुं कथं चिदिति मे मतिः(भा० आश्रम० ५।२५) । **समाधातुं साधू कर्तुम् ।** दृष्टान्तसमाधिना च स्वपक्षः साधनीयो भवति (न्याभा० १।१) **समाधिरानुकूल्यम् ।** वीर्येण वक्तास्मि रणे समाधिम् (भट्टि० १२।६८) । **समाधिं प्रतीकारम् ।** समाधी रक्षति स्त्रीजनं न बाणाः (आश्चर्य० ३) । **समाधिश्चित्तस्थैर्यम् ।** न त्वं कामं समाधेया भर्तृशुश्रूषणं प्रति (रा० ६।११६।३५) । **समाधेया प्रार्थनापूर्वं नियोज्या ।**

**—नी (णीञ् प्रापणे)** । समानेष्यति सुग्रीवः सीतया सह राघवम् (रा० ४।३५।१४) । **समानेष्यति संयोक्ष्यति, संगमयिष्यति, घटयिष्यति ।**

**—म्ना (म्ना अभ्यासे)** । तद्भूतानां क्रियार्थेन समाम्नायोऽर्थस्य तन्निमित्तत्वात् (मी० १।१।२५) । **समाम्नायः पाठः ।**

**—रुह् (रुह बीजजन्मनि)** । न खल्वतिकोपनत्वादिना समारोपिताग्नित्वो माणवकः कदा चिदपि मुख्याग्निसाध्यां दहनपाकाद्यर्थक्रियां कर्तुमीश्वरः (सिद्धहेमचन्द्रकृत स्याद्वाद० १५) । **समारोपितोऽध्यारोपितः ।**

**—लभ् (डुलभष् प्राप्तौ)** । तदहं तावदद्यास्य पृष्ठमेव समालभे (कथा० ३७।१५) **समालभे** चन्दनेनानुलिम्पामि । **समालम्भो विलेपनमित्यमरः ।**

**—वप् (डुवप बीजसन्ताने)** । समोप्यापरं खरं पूर्वस्मिन्नुपव्यूहति(सत्या० श्रौ० २४।६।२) । **समोप्य समावापं कृत्वा, भारमाधाय ।**

**—विश् (विश प्रवेशने)** । कारकशब्दा निमित्तवशात् समावेशेन वर्तन्ते (न्याभा० २।१।१६) । **समावेश एकत्र सहावस्थानम् ।**

**—वृत्** (वृतु वर्तने)। स ह स्मान्यान् अन्तेवासिनः समावर्तयंस्तं ह स्मैव न समावर्तयति (छां० उ० ४।१०।१)। **समावर्तयति वेदाध्ययने समाप्ते आचार्यो ब्रह्मचारिणमाप्लाव्य गृहप्रत्यागमनमनुजानाति।**

**—शुच्** (शुच शोके, छन्दसि दीप्तौ)। तृतीयशब्दावरोधः संशोकजस्य (ब्रह्मसू० ३।१।२१)। **संशोकः स्वेदः।**

**—सद्** (षद्लृ विशरणगत्यवसादनेषु)। मोदमानाः समासेदुर्देवैः सह सुरारयः (मात्स्य पु० १४०।८)। **समासेदुः संयेतिरे युयुधिरे।**

**—स्कन्द्** (स्कन्दिर् गतिशोषणयोः)। स्कन्धो वृक्षस्य समास्कन्नो भवति (नि० ६।१७।४)। **समास्कन्न आक्रान्तः (शाखाभिः)।**

**—हन्** (हन हिंसागत्योः)। दृषदौ च समाहन्ति (तै० सं० १।६।६)। **शम्ययेति शेषः। समाहन्ति समं ताडयति।**

**—हृ** (हृञ् हरणे)। राजसूयं समाजह्रे (स्कन्द पु० का० ४।१४।३०)। **समाजह्रे संबभार, वितेने। अन्यत्र केवलस्याङः प्रयोगे पि स एवार्थः। स विश्वजितमाजह्रे यज्ञं सर्वस्वदक्षिणम् (रघु० ४।८६) इत्यत्र यथा।** कान्तेन कौतुकसमाहृतमानसेन (पारिजात० १२।३७)। **अस्थाने समाङौ। अनिष्टार्थ-प्रसञ्जनात्।** ततः कपिसमाहारमेकनिश्चयमागतम् (भट्टि० ७।३४)। **कपिसमाहारं वानरसमूहम्।**

**—ह्वे** (ह्वेञ् स्पर्धायां शब्दे च)। कच्चिन्नायं वचनात्सौबलस्य समाह्वाता देवनायोपयातः (भा० वन० ५।८)। **स्पष्टोऽर्थः।**

## समुद् (सम्+उद्)

**—अय्** (अय गतौ)। पौष्णं समुदयन्तं (दुग्धम्) (ऐ० ब्रा० ४।२६)। **समुदयन्तं समुदयमानं सन्तापवशादूर्ध्वं गच्छत्।**

**—इ** (इण् गतौ)। सूर्यो जगत्प्रकाशाय समुदेति जगत्यहो (पद्म पु० ५।५८।१२)। **अस्थाने सम्शब्दः।** यः समुदयं परिह्रापयति स राजार्थं भक्षयति (कौ० अ० २।९।१३)। **समुदयो राजग्राह्य उत्पत्तेः षड्भागः।**

**—ईर्** (ईर गतौ)। उदधाविव सर्वसिन्धवः समुदीर्णास्त्वयि नाथ दृष्टयः। न च तासु भवान् प्रदृश्यते प्रविभक्तासु सरित्स्विवोदधिः (स्याद्वाद० ३०

इत्यत्र हैमोद्धृतं सिद्धसेनदिवाकरवचनम् )। **समुदीर्णाः सङ्गताः। उच्छब्दस्त्वस्थाने।**

—तॄ (प्लवनतरणयोः) ततोऽर्जुनस्तु गाण्डीवात्समुत्तार्य गुणं तदा (स्कन्द पु० के० १८१।६४) **समुत्तार्य अवरोप्य।**

—श्वल् (श्वल आशुगमने)। उन्मदवाराणबुद्ध्या मध्येजठरं समुच्छ्वलति (गर्भः) (भामिनी० १।५६)। **समुच्छ्वलति वेगेनोत्क्रामति।**

—सृप् (सृप्लृ गतौ)। अहःपरिणतौ ध्वान्ते समुत्सर्पति (अमरु० ७६)। **समुत्सर्पति सम्मूर्च्छति वर्धमाने।**

—हन् (हन हिंसागत्योः)। कुलकोटिं समुद्धत्य शिवेन सह मोदते (स्कन्द पु० १।५।६२)। **समुद्धत्य उत्क्षिप्य, उन्नमय्य।**

## समुदाङ् (सम्+उद्+आङ्)

—इ (इण् गतौ)। गुणहान्यां तु परेषां समुदेतः सोदर्योपि भोजयितव्यः (सत्या० श्रौ० २७।५।३४)। **समुदेतो वृत्तादिभिर्युक्तः।**

—चर् (चर गतिभक्षणयोः)। यामि (=जामि) हरणजनितानुशयः समुदाचचार निज एव रुक्मिणः (शिशु० १५।५३)। **समुदाचचार उदियाय। उद्दिदीप इत्यर्थः। निजो नित्यः। प्रतिघः क्रोधः।** यथा भवति सुस्वस्थस्तथा त्वं समुदाचर (रा० ६।६१।२१)। **समुदाचर आचर।**

—वह् (वह प्रापणे)। ततो हत इति ज्ञात्वा तान्भक्षान्समुदावहत् (रा० ६।६६।१५)। **समुदावहत् अपावहत्, अपानयत्।** (अश्वाः) पुत्रं विराटराजस्य सत्वरं समुदावहन् (भा० द्रोण० २३।१७)। **समुदावहन् प्रापयन् (रथस्थम्)।**

—हृ (हृञ् हरणे)। एतेत्युच्चैर्हरिवरान् सुग्रीवः समुदाहरत् (रा० ४।३८।७)। **समुदाहरत् व्याहरत्।**

## समुप (सम्+उप)

—विश् (विश प्रवेशने)। प्रीतश्च परितुष्टश्च तां रात्रिं समुपाविशत्। (रा० ७।८२।४)। **समुपाविशत्। समविशत्। यापितवान् इत्यर्थः।** पद्भ्यामनु-

चिता गन्तुं द्रौपदी समुपाविशत् ( भा० वन० १४४।१ ) । **समुपाविशत् न्यषीदत् ।**

**—स्था ( ष्ठा गतिनिवृत्तौ )** । अपत्यलाभो वैदेहि त्वय्ययं समुपस्थितः (रा० ७।४२।३१) । **समुपस्थितः सन्निहितः ।**

**सन्नि (सम्+नि)**

**—अस् (असु क्षेपे)** । कृतसंन्यासा (कथा० ४।३६।५) । **कृतसमया, श्रितसंवित्का ।**

**—कृष् ( कृष विलेखने )** । न हि सेन्द्रियाणामन्यतमेन स्वरूपस्था सती (क्रिया) कदाचिदपि सन्निकृष्यते (नि० १।१।६ दुर्ग०)। **सन्निकृष्यते=इन्द्रियसन्निकर्षेण प्रत्यक्षी क्रियते ।** दमु (ऋक्तन्त्रे० ३।१।६) । **अथ वृत्तिः—पदमुकारो न सन्निकृष्यते । न सन्धीयत इत्यर्थः ।** न युक्तमेवंगुणसन्निकृष्टं विहाय पुत्रम् (रा० ४।२०।२२) । **गुणैः प्रत्यासन्नं तव सदृशमित्यर्थः ।** कस्य वा सन्निकर्षात्त्वं प्रविष्टा हृदयं मम (भा० शां० ३२०।५८) । **सनिकर्षः संकेतः ।** कर्मणा संनिकर्षाच्च सतां योगः प्रवर्तते (याज्ञ० ३।१६०) । **सन्निकर्षः सम्बन्ध इति बालक्रीडा ।** न चापि विद्येत स वीर देशो यस्मिन्भवेत् सोदरसन्निकर्षः (रा० ४।२४।२०) । **सन्निकर्षः सान्निध्यम् ।** यस्य नार्तो जनपदः सन्निकर्षगतः सदा (भा० शां० ११५।१६) । **सन्निकर्षगतः समीपवर्ती ।**

**—धा (डुधाञ् धारणपोषणयोः)** । यो महत्यर्थे समुदये स्थितः कदर्यः··· संनिधत्ते स्ववेश्मनि (कौ० अ० २।६।२५) । **संनिधत्ते संगृह्णाति संचिनोति ।** भवेत् सर्वौषधीस्नानं सम्यङ् नारी समाचरेत् । तदा पञ्चशरस्यापि सन्निधातृत्वमेष्यति (मात्स्य पु० ७०।३४) ।। **भवेदिति पूर्वेणान्वयि ।**

**—पत् (पत्लृ गतौ)** । संनिपत्य महातेजास्तांश्च सर्वान् वनौकसः (रा० ६।६१।२) । **संनिपत्य सङ्गम्य ।** संनिपत्य स्वविषये भयं राष्ट्रे प्रदर्शयेत् ( भा० शां० ८७।२६ ) । **स्वविषये तेषु स्वायत्तेषु ग्रामेषु संनिपत्य गत्वा ।** संभवति च सन्निपत्योपकारित्वे आरादुपकारित्वं नाश्रयितुं युक्तम् (मी० १०।१।११ सूत्रे कुतूहलवृत्तौ)। **सन्निपत्य साध्येनोत्तमं संश्लिष्य संगत्य सन्निकृष्य । सामीप्यसम्बन्धेनेति यावत् ।** वैरूप्यमङ्गेषु कशाभिघातो मौण्ड्यं तथा लक्षणसन्निपातः ( रा० ५।५२।१५ ) । **लक्षणसन्निपातो दूतयोग्याङ्कनसम्बन्धः ।** अप्रधानकालं सकृदसंनिपातात् ( का० श्रौ० १।७।१४ ) । **संनिपातः सम्बन्धः केनचित्कर्मणा ।** आकम्प्राग्रैः केतुभिः संनिपातं तारोदीर्णग्रैर्वनादं व्रजन्तः(शिशु०

१८।३७) । सन्निपातः सङ्घर्षः, स्पर्धा । तयोर्देवासुरसमः संनिपातो महानभूत् (भा० वि० ५६।२) । सन्निपातः समागमः सङ्ग्रामः ।

—युज् (युजिर् योगे) । तासां संनियोगमेकैकं हरिवल्लभा (हरि० २।७६।१६) । संनियोगं दिव्यवस्त्राभरणादिकम् ।

—विश् (विश प्रवेशने) । आख्याति ते प्रियतमस्य हि संनिवेशम् (मृच्छ० ५।३३) । संनिवेशम्=निवेशं निवेशनं गृहम् ।

—सृज् (सृज विसर्गे) । भरते संनिकृष्टाः स्मः सौनिके पशवो यथा (रा० २।४८।२८) ।। संन्निकृष्टा निक्षिप्ताः ।

सम्प्र (सम्+प्र)

—ईक्ष् (ईक्ष दर्शने) । संगतार्थं समर्थं संसृष्टार्थं समर्थं सम्प्रेक्षितार्थं समर्थं सम्बद्धार्थं समर्थम् ( पा० २।१।१ सूत्रे भाष्ये ) । सम्प्रेक्षितार्थं सम्बद्धार्थमिति पर्यायनिर्देशः ।

—दा (डुदाञ् दाने) । अथातः सम्प्रत्तिः(बृह० उ० १।५।१७) । सम्प्रत्तिः सम्प्रदानम् । ऋत्विज ऋतुयाजान्यजन्त्यसम्प्रदायम् ( ऐ० ब्रा० ५।९ ) । असम्प्रदायम् अन्यस्मा अदत्त्वा । णमुलन्तमेतत् । दीयतां सम्प्रदानं च परिष्वज्य च वानरान् (रा० ४।११।३४) । सम्प्रदानं देयद्रव्यम् ।

—युज् (युजिर् योगे) । बलिना परेण सह सम्प्रयुज्यते(शिशु० १५।१६)। सम्प्रयुज्यते सम्बध्यते । बलिनाऽरिणा । तमेवानुप्रविशतीत्यर्थः । यथैकस्मिन्घटाकाशे रजोधूमादिभिर्युते । न सर्वे सम्प्रयुज्यन्ते तद्वज्जीवाः सुखादिभिः(माण्डूक्यकारिकायां ३।५ गौडपादः) ।। सम्प्रयुज्यन्ते संसृज्यन्ते ।

—वद् ( वद व्यक्तायां वाचि ) । संप्रवदन्ति वीणाः (सत्या० श्रौ० २६।१।२६) । प्रवदन्ति युगपत् प्रक्वणेयुः।

—सद् ( षद्लृ विशरणगत्यवसादनेषु ) । एवमेवैष सम्प्रसादोऽस्माच्छरीरात्समुत्थाय (छां० उ० ८।१२।२) । सम्प्रसादो जीवात्मा ।

—सू ( षूङ् प्राणिगर्भविमोचने ) । अकालप्रसवा नार्यः··· । विकृतप्रसवाश्चैव युग्मसम्प्रसवास्तथा (मात्स्य पु० २३५।१) ।। सम्प्रसवः सहजन्म ।

## सम्प्रति (सम्+प्रति)

—इ (इण् गतौ)। सम्प्रत्ययप्रामाण्याच्च (पा० १।२।५६ सूत्रे कैयटः)। सम्प्रत्ययो व्यवहारः।

## संवि (सम्+वि)

—पद् (पद गतौ)। सम्प्रतिपत्तिभावाच्च (वै० सू० २।२।३५)। सम्प्रतिपत्तिः प्रत्यभिज्ञानम्।

—ईक्ष् (ईक्ष दर्शने)। यूकां संवीक्ष्य वीक्ष्यैव भक्षयेद् दन्तकोटिभिः (स्कन्द पु० का० ४।३।३६)। संवीक्ष्य=अन्विष्य=विचित्य। संवीक्षणं विचयनमित्यमरः।

—ज्ञा (ज्ञा अवबोधने)। असंविज्ञातमनिबन्धनमन्धतमसमिव प्रविशामि (उत्तर० ७)। असंविज्ञातमननुभूतपूर्वम्।

—धा (डुधाञ् धारणपोषणयोः)। यथा च यात्यादयः संविधाने न वर्तन्ते (पा० १।२।६३ सूत्रे प्रदीपे)। संविधानं प्रयोजकव्यापार इत्युद्द्योतः। संविधानं च विहितं रथाश्च किल सज्जिताः (भा० द्रोण० ७५।२५)। इन्द्रियान्तराणामौदासीन्येन संविधातृत्वात् (पा० १।२।५६ सूत्रे भा० प्रदीपे)। संविधातृत्वं सहकारित्वम्।

—भज् (भज सेवायाम्)। शतेन वार्या ऋत्विजः (पा० ३।१।१०१ सूत्रे वृत्तिः)। ऋत्विजो हि धनेन संविभक्तव्या इत्यस्त्यनिरोधः (=अप्रतिबन्धः) इति न्यासः। संविभक्तव्या वरीतुं शक्याः।

—भा (भा दीप्तौ)। यं यं लोकं मनसा संविभाति (मुण्डक० ३।१।१०)। संविभाति संकल्पयति।

—वह् (वह प्रापणे)। संविवहन्ते गर्गैः (पा० १।३।१५ सूत्रे भाष्ये)। गर्गैः सह कन्यकाद्वारकं सम्बन्धं प्राप्नुवन्तीत्याह।

—स्था (ष्ठा गतिनिवृत्तौ)। ये तु तत्रोत्तरे तीरे···। पूर्वं संविष्टिताः शूराः···(रा० ५।५७।१९)।। संविष्ठिताः समवस्थिताः।

# अनु

—अञ्च् (अञ्चु गतिपूजनयोः) । जामि वा एतद् यज्ञस्य क्रियते यदन्वञ्चौ पुरोडाशावुपांशुयाजमन्तरा यजति(तै० ब्रा० १।३।१।३)। अन्वञ्चौ अव्यवहितौ । जामि आलस्यजनकम् । ये चैनमन्वञ्चो भवन्ति (शां० ब्रा० २।५)। अन्वञ्चोऽनुगन्तारः ।

—इ (इण् गतौ) । पद्मं तावत्तवान्वेति मुखम् (काव्यादर्शे २।२०) । अन्वेत्यनुकरोति ।

—इष् (इष गतौ) । संभूय च मदर्थोऽयमन्वेष्टव्यो नरेश्वराः (रा० ७। ४४।२०) । अन्वेष्टव्या हि वैदेह्या रक्षणार्थे सहायता ( रा० २।४६।६ ) । अन्वेष्टव्या विचेया । सहायता सहायसमूहः ।

—कथ् ( कथ वाक्यप्रबन्धे ) । तद् द्वेष्यं विजानीयादिदमा कथितमिदमैव यदनुकथ्यते ( पा० २।४।३२ सूत्रे भाष्ये ) । अनुकथ्यते पश्चात् कथ्यते ।

—काश् (काशृ दीप्तौ) । इडा वै मानवी यज्ञानूकाशिन्यासीत् (तै० ब्रा० १।१।४।४) । यज्ञतत्त्वप्रकाशनसमर्था । अनूकाशं प्रकाशेन (तै० सं० ५।७।१२। ४४)। अनूकाशो द्यावापृथिव्योर्मध्यम् । अनुक्रमेण काशन्तेऽ भासन्तेऽ स्मिञ्ज्योतींषि । इकः काश इति दीर्घः ।

—क्षि (क्षि निवासगत्योः) । येषां च पुत्रेष्वनुक्षियत्सु यो निर्विकारः स पितृदायं लभेत (कौ० अ० ५।१।५५) । अनुक्षियत्सु अतिजीवत्सु । अपकारसमर्थाननुक्षियतो वा भर्तृविनाशम् ( कौ० अ० ३।५।१७ ) । अनुक्षियतोऽनुशोचतः ।

—ख्या (ख्या प्रकथने) । अन्वग्निरुषसामग्रमख्यत् (अथर्व० ७।८२।४) । अन्वख्यत् अनु पश्चात् प्रकाशते ।

—गम् (गम्लृ गतौ)। यदा वा अग्निरनुगच्छति (श० ब्रा० १०।३।३।८) । इदं धृतपूर्वं पुस्तके । अर्थस्तु न निरदेशि, स निर्दिश्यते । अनुगच्छति शाम्यति । त्रींश्चानुगच्छति रसो लवणः कटुको द्वयम् (सुश्रुत० उत्तर० ६३।४) । अनुगच्छति अनुगतो भवति, सम्बद्धो भवतीत्यर्थः ।

—गॄ (गॄ शब्दे) । अनुगरः प्रतिगर इति हि शंसितुः ( होतुः ) प्रोत्साहने वर्तत इति (पा० १।४।४१ सूत्रे काशिका) । **निगदव्याख्यातम् ।**

—ग्रह् (ग्रह उपादाने) । ये मानं मे ऽनुगृह्णन्तो वीरवन्तमकर्त मा (ऐ० ब्रा० ७।१८) । **अनुगृह्णन्त आनुकूल्येन गृह्णन्तः स्वीकुर्वन्तः । मानं मतमिति सायणीयं भाष्यम् ॥**

—चर् ( चर गतिभक्षणयोः ) । तस्य व्रतान्यनु वश्चरामसि ( ऋ० ८। २५।१६) । **अनुचरामः कुर्मः ।** गोदावरीमनुचरन् वनोद्देशांश्च पुष्पितान् (रा० १२६।३४ ) । **अनुचरन् विचरन्, पर्यटन्, अटाट्यमानः ।** सर्पव्यालानुचरिता मृगद्विजसमाकुला (पम्पा) (रा० ४।१।७) । **अनुचरिता व्याप्ता ।**

—चि (चिञ् चयने) । आ मूलाच्छाखाभिरनुचितः (ऐ० ब्रा० २।१) । **अनुचितः=आचितः प्रचितः ।**

—चित् (चिति स्मृत्याम्) । आसीनश्च शयानश्च गच्छंस्तिष्ठन्ननुव्रजन् । भुञ्जानोऽथ पिबन्वापि रुद्रमेवान्वचिन्तयत् (मात्स्य पु० १८०।७) । **अन्वचिन्तयत् अनुक्रमेण सततमचिन्तयत् ।**

—ज्ञा (ज्ञा अवबोधने) । न चायं विद्यमानं सत् किंचिदनुजानाति (न्याभा० २।१।४३) । **अनुजानाति अभ्युपैति ।** कृतकार्यो गास्तास्तु नानुजानाति मे गुरुः ( हरि० १।५५।२४ ) । **नानुजानाति न प्रत्यर्पयति ।** प्रसिद्धे प्रयोगे वक्तुर्यथाभिप्रायं शब्दार्थयोरनुज्ञा प्रतिषेधो वा न च्छन्दतः (न्याभा० १।२। २४) । **अनुज्ञा स्वीकारः ।**

—दिश् (दिश अतिसर्जने) । यथादेवतमेवैनाः प्रतिगृह्णाति वायवे त्वा वरुणाय त्वेति यदेवमेता नानुदिशेत् ( तै० सं० ६।१।४।३० ) । **अनुदिशेत् अनुक्रमेण कीर्तयेत् ।**

—द्रु (द्रु गतौ) । अथोत्तरमर्धर्चमनुद्रुत्य स्वाहा करोति (श० ब्रा० ७। ४।२।२६) । **अनुद्रुत्य अनुक्रम्य उच्चार्य ।**

—ध्यै (ध्यै चिन्तायाम्) । कुपितो गार्हपत्य एनं यजमानं हिंसितुमनुध्यायति ( तै० ब्रा० २।१।४।३ ) । **अनुध्यायति कामयते ।** ततः स्वविद्यानुध्यानाद् यथावृत्तमवेत्य तत् (कथा० ९०।१५७) । **अनुध्यानं चिन्तनम् ।**

—नाथ् (नाथृ नाधृ याच्ञोपतापैश्वर्याशीःषु) । देव हंसावती राजसुता त्वामनुनाथति (कथा० ७४।२२४) । **अनुनाथति प्रार्थयते ।**

—नी (णीञ् प्रापणे)। उरुं नो लोकमनुनेषि विद्वान् (शां० ब्रा० २५। ७)। बृहन्तं लोकं नो नयेत्याह। अनुशब्दो नार्थे विशेषं करोति। स्त्रियमनुनयतीत्थं व्रीडमानां विलासी (शिशु० ११।३७)। अनुनयति अङ्गीकारयति। उवाच रामः परवीरहन्ता स्ववेक्षितं सानुनयं च वाक्यम् (रा० ४।३१।५)। सानुनयं सप्रसादम् इति रामानुजीयम्।

—पत् (पत्लृ गतौ)। सर्पव्यालत्रासनार्थं गोचरानुपातज्ञानार्थं च त्रस्नूनां घण्टातूर्यं च बध्नीयुः (कौ० अ० २।२९।२२)। अनुपातः संचारः। पृष्टतो भग्नरक्षा भग्नानुपातः (कौ० अ० १०।५।५३)। अनुपातः= अनुसारः।

—पाल् (पा रक्षणे लुगागमः)। सुग्रीवस्य नदीनां च प्रसादमनुपालयन् (रा० ४।२८।६३)। अनुपालयन् प्रतिपालयन्।

—पृच् (पृची सम्पर्के)। गात्रानुपृक्तेन शुकप्रभेण नारीव लाक्षोक्षितकम्बलेन (रा० ४।२८।२४)। अनुपृक्तेन सम्पृक्तेन।

—प्लु (प्लुङ् गतौ)। इतरं तु···बाह्याध्यात्मिकोभयनिमित्तास् त्रिपर्वाणस्तापा अनुप्लवन्ते (यो० सू० २।१५ भा०)। अनुप्लवन्ते व्याप्नुवन्ति।

—बन्ध् (बन्ध बन्धने)। प्रविशन्त्यपि हि स्त्रियश्चितामनुबध्नन्त्यपि मुक्तजीविताः (सौन्दर० ८।४२)। अनुबध्नन्ति अनुसरन्ति। साधु वादिनी सती किमिदमशोभनमभिधत्से इति कथामनुबध्नाति (का० सू० ५।४।२६)। अनुबध्नाति, अनुसन्तनोति, प्रवर्तयति। प्रतिस्कीर्णं हं ते वृषल भूयात्, तथा ते वृषल विक्षेपो भूयाद्यथा हिंसामनुबध्नाति (पा० ६।१।१४ सूत्रे वृत्तौ)। हिंसां फलतीत्याह। अनुबन्धः खलु सः। यः कर्तारमवश्यमनुबध्नाति कार्यादुत्तरकालं कार्यनिमित्तः शुभो वाप्यशुभो वा भावः(चरक० वि० ८।६)। अनुबध्नाति उपतिष्ठति, उपैति। अनुबन्धस्त्वायतीयं फलम्। शान्तज्वरोपि शोध्यः स्यादनुबन्धभयान्नरः (सुश्रुत० उत्तर० ३९।७१)। अनुबन्धः पुनरुपद्रवः। गण्डादुत्पाट्य मांसेन सानुबन्धेन जीवता (सुश्रुत० १।१६।१३)। सानुबन्धेन अनुबद्धेन गण्डप्रदेशलग्नेन। जीवता शोणितसहितेन। अनुबन्धश्च पापोऽत्र शेषश्चाप्यवशिष्यते (भा० उ० ७२।५८)। अनुबन्धो दोषोत्पादः। इत्ययाचत तां सोऽथ बालत्वादनुबन्धतः (कथा० ६५।७६)। अनुबन्धो निर्बन्धः। अनुबन्धः

प्रधानम्, अनुबन्धोऽप्रधानम् । स्वतन्त्रो व्यक्तलिङ्गो यथोक्तसमुत्थानोपशमो भवत्यनुबन्ध्यः, तद्विपरीतलक्षणस्त्वनुबन्धः (चरक० चि० अ० ६) । तत्रानुबन्धं प्रकृतिं च सम्यग् ज्ञात्वा ततः कर्म समारभेत (चरक० सूत्र० १६।१८) । अनुबन्धः पश्चात्कालजातो रोगः । साकं यन्तुः समदेनानुबन्धी द्रूनोऽभीक्ष्णं वारणः प्रत्यरोधि (शिशु० १८।३६) । अनुबध्नातीत्यनुबन्धी अनुसरणशीलः ।

—बुध् (बुध अवगमने) । तद्धोभये देवासुरा अनुबुबुधिरे (छां० उ० ८।७।२) । तत् प्रजापतेर्वचः कर्णाकर्णि श्रुतवन्त इत्यर्थः । अनुशब्दः पारम्पर्ये ।

—ब्रू (ब्रूञ् व्यक्तायां वाचि) । अथ यदनुब्रूते तेन ऋषीणाम् (बृह० उ० १।४।१६) । अनुब्रूते स्वाध्यामधीते । अनुवचनमिति स्वाध्यायार्थे प्रसिध्यति ।

—भू (भू सत्तायाम्) । अयमत्र भवतो दशमः संवत्सरो विद्यागृहमधिवसतः । प्रविष्टोसि षष्ठवर्षमनुभवन् (काद० चन्द्रापीडोद्देश्यकोक्तिः) ।

—मन् (मन ज्ञाने) । परमतमप्रतिषिद्धमनुमतं भवति । अनुमतमनुज्ञातमभ्युपगतम् । तेषामपि हि सर्वेषामनुमानमुपागतम् । गच्छाम प्रविशामेति··· (रा० ४।५२।१३) ॥ अनुमानमङ्गीकरणमिति भूषणम् ।

—मन्त्र् (मत्रि गुप्तपरिभाषणे) । प्रान्याभिर्यच्छत्यन्वन्यै मन्त्रयते (तै० सं० ५।१।६।३४) । अनुमन्त्रयते = अभिमन्त्रयते ।

—मृ (मृङ् प्राणत्यागे) । न चेदेनमनुम्रिये (कथा० ८८।३५) ।

—युज् (युजिर् योगे)। त्वां नैते ह्यनुयुञ्जेयुः प्रत्यक्षं प्रवदामि ते (रा० ४।५४।१०) । अनुयुञ्जेयुः = अनुयुञ्जीरन् = अनुवर्तेरन् । नैर्गुण्यमेव पश्यन्ति न गुणाननुयुञ्जते (भा० शां० ११६।५४) । न गुणाननुयुञ्जते ज्ञानैश्वर्यादीन् गुणानात्मनि संवेद्यतामापाद्य परेषु न योजयन्ति । विंशतिवर्षोपेक्षितमनवसितं वास्तु नानुयुञ्जीत (कौ० अ० ३।१६।३१) । नानुयुञ्जीत न प्रार्थयेत, ममेदमिति नाभियुञ्जीत । मृगलिप्सुरहं भद्रे पानीयार्थमुपागतः । बहुधाप्यनुयुक्तोस्मि तदनुज्ञातुमर्हसि (भा० आदि० ८१।१६) ॥ बहुधाऽनुयुक्तः कृतबह्वनुसरणः । पलायिते मृगे श्रान्त इत्यर्थः । वैषम्ये सर्वत्रानुयोगं दद्यात्

( कौ० अ० २।८।२७ ) । एकदेशेनाभ्युपगमे सति सर्वेष्वभियोगेषु परीक्ष्यः स्यादित्यर्थः । एतेषामनुयोगेन कृतं ते स्वापनं महत् (कौ० अ० १४।३।२०) । अनुयोगः प्रतिविधानोपदेशः ।

—रुध् (रुधिर् आवरणे) । चापल्यादनुरुन्धते तदितरं पन्थानमन्धा नराः (विश्व० च० २२।२९४) । अनुरुन्धते अनुसरन्ति ।

—रुध् (अनोरुध कामे) । नानुरोत्स्ये जगल्लक्ष्मीम् (भट्टि० १६।२३) । अनुरोत्स्ये कामयिष्ये । पुराहमाश्रमे वासं रामपादानुवर्तिनी । अनुरुध्यापि सौमित्रे···(रा० ७।४८।५) ।। अनुरुध्य कामयित्वा । न मे ऽनुरोधोऽस्ति कुतो विरोधः (सौन्दर० १७।६७) । अनुरोध आनुकूल्यमनुरागः ।

—वद् ( वद व्यक्तायां वाचि ) । अन्वेको वदति यद् ददाति तत् (ऋ० २।१३।३) । यजमानो यद्धविर्ददाति होता तद् याज्यानुवाक्याभ्यां देवताः स्मारयति (इति सायणः) ।

—वास् ( वास उपसेवायाम् ) । स्नेहविरेचनास्थापनानुवासनैश्चैनं दशरात्राहृतवेगमुपक्रमेत् ( सुश्रुत० चि० ५।२७ ) । अनुवासनं स्नेहादियुता वस्तिः ।

--विद् ( विद्लृ लाभे ) । अन्नादिनीं ते सरमे प्रजां करोमि या नो गा अन्वविन्दः (जै० ब्रा० २।४४०) । अन्वविन्दः=अन्विष्यालभथाः ।

—वृत् (वृतु वर्तने) । राक्षसेनानुवृत्ताया मैथिल्याश्च पदान्यथ (रा० ३।६४।३८) । अनुवृत्ताया अनुसृतायाः ।

—व्यध् (व्यध ताडने) । यथाग्निरिद्धः पवनानुविद्धो वज्रं यथा सुरराजमुक्तम् । रोगास्तथैते खलु दुर्निवाराः·· । (सुश्रुत० उत्तर० ५१।३६) ।। अनुविद्धः संहितः संगतोऽनुगतः ।

—शंस् (शंसु स्तुतौ) । तदाहुः कस्मात्स्तुतमनुशस्यते कस्मात्स्तोममति शंसन्ति (शां० ब्रा० २८।१०) ।

—शक् (शक्लृ शक्तौ) । न तत्ते अन्यो अनुवीर्यं शकत् (ऋ० १०।४३।५) । अनुकर्तुं शक्नोतीत्यर्थः ।

—शास् (शासु अनुशिष्टौ)। न ह्यनिष्टोऽनुशिष्यते (रा० ३।१०।२१)। अनुशिष्यते उपदिश्यते।

—शी (शीङ् स्वप्ने)। रुदितानुशयो नार्या जीवन्त्याः परिदेवनम् (हरि० २।३१।३७)। रुदितानुशय इति। रुदितेऽनुशय आशयोऽन्तःकरणम्।

—सच् (षच समवाये)। अङ्गिरसः स्वर्गं लोकं यतो रक्षांस्यन्वसचन्त (पञ्च० ब्रा० ८।६।५)। अन्वसचन्त=अन्वगच्छन्। अङ्गिरस इति द्वितीया-बहुवचनं यत इति च। रक्षांसि योषितमनुसचन्ते (श० ब्रा० ३।२।१।४०)। अनुसचन्ते संगच्छन्ति अनुसरन्ति।

—सञ्ज् (षञ्ज सङ्गे)। मस्जेरन्त्यात्पूर्वं नुममिच्छन्त्यनुषङ्गसंयोगा-दिलोपार्थम् (पा० १।१।४७ सूत्रे वृत्तौ)। नकारस्योपधाया अनुषङ्ग इति पूर्वाचार्यैः संज्ञा कृता।

—सृ (सृ गतौ)। सर्वान्धर्माननुसृत्यैतदुक्तम् (भा० शां० १०८।३३)। अनुसृत्य एकीकृत्य। सारबलमग्रतः कृत्वा कोटीष्वनुसारं कुर्यात् (कौ० अ० १०।५।४६)। सारमुत्तमम्। अनुसारं सारोपमम्। साराद्वूनं किञ्चिदप-कृष्टम्।

—स्था (ष्ठा गतिनिवृत्तौ)। आत्मानमनुतिष्ठ त्वं स्वभावेन नरर्षभ (रा० २।१०५।४१) आत्मानं स्वभावेन योजयेत्याह। पुस्तके तु तिलकानु-सारि विवरणम्। तच्चाध्याहारबहुलमित्यरुचिकरम्। तस्मादाप्तपुरुषाधि-ष्ठितः संनिधाता निचयाननुतिष्ठेत् (कौ० अ० २।५।२१)। निचयाननुतिष्ठेत् सङ्ग्रहान् कुर्यात्। तं यो ऽनुतिष्ठेत्सर्वत्र प्राध्वं चास्य सदाचरेत् (सत्या० श्रौ० २६।६।८)। तमेवं भूतमात्मानं योऽनुतिष्ठेत्=उपासीत। अनु व्रताय निमितेव तस्थुः (ऋ० ३।३०।४)। अनुतस्थुः=अनुतष्ठुः=अनुकूलास्ति-ष्ठन्ति। यत्रेन्द्रो भगवान् इन्द्रः सर्वदेवैरनुष्ठितः (स्कन्दपु० के० १३४।१६)। अनुष्ठितः सेवितः, उपस्थितः, उपासितः।

—स्पश् (स्पश ग्रहणसंश्लेषणयोः)। अनुस्पष्टो भवत्येषो अस्य यो अस्मै रेवान्न सुनोति सोमम् (ऋ० १०।१६४।४, अथर्व० २०।६६।४)। अनुस्पष्टः सप्रसाददर्शनः।

—हा (ओहाङ् गतौ)। अन्विन्द्रम्... आपो अजिहत जायमानम् (तै० सं० १।७।१३)। अन्वजिहत=अनुगच्छन्ति। अनुजायन्त इत्यर्थः।

—हृ ( हृञ् हरणे )। उदयगिरिदरीतः प्रोल्लसद् बिम्बमिन्दोरनुहरति सुदत्याः पीनलावण्यमास्यम् ( रुक्मिणी० ३।८ )। अनुहरति इन्दुबिम्बेन संवदति। ततोऽनुजह्रुस्तं हृष्टा विवाहविधिमुत्तमम्। (वामन० ६५।१६०)। अनुजह्रुर्विदधुः। द्वितीये स्थायित्ववृत्त्याशा मूषिकभक्षितबीजादावङ्कुरादि-प्रार्थनामनुहरेत् (सर्व० द० बौ० पं० १०४)। उक्तोऽर्थः।

## अन्वव (अनु+अव)

—इ (इण् गतौ)। सोऽब्रवीदिन्द्रः कश्चाहं चेमान् इतोऽसुरान् रात्रीम-न्ववेष्याव इति (ऐ० ब्रा० ४।५)। अवेष्यावोऽपसारयिष्याव इति सायणः। चत्वार्येषामन्ववेतानि सद्भिः चत्वारि चैषामनुयान्ति सन्तः (भा० उ० ३५। ५४)। अन्ववेतानि नित्यं सम्बद्धानि।

—चर् (चर गतिभक्षणयोः)। रक्षसामनन्ववचाराय न पुरस्तात् परि-दधाति (तै० सं० ६।२।१।६)। अनन्ववचाराय अननुप्रवेशाय। परिदधाति परितो विदधाति। परिश्रिते याजयेद्रक्षसामनन्ववचाराय (तै० सं० २।२।२। ३)। उक्तोऽर्थः। मनसैव तद्यज्ञं तनुते रक्षसामनन्ववचाराय (तै० सं० १।६। ८।४)। उदितपूर्व एवार्थः।

—सो ( षो अन्तकर्मणि )। नात्यन्तमन्ववस्येद् वृत्तिं प्राप्य विरमेत् (सत्या० श्रौ० २६।५।७७)। इदं पठितपूर्वं पुस्तके। अर्थान्तरन्यासायेहानूद्यते। न अन्ववस्येत् न निरन्तरमुद्युञ्जीत, नात्यन्तमात्मानं व्यापारयेदित्यर्थः। पश्चा-दन्ववसायिनीमेवास्मै विशं करोति (तै० सं० २।१।३।१३)। अन्ववसायिनी, अनुगामिनी, एकमनाः।

## अन्वाङ् (अनु+आङ्)

—इ (इण् गतौ)। वैवाहिकमन्वायनम्···उच्छुल्कं गच्छेत् (कौ० अ० २।२१।१८)। पतिकुलं प्रस्थितताया नवोढायाः सहनीतमुपायनजातमन्वा-यनम्।

—तन् ( तनु विस्तारे )। अनु द्यावापृथिवी आततान (तै० ब्रा० १।२। १।२३)। अन्वाततान व्याप, व्याप्तवान्।

—धा (डुधाञ् धारणपोषणयोः) । सार्थेनान्वाधिहस्तो वा प्रदिष्टां भूमिमप्राप्तश्चोरैर्भग्नोत्सृष्टो वा नान्वाधिमभ्यावहेत् (कौ० अ० ३।१२।२०) । परहस्तं गमनीय आधिनिक्षेपो ऽन्वाधिः ।

—भज् (भज सेवायाम्) । यथा राजा विजित्य स्वे वित्ते भागान् अन्वाभजेत् (जै० श्रा० २।१४०) । अन्वाभजेत् अनुक्रमेण आभजेत् भागिनः कुर्यात् ।

—यत् (यती प्रयत्ने) । अश्वे वै सर्वा देवता अन्वायत्ताः (तै० ब्रा० ३।८।७।३) । अन्वायत्ता अनुगताः सम्बद्धाः ।

—यम् (यम उपरमे) । स्वदेशादन्वायतिर्वीवधः (कौ० अ० १०।२।६) । अन्वायतिः=अभिष्यन्दः ।

—रभ् (रभ राभस्ये) । यद्वायव्यं वा चमसं वाऽन्वारभ्याश्रावयेत् (तै० सं० ३।१।२।८) । अन्वारभ्य हस्ते गृहीत्वा । सोमं राजानं वरुणमग्निमन्वारभामहे (तै० सं० १।७।१०) । प्रथमतः कर्मारम्भकाननुसृत्य पश्चादारभामहे इत्यर्थ इति सायणः । एष यज्ञस्यान्वारम्भोऽनवच्छित्त्यै (तै० ६।१।११।७५) । अन्वारम्भः स्पर्शः ।

—वप् (वप बीजसन्ताने) । एकाङ्गबाहुल्यमन्वावापः (कौ० अ० १०।५।२७) । आयुधविशेषस्यायुधान्तराद् भूयस्त्वम् अन्वावापः ।

—हृ (हृञ् हरणे) । यद्वै यज्ञस्य क्रूरं यद्विलिष्टं तदन्वाहार्येणान्वाहरति (तै० सं० १।७।३) । (हीनं) पुनरन्वाहरति पूरयति । अथवा ऽनुक्रमेणाहृत्य नाशयतीति भट्ट० ।

## अनुनि (अनु+नि) ।

—वृत् (वृतु वर्तने) । रथन्तरस्य योनिमनुनिवर्तयति (ऐ० ब्रा० ५।१६)। नितरां वर्तनमनुष्ठानमनुनिवर्तनम् । इह निवर्तनं परित्यागो नेति सायणः ।

## अनुप्र (अनु+प्र)

—हु (दानादनयोः) । दिशोरन्तः परिध्यनुप्रहावयति (सत्या० श्रौ० २४।४।१०) । अनु प्रहावयति स्रावयति ।

## अनुवि (अनु+वि)

—इ (इण् गतौ)। अग्ने र्दहतो धूम उदेत्यानुव्येति (तै० ब्रा० १।५।१०।४)। अनुव्येति अनुक्रमेण विविधं व्याप्नोति।

—ऊह् (ऊह वितर्के)। वैश्वानर्यर्चा चितावनुव्यूहति (सत्या० श्रौ० २३।२।२६)। अनुव्यूहति प्रसारयति।

—धा (डुधाञ् धारणपोषणयोः)। प्रतीयमानसादृश्योप्यस्ति सोऽनुविधीयते (काव्यादर्श २।१८६)। अनुविधीयते=अनुपदं व्याख्यायते। तथेन्द्रियाणि परशरीरावेशे चित्तमनुविधीयन्ते (यो० सू० ३।३८ भा०)। अनुविधीयन्तेऽनुगमनेनानुकुर्वन्ति। निमित्तत्वं च स्वान्वयव्यतिरेकानुविधाय्यवश्यानुष्ठानवत्वम् (भाट्टदी० २।४।१)। अनुविधायि=अनुसारि। कारणानुविधायित्वात् कार्याणान्तत्समागता (अष्टाङ्ग० शारीर० १।४)। उक्तोऽर्थः।

—वा (वा गतिगन्धनयोः)। सर्वा दिशोऽनुविवाति (तै० ब्रा० २।३।६।६)। अनुकूलः सन् विशेषेण संचरतीत्याह।

—सद् (षद्लृ विशरणगत्यवसादनेषु)। अथ यत्रैतदाकाशमनुविपण्णं चक्षुः (छां० उ० ८।१२।४)। अनुविषण्णमनुषक्तम्।

## अनुव्याङ् (अनु+वि+आङ्)

—हृ (हृञ् हरणे)। तदाहुः प्रावृतोऽनेजन्नुद्गायेत् नेन्मोपद्रष्टा ऽनुव्याहरादिति (जै० ब्रा० १।१३८)। अनु पश्चाद व्याहरेदित्यर्थः। तान् लुशाकपिः खार्गलिरनु व्याहरत् (पञ्च० ब्रा० १७।४।३)। अनुव्याहरत्=अशपत्। ताननुव्याजहार (विश्वामित्रः) (ऐ० ब्रा० ७।१८)। शापरूपवचनमुक्तवानिति सायणः।

## अनुसम् (अनु+सम्)

—चर् (चर गतिभक्षणयोः)। तद्यथा पति र्जाया अनुसंचरेत् (जै० ब्रा० २।२६)। अनुसंचरेत् अनुक्रमेण गच्छेत्।

—ज्वर् (ज्वर सन्तापे)। किमिच्छन्कस्य कामाय शरीरमनुसंज्वरेत् (बृह० उ० ४।४।१२)। शरीररोगमनु रुज्येतेत्यर्थ इति शङ्करः।

## अव

—अन् (अन प्राणने)। व्याहृतीर्जपित्वाऽनवानम् (सत्या० श्रौ० २१। २।२)। अनवानम् अनुच्छ्वासम्।

—अस् (असु क्षेपे)। यूपशकलमवास्यति (तै० सं० ६।३।४।२०)। अवास्यति गर्ते क्षिपति। अवशब्दोऽधोर्थे।

—इ (इण् गतौ)। नमः सखिभ्यः सन्नान्माऽवगात (तै० ब्रा० २।४।७। ११)। माऽवगात=माऽपगात=मा स्मापेत। लोकं माऽर्वागवगाः (पञ्च० ब्रा० १।५।५)। (हे सोम) नाभेरधो मा स्म गच्छः। माऽर्वाग् अवगाः= माऽस्मादधो गम इत्यक्षरार्थः।

—ईक्ष् (ईक्ष दर्शने)। अङ्गावेक्षस्व सौमित्रे कस्येमां मन्यसे चमूम् (रा० २।९६।१५)। अवेक्षस्व सम्यगवलोकय। प्रेयसि क्षणमवेक्ष्यतां पुरश्चन्द्रचन्दनसुधासमद्युतिः। दिविषत्तरङ्गिणी···(पारिजात० १७।४६)॥ अवेक्ष्यतामुदीक्ष्यतां प्रेक्ष्यताम्। आशीविषो वै नो राजानमवेक्षते (ऐ० ब्रा० ६।१)। अवेक्षते=ईक्षते। तातस्य प्रियकामेन यौवराज्यमवेक्षता (भरतेन त्वया) (रा० २।५२।३६)। अवेक्षता अवेक्षमाणेन। अनवेक्षितपूर्वसौहृदा रमते ऽन्यत्र गता तथाङ्गना (सौन्दर० ८।४१)। अनवेक्षितमगणितम्। तमवेक्ष्य रुरोद सा भृशं स्तनसम्बाधमुरो जघान च (कु० ४।२६)। तं मधुं वीक्ष्य। पारिणाह्यस्य वेक्षणे (मनु० ९।११)। अवेक्षणे। भागुरिमतेनावशब्दस्याकारलोपः। अवेक्षणमवेक्षा प्रतिजागरः।

—ऋ (ऋ गतिप्रापणयोः)। यथाऽक्षोऽनुपाक्तः। अवार्च्छत्येवमवारम् (तै० सं० २।६।३।३-४)। अवार्च्छति अधोगच्छति। अवारम् इति लुङ्यङि रूपम्। अनुपाक्तोऽकृतोपाञ्जनः।

—ओण् (ओणृ अपनयने)। पा० ४।१।७ सूत्रे वृत्तौ अवावा अवावरी इत्युदाहरणे। अवावा चौरः।

—कल् (कल गतौ संख्याने च)। अवकलितो दृष्ट इति धरणिरिति शब्दकल्पद्रुमः।

—काश् (काशृ दीप्तौ)। यानि तस्याः (शम्याः) वकाशानि दिव्यरूपाण्य-मन्यत (भा० वि० ५।२०)। वकाशानि अवकाशानि सुषिरस्थानानि को-टराख्यानि।

—कुत्स् (कुत्स अवक्षेपणे)। कुल्माषांश्चिदाहरेत्यवकुत्सिते (नि० १।४।१४)। अवकुत्सिते भृशं कुत्सितेऽवक्षिप्ते निन्दिते। अवः प्रायेण न्यून-तामाह।

—कृश् (कृश तनूकरणे)। न यं जरन्ति शरदो न मासा न द्याव इन्द्र-मवकर्शयन्ति (ऋ० ६।२४।७)। नावकर्शयन्ति ईषदपि न कृशी कुर्वन्ति। अवोऽल्पार्थे।

—कृष् (कृष विलेखने)। न सन्तु यदुवीराणां दारा हारावकर्षिताः (पारिजात० १३।४४)। अवतारितहाराः, अवरोपितमौक्तिकमालाः। ध्रुवां चावकृष्टेऽनुपूर्वम् (का० श्रौ० २।८।१३)। अवकृष्टेऽधोदेशे।

—कॄ (कॄ विक्षेपे)। अवाकीर्षत (पञ्च० ब्रा० १७।४।३)। अवकीर्णिनो ऽभवन्नित्यर्थः। क्रोधं कृत्वा समभ्येत्य मम श्मश्रूण्यवाकिरत् (शिवपु० २।४। १५।३१)। अवाकिरत्। अपाहरत् अवाकृन्तत्। अवकीर्यैव भ्रातृव्यान् (तै० ब्रा० १।१।२।६)। अवकीर्य विनाश्य। न तत्पदमुपादेयं कविनाऽवकरो हि सः (व्यक्ति० २।६७)। अवकरोऽपभ्रंशः, दुष्टः शब्दः।

—क्लृप् (कृपू सामर्थ्ये)। ततः कारणभावोपि बीजादेर्नावकल्पते (तत्त्व-सं० १३)। नावकल्पते नोपपद्यते न संभाव्यते। शूद्रो यज्ञेऽनवक्लृप्तः (तै० सं० ७।१।१।६)। अनवक्लृप्तोऽनधिकृतः।

—क्रन्द् (क्रदि आह्वाने रोदने च)। उत्सादेन जिह्वामवक्रन्देन तालुम् (तै० सं० ५।७।१२।४३)।

—क्रम् (क्रमु पादविक्षेपे)। वज्रेणैव पाप्मानं भ्रातृव्यमवक्रामति (तै० ब्रा० ३।८।४।२)। अवक्रामति अधस्पदं करोति, न्यक् करोति। अग्नाविष्णू मा वामवक्रमिषम् (तै० सं० १।१।१२)। अवक्रम्य अधस्पदं कृत्वा मा गामि-त्याह। मा नो अज्ञाता वृजना दुराध्यो माऽशिवासो अवक्रमुः (ऋ० ७।३२। २७)। उक्तोऽर्थः। अथातो गर्भावक्रान्तिशारीरं व्याख्यास्यामः (सुश्रुत० शारीर० ३।१)। अवक्रान्तिरुपगमनमवतरणम्।

—क्री (डुक्रीञ् द्रव्यविनिमये)। प्रदीप्तमनभिधावतो गृहस्वामिनो द्वादशपणो दण्डः, षट्पणोऽवक्रयिणः (कौ० अ० २।३६।२३)। अवक्रयिणो भाटकेन गृहीतगृहस्य।

—क्षिप् ( क्षिप प्रेरणे )। को ह्यक्षयप्रसादानां सुहृदामल्पतोषिणाम्। वृत्तिमर्हत्यवक्षेप्तुं त्वदन्यः कुरुसत्तम (भा० अनु० ५६।२८)॥ अवक्षेप्तुं समर्पयितुम् इति नीलकण्ठः।

—गम् (गम्लृ गतौ)। यदि कामयेत योऽवगतः सोऽपरुध्यताम् (तै० सं० ६।६।५ )। अवगतः प्राप्तैश्वर्यः। अपरुध्यताम् ऐश्वर्याद् भ्रश्यताम् इति सायणः।

—गाह् ( गाहू विलोडने )। सूत्रेणानवगाढमनतिशिथिलं च बद्ध्वा। (सुश्रुत० १।१६।१४)। अनवगाढं नातिदृढम्।

—गॄ (गॄ निगरणे)। हृतापि ते हं न जरां गमिष्ये आज्यं यथा मक्षिकयाऽवगीर्णम् (रा० ३।४७।४८)। अवगीर्णं निगीर्णम् अभ्यवहृतम्। या गोष्ठी लोकविद्विष्टा या च स्वैरविसर्पिणी। परहिंसात्मिका या च न तामवगिरेद् बुधः ( अमरु० ७७ इत्यत्रार्जुनवर्मदेवकृतायां टीकायाम् )। नावगिरेत् नास्वादेत।

—ग्रह् (ग्रह उपादाने)। द्वाभ्यां मन्त्रयमाणो द्वाभ्यां संहताभ्यामवगृह्यते, विगृहीताभ्यां विनाश्यते (कौ० अ० १।१५।३७)। अवगृह्यते वशे क्रियते, वशंवदतां नीयते। पार्श्वे तस्यावगृह्णाति शयानस्य समीरणः (चरक० चि० अ० २१)। अवगृह्णाति पीडयति। तत्रापि क्रुद्धेनार्तेन मत्तेनोन्मत्तेनावगृहीतेन वा कृता व्यवहारा न सिध्येयुः (कौ० अ० ३।१।१३)। अवगृहीत उपरुद्धः, प्रतिरुद्धप्रसरः। इक्ष्वाकुसिंहावगृहीतदेहः ( रा० ६।१०६।१० )। अवगृहीतदेहः = दारितशरीरः। ते ह्यस्य सर्वस्वमवगृह्य स्वामिवत् प्रचरन्ति (कौ० अ० १।८।२१)। अवगृह्य वशे कृत्वा। मन्दोपि नाम न महानवगृह्य साध्यः (शिशु० ५।४९)। अवगृह्य निगृह्य। घृतस्यावग्रहं चक्रे दिनानि कतिचिच्चिकित्सकः (बृ० क० को० ५६।१२)। अवग्रहस्त्यागः, परिहारः।...मधुमद्यपलस्य च। अवग्रहं विधायासौ ( बृ० क० को० ५६।२० )। अवग्रहितसस्यश्रीरुल्ललास यथाम्बुदात् (स्कन्द पु० का० ४।४६।४४)। जातवर्षप्रतिबन्धं यत् सस्यम्। अवग्रहोऽवग्राहः संजातोऽस्य। इतच्।

—घ्रा (घ्रा गन्धोपादाने)। अवघ्रेयमेव, तन्नेव प्राशितं नेवाप्राशितम् (तै० ब्रा० १।३।१०।७)। अवघ्रेयं घ्रेयं घ्रातव्यम्। नावशब्दो विशेषमर्थं करोति।

—चर् (चर गतिभक्षणयोः)। तदनु यज्ञं रक्षांस्यवचरन्ति (तै० सं० ६।४।२।७)। यज्ञेऽन्तः प्रविशन्तीत्यर्थः। रसवन्ति च भोज्यानि यथास्वमवचारयेत् (सुश्रुत० उत्तर० ४७।३५)। अवचारयेत् अभ्यवहारयेत्। न च पर्युषितं लेपं कदाचिदवचारयेत् (सुश्रुत० सूत्र० १७।८)। नावचारयेत् उपयोगं न नयेत्। परिषेकान् प्रदेहांश्च सुशीतान् अवचारयेत् (सुश्रुत० कल्प० ५।११)। अवचारयेत् प्रयोजयेत्, कारयेत्। वारणो यज्ञावचरः ( ) अवचरो विषयः, गोचरः। सर्वे च तालावचराः (रा० २।३।१७)। तालैरवचरन्ति जीवन्ति ये ते। तथैव तालावचरास्तथैव नटनर्तकाः (रा० ७।६१।१५)। तालावचराः तालं गृहीत्वाऽवचराः (इति तिलकः)। कर्णा श्वावित्तदब्रवीत् गिरेरवचरन्तिका (अथर्व० ५।१३।६)। अवचरन्तिका अवचरन्ती अवतरन्ती। यदनुपरिक्रामं जुहुयादन्तरवचारिणं रुद्रं कुर्यात् (तै० सं० ५।४।३।१२)। अवचारिणम्=अन्तः प्रविश्य चरन्तम् इत्यर्थो भाति।

—चि (चिञ् चयने)। हस्त्यश्वावचयश्चैव (हरि० २।७६।२४)। अवचयः समूहः। अव स्यूमेव चिन्वती मघोन्युषा याति स्वसरस्य पत्नी (ऋ० ३।६१।४)। अवचिन्वती स्यूम (वासः, परिधानीयम्)=प्रतिसंहरन्ती विवृण्वतीति केचित्साम्प्रतिकाः। सोऽयं शब्दमर्यादया दुर्लभोऽर्थः। न ह्यवचयः क्वचित्प्रतिसंहारं विवरणं वाह। स्यूमेव वस्त्रमिव विस्तृतं तमोऽवचिन्वती अवचयं अपक्षयं नयन्तीति सायणः। हृदयङ्गममिदं वाग्व्यहारविदो भाष्यकारस्य व्याख्यानम्। न ह्यशक्यार्थे शक्तिः कल्पनीया शब्दानाम् इति स्मरणीयमधुनातनैः।

—जि (जि जये, जि अभिभवे)। कदाचिदेकसीमान्तगोत्रजावजयाय सः (कथा० ५३।२०)। अवजयो जयः। अनर्थकोऽवशब्दो यथा विजये विः।

—ज्ञा (ज्ञा अवबोधने)। अवजानन्नहं मोहाद् बालोऽयमिति राघवम् (रा० ३।३८।१८)। अवजानन् अवमानयन्।

—तन् (तनु विस्तारे)। वृक्षस्थोऽवतानो वृक्षे च्छिन्नेपि न विनश्यति (पा० १।२।६४ सूत्रे भाष्ये)। अवतानोऽधोमुखः प्रतानः। परो मूजवतोऽतीह्य-

वततधन्वा (तै० सं० १।८।६) । अवतारितज्याकं धनुर्यस्य स इति भट्टभास्करः । ज्याकर्षणेन विस्तारितधनुष्क इति तु सायणः । अयं प्रमादः । अयमेक आचार्यस्य मृष्यताम् ।

—तम् (तमु काङ्क्षायाम्) । ओमिति त्रिरवताम्यन्ति (आप० श्रौ० ८। १८।६) । प्राणायामत्रयं कुर्वन्तीत्याह ।

—तृद् (उतृदिर् हिंसानादरयोः) । अवपूर्वस्तृदिः (शां० श्रौ० १७।१७। ५) इत्यत्र ।

—तॄ (तॄ प्लवनतरणयोः) । गोस्तु महिमानं नाव तिरेत् (तै० सं० ६।१। १०) । गोर्महिम्नः सोममहिमानं नातिरेचयेदित्यर्थः । अवातिरतमनृतानि विश्वा (तै० ब्रा० २।८।६।६) । अवातिरतं (युवां) विनाशितवन्तौ । दृष्ट एवावतीर्णोऽस्मि यद्रोगमतिदुस्तरम् (कथा० २४।१९५) । अवतीर्णः प्रविष्टः । पूर्वं सिद्धं पश्चादवतारितम् (कौ० अ० २।६।२१) । अवतारितम् = राजदेयो भागः प्रतीष्टः ।

—त्सर (त्सर छद्मना गतौ) । अव त्सरत् पृशन्यश्चिकित्वान् (ऋ० १। ७१।५) । अवत्सरत् अवात्सरत् पलायत इति सायणः ।

—दंश् (दंश दशने) । अवदंशः तिक्तरसं योज्यमुच्यते । येन भुक्तेन तर्ष उपजायते ।

—दुष् (दुष वैकृत्ये) । द्रव्यावदूषको यश्च प्रतिच्छन्दकविक्रयी (विष्णुधर्मोत्तरे २।७२।१७१) ।

—दृश् (दृशिर् प्रेक्षणे) । श्येनो नृचक्षा अग्नेष्ट्वा चक्षुषाऽवपश्यामि (पञ्च० ब्रा० १।५।३) । अवपश्यामि अवाङ्मुखः पश्यामि ।

—दे (देङ् रक्षणे) । तद् (ऋणं) अवदानैरेवावदयते (तै० सं० ६।३।५५) । अवदयते विनाशयतीति भट्टभास्करः । शोधयतीति यावत् । अत्रोऽर्थं विपर्यासयति ।

—दो (दो अवखण्डने) । नानवत्तमश्नीयात् (शां० गृ० २।१४।२३) । अनवत्तमपृथक्कृतदेवताभागम् । त्वं चापि दक्षयज्ञेऽस्मिन्नवदानार्थमागतः (शिवपु० २।२।३६।५२) । अवदानं हविर्भागः ।

—धा (डुधाञ् धारणपोषणयोः)। सैषा···यजमानस्य लोकेऽवहिता (तै० सं० १।७।१।१)। अवहिता=अवस्थिता। सोदकेन पात्रेणामृन्मयेनापिदध्यात्। यदि मृन्मयं स्यात्तृणं काष्ठं वाऽवदध्यात् (वाराह श्रौ० १।२।२।३४-३५)। अवदध्यादधो निदध्यात्। पारुष्यमवधीयमाना (ब्रह्मगवी)(अथर्व० १२।५।३०)। अवधीयमाना व्रजमवरुध्यमाना। अन्तराधीयमानेति त्वक्षरार्थः।

—धू (धूञ् कम्पने, धू विधूनने)। अवधूय रसालमञ्जरीर्घनमादाय परागमञ्जसा (पारिजात० ११।३६)। अवपूर्वस्यापि धूञ् इह शुद्धे धात्वर्थे प्रयोगः। न तूपचरिते तिरस्कारार्थे। अवधूय ईषद् धूत्वा (धवित्वा)।

—धृ (धृञ् धारणे)। तस्योपकरणं प्रमाणं प्रहरणं प्रधारणमवधारणं च खरपट्टादवगमयेत् (कौ० अ० ४।८।२४)। अवधारणम् इयत्ता।

—नम् (णम प्रह्वत्वे शब्दे च)। दुरितमवनतानां दुर्निरोधं निरुन्धन् (विश्व० च० १४।१७०)। अवनतानां प्रणतानाम्, भक्तानाम्। अत्रार्थे प्रः प्रशस्यः।

—नी (णीञ् प्रापणे)। अरण्ये मुनिभिर्जुष्टे अवनेया भविष्यसि (रा० उ० ४६।९)। अवनेया रथादवरोप्य प्रापणीया। सीतां प्रति सौमित्रेरुक्तिः।

—पद् (पद गतौ)। तस्मादेवं विदुषे ब्राह्मणायैवं चक्रुषे न क्षत्रियो द्रुह्येत्, नेद्राष्ट्रादवपद्येयम् (ऐ० ब्रा० ८।२३)। नेदवपद्येयम्=भ्रष्टो मा भूवम्। तस्माद् विभक्ताः स्तोका अव पद्यन्ते (तै० सं० ६।३।९)। अवपद्यन्ते ऽधःपतन्ति। स्तोका बिन्दवः। ते (गर्भाः) प्रतिहता नावपद्यन्ते (छां० उ० २।९।६)। अवपद्यन्ते पतन्ति। यदप्स्ववापद्यत (तै० ब्रा० २।२।९।४)। अवापद्यत अपतत्। न्यमज्जत्। अन्धा तमांस्यव पादयैनान् (अथर्व० ९।२।१०)। तमस्सु पातयेत्यर्थः। तस्या वाचोऽवपादादबिभयुः (तै० ब्रा० १।५।१२।१)। अवपादोऽधस्तात्पातोऽवपातः। त्राध्वं कर्तादवपदो यजत्राः (ऋ० २।२९।६)। अवपदः पतनात्। अवपद् इति क्विबन्तम्।

—पा (पा पाने)। ऋश्यो न तृष्यन्नवपानमा गहि (ऋ० ८।४।१०)। अवपानं ग्रहचमसादिपात्रेष्ववनीतं सोमम्। ऋश्यपक्षे ऽवगाह्य पीयतेऽत्रेत्यवपानं पल्वलादि।

—पीड् (पीड अवगाहने) । वेगान्तरेषु चावपीडं दद्यात् (सुश्रुत० चि० ५।२७) । अवपीडो हितश्चात्र वचाभागाधिकायुतः (सुश्रुत० उत्तर० २६।१४)। अवपीड्य दीयते इत्यवपीडो नस्यभेदः ।

—बन्ध् (बन्ध बन्धने) । शुक्रशोणितयोरवबन्धः (सुश्रुत० शारीर० ३। १०) । अवबन्धोऽप्रवृत्तिः । जानामि यस्मिश्च जनेऽवबद्धं कामेन सुग्रीवमसक्तमद्य (रा० ४।३३।५३) । अवबद्धं बद्धम् आसक्तम् । असक्तमनवरतम् ।

—बाध् ( बाधृ लोडने ) । अङ्गुष्ठाभ्यां चावबाधते (भूमिम्) (का० श्रौ० ३।१।७) । अवबाधते अवपीडयति ।

—बुध् (बुध अवगमने) । विधुरावबोधाः (स्कन्दपु० का० ४।३०।८४) । विधुरो विश्लिष्टः (नष्ट इत्यर्थः)अवबोधोऽज्ञानं येषां त इति रामानन्दष्टीकाकारः । अन्यत्र दुर्लभोऽयमर्थः ।

—बृह् ( बृह बृहि वृद्धौ ) । तदात्मन्व्यतिपजत्यववर्हाय (शां० ब्रा० ७। ९) । अववर्हाय=अविप्रयोगाय ।

—भृ ( भृञ् भरणे ) । यदी घृतेभिराहुतो वाशीमग्निर्भरत उच्चाव च (ऋ० ८।१९।२३) । अवभरते अनुच्चैः करोति । वाशीं शब्दम्) ।

—मा ( माङ् माने ) । रत्नसारफल्गु-कुप्यानामर्घ-प्रतिवर्णकमानप्रतिमानोन्मानावमानभाण्ड·· निबन्धपुस्तकस्थं कारयेत् ( कौ० अ० २।७।२ )। अवमानं गाम्भीर्यम् ।

—मृश् (मृश आमर्शने, आमर्शनं स्पर्शः) । तद्धावमृश्य न विवेद (छां० उ० ६।१३।१) । पुस्तके कृतन्यासमिदं भूयोवैशद्यायेहानूद्यते । तल्लवणं सलिलेऽन्तरवहितमभितः स्पृष्ट्वा न विवेद न लेभ इत्यर्थः ।

—यज् ( यज देवपूजासङ्गतिकरणदानेषु ) । यथोदितमेव वरुणमव यजते (तै० सं० ६।३।१२) । अवयजते यजते । अव इह विशेषको न, तद्विरलम् ।

—यस् (यसु प्रयत्ने) । देवस्य हेडोऽवयासिसीष्ठाः (ऋ० ४।१।४) । अपनयेत्यर्थः । अवपूर्वो यासिर्विनाशे वर्तत इति सायणः ।

—या ( या प्रापणे ) । कलाजातं हि सर्वं त्वमवयास्यसि मे वरात् (स्कन्दपु० का० ४।८६।८०) । अवयास्यसि अवैष्यसि ज्ञास्यसि ।

—यु (यु मिश्रणामिश्रणयोः) । ययोरन्याऽधानि द्वेषांस्यवयावयति (नि० ६।४२।१) । अवयावयति अवमिश्रयति, अपनयति, पराकरोति, अपाकरोति ।

—रुध् (रुधिर् आवरणे) । तेनोद्वेगेन राजा तानवरुन्ध्यात् (कौ० अ० ११०।१०) । अवरुन्ध्यात् आसेधेत्, निषिद्धस्वेच्छाचारान् निषिद्धस्वच्छन्दगतीन् कुर्यात् । तद् देवा विजित्यावरुरुत्समाना अन्वायन् (तै० सं० १।५।१)। अवरुरुत्समाना आत्मसात्कर्तुमिच्छन्तः । मर्म्मगतस्त्वगादिष्ववरुद्धत्वान्नोच्यते (सुश्रुत० सूत्र० २२।६) । अवरुद्धः संगृहीतः । अनवरुद्धा वा एतस्य विराड् य आहिताग्निः (तै० सं० १।७।६) । अनवरुद्धाऽस्वाधीना । अनवरुद्धस्यावरुद्ध्यै (तै० ब्रा० १।३।८) । अस्वीकृतस्य स्वीकृतय इत्याह । अथास्यैष स्वभक्षो न्यग्रोधस्यावरोधाः (ऐ० ब्रा० ७।३०) । शाखाभ्योऽवाङ्मुखत्वेन प्ररोहन्तो-मूलविशेषा अवरोधाः । वितर्तेव दूर्वाऽवरोधै भूम्यां प्रतिष्ठितेव (ऐ० ब्रा० ८।८) । उक्तोऽर्थः । नह्येकस्मिञ्शास्त्रे शक्यः सर्वशास्त्राणामवरोधः कर्तुम् (सुश्रुत० १।४।५) । अवरोध उपसङ्ग्रहः । राजा किल मामवरोधयिष्यति ( कौ० अ० १२।२।२१ ) । शुद्धान्तेऽन्तः करिष्यति, अन्तः पुरगतां करिष्यति ।

—लग् (लगे सङ्गे) । स्कन्धावलग्नोद्धृतपद्मिनीकः (रघु० १६।६८) । अवलग्ना संसक्ता ।

—लिख् ( लिख अक्षरविन्यासे ) । बहुशोऽवलिखेच्चापि वर्त्मास्थ्योपगतं यदि ( सुश्रुत० उत्तर० १२।२३ ) । अवलिखेत् विलिखेत् उल्लिखेत् । वर्त्म तुण्डम् । उपगतमुच्चतां गतमुपर्यागतम् ।

—लिप् (लिप उपदेहे) । रूप्यभाण्डं घनं सुषिरं वा सुवर्णार्धेनावलेपयेत् (कौ० अ० २।१३।४५) अवलेपयेत् उपदिह्यात् ।

—लिह् (लिह आस्वादने) । रङ्गद्वारं गतोऽभूः कुपितकुवलयापीडनागावलीढम् (नारा० ७५।१) । अवलीढं पिहितं रुद्धम् ।

—ली (लीङ् श्लेषणे) । अवलीनः स निर्वाक्यो हनुमान् शिंशपाद्रुमे (रा० ५।२४।१४ ) । अवलीनश्छन्नः । चोरहृतमन्ययूथप्रविष्टमवलीनं वा नष्टम् (कौ० अ० २।२९।१२) । अवलीनं विभ्रष्टं प्रच्युतम् ।

—लोक् ( लोकृ दर्शने )। सजलानि समाख्यानि सावलोकनकानि च (गृहाणि) (मात्स्यपु० १४०।५६)। अवलोकनकं गवाक्षः।

—वद् (वद व्यक्तायां वाचि)। मा श्रियोऽववादिष्म(ऐ० ब्रा० १।२२)। मा निन्दिष्मेत्यर्थः।

—शद् ( शद्लृ शातने )। ये प्रत्यञ्चः शम्याया अवशीयन्ते (तै० सं० १।८।१)। अवशीयन्ते ऽवपतन्ति।

—श्रि ( श्रिञ् सेवायाम् )। अधिश्रयणावश्रयणान्तादिः पूर्वापरीभूतो व्यापारकलापः पाकादिशब्दवाच्यः ( सा० द० १। )। अवश्रयणमधः श्रयणम्।

—सञ्ज् (षञ्ज सङ्गे)। अविज्ञातावसक्तेन दूषिता मम वाससा (मृच्छ० १।५४)। अवसक्तेन कृतेषत्स्पर्शेन। अवशब्दः सङ्गस्यासाकल्यमाह। नागदन्तावसक्ता वीणा ( का० सू० १।४।४ )। अवसक्ताऽवलम्बिता। अवसज्य शिलां कण्ठे समुद्रं तर्त्तुमिच्छसि (रा० ३।४७।४१)। अवसज्य बद्ध्वा। अवशब्दः सम्यगर्थे स्यादनर्थको वा। स्वं चावसङ्गं पथि निर्मुमुक्षुः (सौन्दर० ५।५)। अवसङ्ग आसङ्गः।

—सद् (षद्लृ विशरणगत्यवसादनेषु)। नदीकूलमिव क्लिन्नमवसीदामि ( रा० ४।२८।५८ )। अवसीदामि सीदामि। यथा सीदन्ति मम गात्राणीत्यत्रावो द्योतकस्तथेहापि। आज्यं चावसादयति ( तै० सं० १।६।८ )। अवसादयति अवपातयति। क्रमप्रयोजनं नाम्नां शाकपूण्युपलक्षितम्। प्रकल्पयेदन्यदपि न प्रज्ञामवसादयेत् इति निरुक्तवार्तिककारवाक्यम्।

—सिच् (षिच क्षरणे)। शीतलेन जलेनैनं मूर्च्छन्तमवसेचयेत् ( सुश्रुत० सूत्र० २७ )। अवसेचयेत् तत्र काश्चन विप्रुषोऽवपातयेत्। अवशब्दः क्षारणस्याल्पतामाह।

—सृज् ( सृज विसर्गे )। मृजदर्णांस्यव यद् युधा गाः (ऋ० १।१७४।४)। अवासृजत् = अवासृजः। पुरुषव्यत्ययः। अवाङ्मुखमपातयः। अर्णांसि जलानि। समुद्रमनयत्पार्थं तत्र चैनमावासृजत् (भा० वन० १८७।२८)। अवासृजत् अधोऽक्षिपत्। सुपेशसं मा ऽव सृजन्त्यस्तम् (ऋ० ५।३०।१३)। गृहं गन्तुमनुजानन्तीत्याह। इन्द्रमेव तत् स्वायां दिशि प्रीत्वा ऽवसृजति (शां० ब्रा० २।२)। उक्तोऽर्थः। अव द्रुग्धानि पित्र्या सृजा नोऽव या वयं चकृमा तनूभिः

(ऋ० ७।८६।५)। अवसृज विमुञ्च, अस्मत्तो विश्लेषय। अव वृष्टिं सृजतं जीरदानू (ऋ० ५।६२।३)। अवसृजतम् अधः प्रेरयतम्। वनस्पतिरवसृष्टो न पाशैः (तै० ब्रा० २।६।८।४)। अवसृष्टो मुक्तः।

—सो ( षो अन्तकर्मणि )। तस्य सप्त पदानि समस्यावस्येत्। (शां० ब्रा० ३।२)। अवस्येत् समाप्तिं कुर्यात्, विरमेत्। अव स्यतं मुञ्चतं यन्नो अस्ति तनूषु कृतमेनो अस्मत् (तै० सं० १।८।२२)। अवस्यतमवसाययतं नाशयतम्। नवाऽवसिते वा (का० श्रौ० ४।१३।८)। इदं पुस्तके न्यस्तचरं भूयो वैशद्यायेहानूद्यते। अवसितं गृहम्। लोके उदवसितं गृहमुच्यते। तथा चामरः पठति—गृहं गेहोदवसितम् इति। स्वामी तु सिनोते र्व्युत्पत्तिमाह। साक्षरः पदान्तो ऽवसितः ( ऋक्तन्त्रे २।२।८ )। साक्षरं समानाक्षरं पदान्तो ऽवसितोऽनुनासिको भवतीति वृत्तिः।

—स्तम्भ् (स्तम्भु रोधनार्थः सौत्रः)। अवष्टब्धावथ क्षिप्त्वा पादौ शङ्करपाणिना (स्कन्दपु० मा० कौ० (२) २७।७६)। अवष्टब्धौ=अवलम्बितौ। अवष्टब्धसहायश्च (रा० ४।१५।१३)। परिगृहीतसहाय इत्यर्थः।

—तॄ (स्तॄञ् आच्छादने)। सिद्धं कालमप्राप्तं करोत्यप्राप्तं प्राप्तं वेत्यवस्तारः (कौ० अ० २।८।१०)। अवे तॄस्त्रोर्घञ् (पा० ३।३।१२०) इति सूत्रे ऽवस्तारो जवनिकेति वृत्तिः।

—स्था(ष्ठा गतिनिवृत्तौ)। एषो अपश्रितो वलो गोमतीमवतिष्ठति (ऋ० ८।२४।३०)। अवतिष्ठति अधितिष्ठति। वेदकावेदकयोः कृतसमर्थावस्थयोर्देशग्रामजातिगोत्रनामकर्माणि चाभिलिख्य···(कौ० अ० ३।१।१७)। अवस्थः प्रतिभूः, लग्नकः। कृतप्रतिघातावस्थः सूचकः (कौ० अ० २।८।२९)। अवस्था प्रातिभाव्यम्। अवस्थानं यदैव त्वमासिष्यसि परन्तप (रा० ४।५४।१६)। अवस्थाने बिलेऽन्तः स्थितिम्। अवोऽधोर्थे।

—स्यन्द् ( स्यन्दू प्रस्रवणे )। पूर्वमविवक्षितस्यार्थस्यानन्तरं स्ववाक्ये समारोपो नाट्ये ऽवस्यन्दितमुच्यते। तथा च दर्पणकारस्तल्लक्षणमाह।

—स्रु (स्रु गतौ)। उदकानि च दूषयेत्, अवस्रावयेच्च (कौ० अ० १२।५।१४)। अवस्रावयेत् परिवाहयेत्। यो महत्यर्थसमुदये स्थितः कदर्यः सन्निधत्तेऽवनिधत्ते ऽवस्रावयति (कौ० अ० २।९।२५)। अवस्रावयति विषयान्तरं

(देशान्तरं) संक्रमयति । कोशदण्डनिचयरक्षाविधानान्यवस्रावयिष्यामि (कौ० अ० ६।४।८) । अवस्रावयिष्यामि ध्वंसयिष्यामि ।

—हन् ( हन हिंसागत्योः ) । अथो अवघ्नती हन्त्यथो पिनष्टि पिंषती (ऋ० १।१९१।२) । (विषौपधिः) अवघ्नती=अवहन्यमाना कण्ड्यमाना । नासुष्वेरापिर्न सखा न जामिर्दुष्प्राव्यो ऽवहन्तेदवाचः (ऋ० ४।२५।६) । अवहन्ता पराहन्ता पराणोदयिता । हिंसिता, चूर्णयिता । स्वर्भानोरध यदिन्द्र माया अवो दिवो वर्तमाना अवाहन् (ऋ० ५।४०।६) । अवाहन् अपनुदसीत्यर्थः । अव रक्षो दिवः सपत्नं वध्यासम् इत्यवहन्ति (आप० श्रौ० १।१९।१०) । अववध्यासम् पराणुद्याम् ।

—हा ( ओहाक् त्यागे ) । विक्रियायाश्च सद्भावे नित्यत्वमवहीयते (तत्त्वसं० २९५) । अवहीयते हीयते । नार्थोऽवेन । अस्थाने चायम् । मा वयमेतमवहाय परा गाम (काठक सं० ७।१२) । अवहाय पृष्ठतो विहाय ।

—हु ( हु दानादनयोः, प्रीणने चेत्येके ) । अव स्म यस्य वेषणे स्वेदं पथिषु जुह्वति (ऋ० ५।७।५) । अवजुह्वति अधोमुखं जुह्वति ।

—हृ ( हृञ् हरणे ) । आयव्ययनीवीनामग्राणि श्रुत्वा नीवीमवहारयेत् (कौ० अ० २।७।१८) । अवहारयेत् कोशं प्रति प्रेरयेत् । नीवी परिशेषः । अग्रं सम्पिण्डितो राशिः । अवहृत्योपरिनाभि धारयन् ( का० श्रौ० १६।३।८ ) । अवहृत्य नीचैरवतार्य ।

## अवनि (अव+नि)

—धा (डुधाञ् धारणपोषणयोः) । यो महत्यर्थसमुदये स्थितः कदर्यः··· अवनिधत्ते पौरजानपदेषु ( कौ० अ० २।९।२५ ) । अवनिधत्ते प्रच्छन्नं न्यस्यति । केवले न्यासेऽर्थे तु अवोऽनर्थकः स्यात् ।

## (निस् (निर्)

—अय् (अय गतौ) । प्रसूत्या अग्निर्देवेभ्यो निलायत (तै० सं० ५।१।१।४) । निलायत निरगच्छत्, तिरोऽधत्त, तिरोहितोऽभूत् ।

—अश् (अश भोजने) । अथ यत्स्रुचं निरश्नाति तेन देवजनान् प्रीणाति (जै० ब्रा० १।४१) ।

—अस् (असु क्षेपे)। निरस्तः शण्डः। निरस्तो मर्कः (तै० ब्रा० १।१।१।५)। निरस्तो बहिष्कृतः।

—इ (इण् गतौ)। निरेति सह मूत्रेण प्रतिलोमे निरुध्यते (माधव० ३२।१५)। निरेति पूति मुखनासिकाभ्यां तं पूतिनासं प्रवदन्ति रोगम् (सुश्रुत० उत्तर० २२।४)।

—ऊह् (ऊह वितर्के)। निरूहयेद्वा मतिमान् सुस्विन्नं तदहर्नरम्(सुश्रुत० उत्तर० ३९।१२८)। वातघ्नमधुरैर्योज्या निरूहा वातजे ज्वरे (सुश्रुत० उत्तर० ३९।१२८)।

—ऋच्छ् (ऋच्छ गतीन्द्रियप्रलयमूर्त्तिभावेषु)। न हस्तवेष्यान्निर्ऋच्छति (पञ्च० ब्रा० ६।६।१३)। निर्ऋच्छति निर्गच्छति। ताभ्यः स निर्ऋच्छाद्यः। नः प्रथमोऽन्योन्यस्मै द्रुह्यात् (तै० सं० ६।२।२।१-२)। उक्तोऽर्थः।

—ऋज् (ऋज गतिस्थानार्जनोपार्जनेषु)। पशून् निरार्जत (तै० सं० १।५।९।३)। निरार्जत निरगमयत्।

—कल् (कल विल क्षेपे)। दत्त्वा पादप्रहारांस्तैस्तद्भृत्यै निरकाल्यत (कथा० ५२।३०९)। स्पष्टोऽर्थः।

—कस् (कस गतौ)। याश्चानिष्कासिन्यः प्रोषिता विधवा न्यङ्गाः कन्यकाः (कौ० अ० २।२३।११)। स्त्रीणामनिष्कासिनीनाम् (कौ० अ० ३।१।७)। अनिष्कासिन्यः—गृहे ऽन्तरवस्थायिन्यः, गृहान्निष्क्रमणं न शीलयन्ति याः।

—कु (कु शब्दे)। ता (आहुतीः) असुरा निष्कावमादन् (तै० सं० ६।२।१।५)। निष्कावमशब्दम्, तूष्णीम्।

—कृ (डुकृञ् करणे)। आत्मन एवाधियज्ञं निष्करोति (तै० सं० ६।५।१०)। यद्वै संशीर्यतेऽथान्यन्निष्कुर्वन्ति (पञ्च० ब्रा० १७।८।४)। निष्कुर्वन्ति संस्कुर्वन्ति समादधति। यद् रथादिकम्। समृद्ध्यै पुनर्निष्कृतो रथो दक्षिणा (तै० १।५।१२)। निष्कृतः संस्कृतः सुष्ठु तष्ट्वा निर्मितो वा। प्रो अयासीदिन्दुरिन्द्रस्य निष्कृतम् (साम० उ० ४।२।७।१)। पविर्जनीनासुपयाति निष्कृतम् (ऋ० ९।८६।३२)। निष्कृतं संस्कृतं पात्रमिति सायणः। पवमानः सोमो

जनीनां पतिः पालक इति कोऽर्थान्वयः। जनयो वध्वो भवन्तीति रूढोर्थः। वायविन्द्रश्च सुन्वत आ यातमुप निष्कृतम् (ऋ० १।२।६) । जीविनां निष्कृतिर्नास्ति स्थिते कर्मणि नारद (ब्रह्मवै० पु० २।२४।३४)। निष्कृतिर्मोक्षः।

—कृत् (कृती छेदने) ।...करं देवी खड्गेन निरकृन्तत् (दुर्गा० ३।३२) । निरकृन्तत् निरच्छिदत्।

—ग्रह् (ग्रह उपादाने) । स्वादेवैनं योने निर्गृह्णाति (तै० सं० ६।५। ७।२४)। निर्गृह्णाति निष्कृष्य गृह्णाति। रूपनिर्ग्रहश्च शब्दस्य नान्तरेण लौकिकं प्रयोगम् (पा० १।२।६४ सूत्रे भाष्ये) । निर्ग्रहः स्पष्टो निर्भासः।

—चर् (चर गतिभक्षणयोः) । निश्चरन्ति यथा लोहपिण्डात् तप्तात् स्फुलिङ्गाः (याज्ञ० ३।६७) । निश्चरन्ति व्युच्चरन्ति विनिष्क्रामन्ति।

—चृत् (चृती हिंसाग्रन्थनयोः) ।...वैरोचनो हयान् । प्रष्टीन्निश्चृत्य (ऐ० ब्रा० ८।२२) । मन्दुराया निःसार्येत्यर्थः।

—जि (जि जये, जि अभिभवे) । मया ह्यलब्धनिद्रेण धृतेन तव निर्जये (रा० ६।११३।११) । निर्जये जित्वा प्रतिलब्धौ।

—ज्ञा (ज्ञा अवबोधने) । यदा वै म्रियते ऽथान्तर्धीयते ऽथैनं न निर्जानन्ति (ऐ० ब्रा० ८।२८) । न निर्जानन्ति निः शेषेण न जानन्ति।

—टङ्क् (टकि बन्धने) । शमदमादिवाक्यविहिताच्छमदमादेरानन्तर्यमथशब्दार्थ इति शङ्कराचार्यं निरटङ्कि (सर्वद० सं० पात०) । निरटङ्कि= अभ्यधायि।

—तक्ष् (तक्षू त्वक्षू तनूकरणे) । यतो द्यावापृथिवी निष्टतक्षुः (तै० ब्रा० २।८।९।६) । निष्टतक्षुः=निस्ततक्षुः। तक्षणेन निर्ममिरे।

—तुद् (तुद व्यथने) । निस्तुद्यते यस्य शिरोऽतिमात्रम् (सुश्रुत० उत्तर० २५।९)। निस्तुद्यते बलवत् पीड्यते। अतिमात्रमित्युक्ते निर्निरर्थको भवति।

—दंश् (दंश दशने)। ओष्ठविद्रुमदलान्यमोचयन्निर्दशन्युधि रुषा निजाधरम् (सा० द० ४।७ व्याख्यायामुदाहरणम्)। निर्दशन् संदशन्।

—दह् (दह भस्मीकरणे)। आपः पादावनेजनी द्विषन्तं निर्दहन्तु मे (ऐ० ब्रा० ८।२७)। निर्दहन्तु निः शेषेण दहन्तु।

—दिश् (दिश अतिसर्जने)। पितुर्वचननिर्देशात् (रा० १।१।२३)। निर्देश आज्ञेति भूषणम्। वचनमेव निर्देश इति वचननिर्देशः।

—नम् (णम प्रह्वत्वे शब्दे च)। अपरस्मिन्प्रस्तारे पक्षनिर्णामयोः (सत्या० श्रौ० २५।६।४३)। निर्णामो वक्रप्रदेशः।

—निज् (णिजिर् शौचपोषणयोः)। इदमहतं वासः, इदं निक्तम्, इदं च निर्णिक्तम् (इति वयम्)।

—नी (णीञ् प्रापणे)। पातालदेवतेयं वा···। निरणायि मधुद्वेष्ट्रा स्रष्टुः सृष्टिविलक्षणा (स्कन्दपु० का० ४।८।२।६९-७०)। निरणायि निरमायि उदपादि।

—पत् (पत्लृ गतौ)। निष्पतिष्यत्यसङ्गेन (रा० ४।१४।१७)। निष्पतिष्यति निष्क्रमिष्यति। असङ्गेन=अविलम्बेन।

—पद् (पद गतौ)। अङ्गीकृत्य गुरोर्वाक्यं गुरुपत्न्याः गुरोः शिशोः। यो न निष्पादयेन्मूढः स भवेत् निरयी नरः (स्कन्दपु० का० ४।८६।२०)॥ न निष्पादयेत् न कुर्यात्।

—पा (पा पाने)। घृतं निष्पिबति (तै० पं० २।३।११।५)। निष्पिबति निःशेषेण पिबति।

—बन्ध् (बन्ध बन्धने)। न तु ब्रूहीति निर्बध्नामि (रा० १।१५) इत्यत्र भूषणे गोविन्दराजः। ममाभिनिवेशो न, त्वयाऽवश्यं वक्तव्यमित्यत्र मे हठो न। वारितायां च नाहमत्र निर्बन्धनीया (का० सू० ४।१।२६)। निर्बन्धनीया रोद्धव्या। प्रह्वेष्वनिर्बन्धरुषो हि सन्तः (रघु० १६।८०)। अस्थिरक्रोधा इत्यर्थः। निर्बन्धो हठो भवति, तेनात्र पदार्थानुवृत्तिर्लक्ष्यते।

—भज् (भज सेवायाम्)। रूपेणैवैनं पशुभ्यो निर्भजति (तै० सं० ६।३।११)। निर्भजति निरस्यति। अन्तरिक्षात्तं निर्भजामो यो स्मान् द्वेष्टि

(अथर्व० १०।५।२६)। उक्तोऽर्थः। अस्यै पृथिव्या अस्मादन्नाद्यान्निर्भजामि निर्भक्तः स यं द्विष्मः (तै० सं० १।६।६।१)। निर्भजामि निर्वासयामि निःसारयामि। ततो निर्भक्तो यो स्मान्द्वेष्टि यं च वयं द्विष्मः (वा० सं० २।२५)। निर्भक्तो निर्गतभागः।

—भुज् (भुजो कौटिल्ये)। प्रायो निर्भुज्यते शाङ्र्गम् (सुश्रुत० १।२६।१२)। निर्भुज्यते वक्री क्रियते।

—मन्थ् (मन्थ विलोडने)। त्वामग्ने पुष्करादध्यथर्वा निरमन्थत (तै० सं० ३।५।११।३४)। मन्थनेन ततो निष्कृष्यालभत।

—मृज् (मृजू शुद्धौ)। प्रोद्यच्चन्द्रग्रहस्रांशुनिर्माजितशुभाननाम् (स्कन्द-पु० का० ४।७१।७३)। निर्माजितं शोधितम्। मालीमस्यं मानसं निर्मृजन्ति (विश्व० च० १४।१७३)। निर्मृजन्ति शोधयन्ति, शुन्धन्ति, अवदायन्ति। मालीमस्यं मालिन्यम्। मानसं मानसिकम्। गोष्ठं मा निर्मृक्षम् (तै० सं० १।१।१०)। मा विनीनशमिति भट्टभास्करः। शोधनं मालिन्यापनयनम्। अत्र लक्षणयाऽपनयनमात्रमाह। अपनयनाद् विनाशश्च नातिदूरे। निर्मृक्षमित्य-निट्पक्षे लुङि सिचि रूपम्। वृद्ध्यभावश्छान्दसः।

—यत् (यत निकारोपस्कारयोः)। निर्यातयतु मे कन्यां भवांस्तिष्ठन्तु वाजिनः (भा० उ० ११७।२०)। निर्यातयतु प्रत्यर्पयतु। न्यस्ता बहूनि वर्षाणि तेन निर्यातिता च ह (रा० उत्तर० ३०।२७)। उक्तोऽर्थः। मम निर्यातनं प्रति। अनुनीतः प्रयत्नेन (रा० ५।३६।६)॥ निर्यातनं प्रतिदानम्।

—याच् (टुयाचृ याच्ञायाम्)। रुद्रादेव पशून्निर्याच्यात्मने कर्म कुरुते (तै० सं० ५।१।२।८) निर्याच्य याच्ञया प्राप्य।

—यु (यु मिश्रणामिश्रणयोः)। निर्युवाणो अशस्तीर्नियुत्वाँ इन्द्रसारथिः ऋ० ४।४८।२)। अपनयन्नित्यर्थः।

—युज् (युजिर् योगे)। त्वमस्मिन्कार्यनिर्योगे प्रमाणं हरिसत्तम (रा० ५।३६।४)। निर्योगो निर्वाहः।

—राज् (राजृ दीप्तौ)···कनककिरीटरश्मयः। क्षमापतीन् इति निर-राजयन्निव (शिशु० १७।१६)। नीराजयन्ति स्मेत्यर्थः।

—लुठ् (लुठ विलोडने)। यथा गर्भो निर्लुठितः (पा० १।३।१ सूत्रे भाष्ये)। निर्लुठितो निर्गतः।

—वच् (ब्रूञ आदेशः)। निश्चितं वचनं निर्वचनम् (सुश्रुत० उत्तर० ६५।३२)। निगदव्याख्यातम्।

—वद् (वद व्यक्तायां वाचि)। नात्यर्थं निर्वदेत् (का० सू० ४।१।१६)। निषेधवचनं साग्रहं न वदेत् इत्यर्थः। न च निर्वदति (का० सू० ५।४।२६)। निर्वदति निश्चयेन वदति।

—वह् (वह प्रापणे)। निगडितनयनं निलिम्पपङ्क्ते निरवहतां निपुणं नियुद्धशिल्पम् (चम्पू भा० २।५१)। निरवहतां न्यरूपयतां कर्मणा समपादयताम्। अन्योऽन्यं सहसा दृप्ता निर्वहन्ति क्षिपन्ति च (रा० ६।४।२८)। अन्योन्यं निर्वहन्ति विनोदार्थमेकमेके वहन्ति। समुद्रादेव सर्वे मनोरथा निर्वहन्ति (समुद्रमथन १)। निर्वहन्ति सिध्यन्ति सम्पद्यन्ते। निष्टमूहथुः सुयुजा रथेन (ऋ० १।११७।१५)। निरूहथुः=उज्जह्रथुः=उद्धृतवन्तौ। निष्टम्=निस्तम्। ग्रहतिश्चांहश्चाहुंश्च हन्तेर्निरूढोपधाद् विपरीतात् (नि० ४।२५।४)। इह निर्वहतिर्निष्कर्षणे वर्तते। येनासि तत्र जतुवेश्मनि दीप्यमाने निर्वाहिता सह सुतैर्भुजयोर्बलेन (वेणी० ६।२३)॥ निर्वाहिता भुजाभ्यामुत्थाप्य बहिर्नीता। यान्ति निर्वहणमस्य संसृतिक्लेशनाटकविडम्बनाविधेः (शिशु० १४।६३)। निर्वहणं समाप्तिः। दृष्टे निर्वहणं भविष्यति कथं मानस्य तस्मिञ्जने (सा० द० ३।१६८ इत्यत्रोदाहरणम्)। निर्वहणं निर्वाहः, अवलम्बनं धारणं श्रयणम्। ओघ इमाः प्रजा निर्वोढा (श० ब्रा० १।८।१।२)। निर्वोढा=आप्लावयिता।

—वा (वा गतिगन्धनयोः)। त्वयि दृष्ट एव तस्या निर्वाति मनो मनोभवज्वलितम् (का० प्र० १०।४५५)। पुस्तक इदं सुभाषितमिति कृत्वा धृतम्। अर्थस्तु निर्दिष्टपूर्वो नार्हति पुनर्निर्देशम्। अनाहारो हि निर्वाति निरिन्धन इवानलः (सौन्दर० १४।८)। निर्वाति शाम्यति। शुष्यति क्षीयत इति तूपचरितम्।

—विद् (विद सत्तायाम्)। निर्विद्यति नरः कामादनिर्विद्य सुखमेधते (भा० शां० १०४।७)। निर्विद्यति निर्विद्यते विरज्यते।

—वृ (वृङ् संभक्तौ)। स (बृहस्पतिः) नीवाराग्निरवृणीत (तै० ब्रा० १।३।६।७)। अन्याभ्य ओषधिभ्यो निष्कृष्यावृणीतेत्यर्थः। कल्पे निःशेषभुक्ते तु ततो गच्छन्ति निर्वृतिम् (हरि० ३।३६।१७)। निर्वृतिं शान्तिं तिरोभावम्।

— वृत् (वृतु वर्तने)। स तान्तो निरवर्तत (जै० ब्रा० १।१५१)। निरपद्यत, अजायतेत्यर्थः। यदि पीतापीतौ सोमौ सङ्गच्छेयातामन्तःपरिध्यङ्गारान्निर्वर्त्य (पञ्च० ब्रा० ९।९।८)। निर्वर्त्य पृथक् कृत्वा।

—शो (शो तनूकरणे)। सोऽसि निःशान एहाय (ऐ० ब्रा० ७।१६)। निःशानः=निः श्यन्, तेजयन्।

—श्रु (श्रु श्रवणे)। तद् उद्देश. संवृतः कथानामनिःश्रावी पक्षिभिरप्यनालोक्यः स्यात् (कौ० अ० १।१५।३)। निः श्रवो बहिः श्रवणम्। अनिःश्रावी यत्रान्तः स्थानां कथाः कथयतां बहिः श्रवणं न स्यात्।

—सिध् (षिध गत्याम्)। निष्क्रव्यादं सेध (तै० सं० १।१।७)। निः सेध निष्कृष्य बहिरपनय।

—स्था (ष्ठा गतिनिवृत्तौ)। तं तदानीमेव विस्रस्याहा कुर्वन्तो हस्तान् ग्रन्थकौशलै र्निस्तिष्ठन्ति। एवमेवोत्तरं द्वार्बाहुमेवापरौ द्वार्बाहू निस्तिष्ठन्ति (बौ० श्रौ० ६।२७)।

—स्रु (स्रु गतौ)। कदाचित्तं जलस्थायं (=क्षुद्रजलाशयम्) मत्स्यबन्धाः समन्ततः। निः स्रावयामासुः··· (भा० शां० १३७।५)॥ परिवाहयाञ्चक्रुरित्यर्थः।

—हन् (हन हिंसागत्योः)। मज्जानमस्य निर्जहि (अथर्व० १२।७।९)। निर्जहि ताडयित्वा निर्गमय। तस्याक्षिणी निर्जघान (शां० ब्रा० ६।१३)। आहत्य निश्चकर्षेत्यर्थः। यदत्रैकपदां व्यवदध्याद् वाचः कूटेन यजमानात् पशून् निर्हण्यात् (ऐ० ब्रा० ६।२४)। निर्हण्यात् निर्गमयेत्। हनिर्गत्यर्थोऽन्तर्णीतण्यर्थ इति षड्गुरुशिष्यः। निः सार्य हन्यादिति तु सायणः। वरुणस्य वाऽभिषिच्यमानस्यापः। इन्द्रियं वीर्यं निरघ्नन् (तै० ब्रा० १।८।९)। निरघ्नन् निर्गमितवत्यः। यन्निधनवत् (साम) स्यात्, यजमानं स्वर्गाल्लोकान्निर्हण्यात् (पञ्च० ब्रा० ७।३।२४)। निर्हण्यात् निर्गमयेत्। निर्वासयेत्।

तैरुपायैः शल्यं तु नैव निर्घात्यते यदि (सुश्रुत० १।२७।११)। निर्घात्यते निर्हन्यते कृत्यते निष्कास्यते। शं नो भूमि र्वेप्यमाना शमुल्का निर्हतं च यत्(अथर्व० १९।९।८)। निर्हतं निर्घातः तडित्पातः, अशनिपातः। ततो हैनां न शेकतुर्निर्हन्तुन् (श० ब्रा० १।१।४।१४)। निर्हन्तुं निर्गमयितुम्।

—हृ (हृञ् हरणे)। य ईमाहुः सुरभिर्निर्हरेति (ऋ० १।१६२।१२)। यतः सुरभिरतो निःशेषं देवेभ्यो हरेत्याह। तस्यासून् पावकस्पर्शैः सौमित्रिः पत्त्रिभिस्त्रिभिः। यथा निरहरत्... (भा० वन० २८९।२१)॥ निरहरत् उदहरत् अपाहरत्। द्वाःस्थपरम्परा मातापितृव्यञ्जनाः शिल्पकारिकाः कुशीलवा दास्यो वा... चारं निर्हरेयुः (कौ० अ० १।१२।१३)। चारं चरैर्गृहीतं विभावितं रहस्यमुद्धरेयुरित्याह। वाक्शल्यस्तु न निर्हर्तुं शक्यो हृदिशयो हि सः (भा० उ० ३४।७९)। निर्हर्तुं निःसारयितुम्। तस्मान्निर्हरणं कार्यं दोषाणां वमनादिभिः (सुश्रुत० उत्तर० ३९।५६)। निर्हरणमपाकरणम्।

—ह्रस् (ह्रस शब्दे)। अघं हन्तेर्निर्ह्रसितोपसर्ग आहन्तीति (नि० ६।११।१)। निर्ह्रसितो ह्रस्वीकृतः।

## निरव (निर्+अव)

—दय् (दय दानगतिहिंसादानेषु)। त्र्यम्बकं रुद्रं निरवादयत (तै० ब्रा० १।६।८)। (परितोष्य) निःसारितवान्। दयतिरिह गत्यर्थः।

—दा (डुदाञ् दाने)। देवानेव वीरं निरवदायाग्निं पुनराधत्ते (तै० सं० १।५।१)। निरवदाय निष्कृष्य।

—सो (षो अन्तकर्मणि)। तस्माज्ज्येष्ठं पुत्रं धनेन निरवसाययन्ति (तै० सं० २।५।२।७-८)। पुस्तके न्यस्तचरमेतत् पुनर्न्यस्यतेऽर्थ वैशद्याय। निरवसानमुत्कर्ष इति भट्टभास्करः। व्यावृत्तमुत्कर्षिणमधिकधनवन्तं कुर्वन्तीत्यर्थः। प्रतिषिद्धोऽत्रवर्णास्वनिरवसितासु (का० सू० १।५।२)। उक्तोऽर्थः पुस्तके।

## निराङ् (निर्+आङ्)

—कृ (डुकृञ् करणे)। स्वर्गान्निराकृताः सर्वे तेन... (दुर्गा० २।६)। निराकृता निःसारिताः।

—बाध् (बाधृ लोडने, लोडनं प्रतीघातः)। निराबाधो हरिष्यामि राहुश्चन्द्रप्रभामिव (रा० ३।३६।२०)। निराबाधः=निष्प्रतिबन्धः=निष्प्रत्यूहः।

## दुराङ् (दुर्+आङ्)

—चर् (चर गतिभक्षणयोः)। स कर्णशूलः कथितो दुराचरः (सुश्रुत० उत्तर० २०।३)। दुःखेनोपचर्यंत इत्यर्थः।

## वि

—अञ्ज् (अञ्जू व्यक्तिम्रक्षणकान्तिगतिषु)। लग्नोऽग्निश्चामरेषु प्रकामं व्यज्यते न स्म सैन्यैः (शिशु० १८।३४)। न व्यज्यते स्म न विविच्यते स्म, न विविच्य ज्ञायते स्म। विक्रमेण च वाक्यैश्च व्यक्तिं वा नोपलक्षये (रा० ४।१२।३१)। व्यक्तिर्भेदः। व्यक्तिं भजन्त्यापगाः (शा० ७।८)। व्यक्तिं भजन्ति दृश्यतां यान्ति, स्फुटदर्शनतां गच्छन्ति। व्यञ्जनमात्रं तत्तस्याभिधानस्य भवति (नि० ७।१३)। व्यञ्जनं विशेषणम्।

—अश् (अशू व्याप्तौ)। स एतेनैकशतविधेनात्मनेमां जितिं जयतीमां व्यष्टिं व्यश्नुते (श० ब्रा० १०।१।६।८)। व्यष्टिः फलं साफल्यम्।

—अस् (असु क्षेपे)। व्यस्यत्येनं श्रेयस इति व्यसनम् (कौ० अ० ८।१।४)। अथ सपत्नानिन्द्राग्नी मे विषूचीनान् व्यस्यताम् (तै० सं० १।१।१३)। व्यस्यताम् विक्षिपताम्, पराणुदताम्। व्यास इन्द्रः पृतनाः स्वोजाः (ऋ० ७।२०।३)। व्यास विचिक्षेप। व्यस्यन् विश्वा अमतीररातीः (तै० सं० ५।१।५)। उक्तोऽर्थः। अश्मन्मयानि नहना व्यस्यन् (अथर्व० २०।६१।३)। व्यस्यन् विस्रंसयन्, शिथिलानि कुर्वन्। व्यस्ते त्वप्रगुणाकुलौ (इत्यमरः)। व्यस्यते विपर्यस्यते स्मेति स्वामी। व्यस्तमिव वा यज्ञस्य यद् इडा (तै० सं० १।७।१।४)। व्यस्तं विच्छेदः। व्यस्येवाक्ष्यौ भाषेत (तै० ब्रा० २।३।६।६)। विकास्येव चक्षुषी, हर्षविकसिते कृत्वा। आर्येण मम मान्धात्रा व्यसनं घोरमीप्सितम् (रा० ४।१८।३३)। व्यसनं दण्डनम्। आङो दो व्यसनक्रियस्य (पा० १।३।२० सूत्रे वार्तिकम्)। व्यसनं विभागः, विकासनमित्यर्थः।

—इ (इण् गतौ) । न मत्तस्य (प्रतिगृह्यम्) । यदा हि तस्य मदो व्येति, अथ तं तत् तपति (मै० सं० १।११।५) । व्येति विगच्छति, अपैति । श्रद्धा ते मा विगात् (जै० ब्रा० १।४१) । मा अपयासीत् । अपेत वीत वि च सर्वताताः (तै० सं० १।२।१।१६) । वीत परस्परं वियुक्ता गच्छत । अत्र ह न किं चन वीयाय (छां० उ० ४।६। ३) । वीयाय विगतमभूत्, न्यूनमभूत् । विद्युतोपि न वियन्त्यम्बुदे (धर्मशर्मा० ५।२) । वियन्ति सचरन्ति । वृत्रं हतमापो व्यायन् (शां० ब्रा० १५। ) । व्यायन् विभक्ता: सत्य उपर्यप्लवन्त ।

—ई (ईङ् गतौ) । अव्यैष्ट यः परं ब्रह्म न व्यैष्ट सततं धृतेः (सौन्दर० २।१२) । न व्यैष्ट न व्यचालीदित्यर्थः ।

—ईर् ( ईर गतौ कम्पने च ) । वि गोभिरद्रिमैरयत् (तै० ब्रा० १।५। ८।२) । व्यैरयत् विशेषेण प्रेरितवान् । त्रेधा सहस्रं वि तदैरयेथाम् (तै० सं० ७।१।६।२७) । तद् गवां सहस्रं विभक्तवन्तौ, विभज्य व्यवस्थापितवन्तौ प्राप्तवन्तौ । अहं पुरो मन्दसानो व्यैरम् (ऋ० ४।२६।३) । व्यैरं व्यक्षिपमध्वंसयम् ।

—उच्छ् (उच्छी विवासे) । उच्यमानं न गृह्णामि तस्येयं व्युष्टिरागता (रा० ६।१११।१९) । व्युष्टिः फलम् । तस्यैव तपसो व्युष्टया प्रसादाच्च स्वयम्भुवः (रा० ६।९२।२७) । व्युष्टिर्निर्वेशः फलप्राप्तिः । व्युष्टि रूपेण (तै० सं० ५।७।१९) । व्युष्टिः प्रभातम् । एकया स्तुवतेति सप्तदश सृष्टीरुपधाय ऋतूनां पत्नीति पञ्चदश व्युष्टीरुपदधाति ( वाराहश्रौ० २।२।१। १७) । व्युष्टय इष्टकाविशेषाः ।

—उब्ज् (उब्ज आर्जवे) । वरुणेन समुब्जितां मित्रः प्रातर्व्युब्जतु (अथर्व० ९।३।१८) । वरुणेन नामितां ( संवृतां ) मित्रो देवः प्रातर्विवृणोत्वित्यर्थः । शालामिति विशेष्यम् ।

—ऊह् (ऊह वितर्के) । तस्मादनुष्टुभं छन्दांसि नानुव्यूहन्ति (पञ्च० ब्रा० ६।१।११ ) । छन्दांसि गायत्र्यादीनि अनुष्टुभः स्थाने न प्रयुज्यन्ते न चानुष्टुप् तेषां स्थान इत्याह । संसर्पता प्रतिघातिना द्रव्येण न व्युह्यते (न्याभा० ४।२।२२) । व्युह्यते प्रतिहन्यते । वाजवतीभ्यां व्यूहति (तै० सं० १। ७।४) । विश्लेषयति । तस्य त्रेधा महिमानं व्यौहत (तै० ब्रा० १।१।५।८) ।

व्यौहत व्यभजत । तादर्थ्यात् । कटार्थेषु वीरणेषु व्युह्यमानेषु कटं करोतीति भवति (न्याभा० २।२।६४)। व्युह्यमानेषु विन्यासविशेषेण ग्रथ्यमानेषु ।

—ऋध् (ऋधु वृद्धौ) । तदाहुः । व्यृद्धं वा एतद् यज्ञस्य ( ) । ऋद्धिहीनमित्यर्थः । विशब्दोऽभावे ।

—ऋष् (ऋषी गतौ) । (ओषधयः) व्यृषन्तु दुरितं तीक्ष्णशृङ्ग्यः (अथर्व० ८।७।९) । विगमयन्त्वित्यर्थः ।

—कल् (कल गतौ संख्याने च) । श्रयति सौख्यममुं जनता श्रिता विकलिता कलितापशतैरपि (पारिजात० १०।२५) । विकलिताऽभिभूता, असमर्थी कृता, व्याकुला, क्षुभिता ।

—काङ्क्ष् (काक्षि काङ्क्षायाम्) । व्युत्थानं विकाङ्क्षद्भिः कथाभिः प्रतिलोभ्यते (भा० शां० ११।४३) । विकाङ्क्षद्भिरभीच्छद्भिः । कैकेय्याः प्रियकामार्थं कार्यं तदविकाङ्क्षया (रा० २।५२।२४) । इदं पुस्तके धृतपूर्वमिहार्थान्तरन्यासाय पुनर्ध्रियते । विकाङ्क्षाऽनादर इति भूषणम् ।

—कित् (कित रोगापनयने निवासे च) । न दक्षिणा वि चिकिते न सव्या (तै० सं० २।१।११।१७) । वि चिकिते विशेषेण जानामि । दक्षिणा=दक्षिणम् । सव्या सव्यम् । वि वां चिकित्सदृतचिद्ध नारी (ऋ० ४।१६।१०) । विचिकित्सत् संशयितवती सन्दिदिहे ।

—कुष् (कुष निष्कर्षे) । कुलं कुष्णातेः, विकुषितं भवति (नि० ६।२२।४) । विकुषितं विस्तीर्णं ततं प्रथितम् । शश्वदिति विचिकित्सार्थीयो भाषायाम् (नि० १।५) । विचिकित्सा निश्चय इति महेश्वरः ।

—कृ (डुकृञ् करणे) । उत्तान एव स्वपिति पादौ विकरोति च (अष्टाङ्ग० शारीर० ५।५८) । विकरोति नाना करोतीति हृदयबोधिकायाम् । विकरोति=व्याकरोति ।

—कृष् (कृष विलेखने) । इच्छःपक्षपुच्छाप्ययेषु चतुरङ्गुलं चतुरङ्गुलं संकर्षति विकर्षत्यन्ते (का० श्रौ० १६।८।१५) । विकर्षति विस्तारयति । प्रेक्षागृहाणां सर्वेषां त्रिप्रकारो विधिः स्मृतः । विकृष्टश्चतुरस्रश्च त्र्यस्रश्चैव प्रयोक्तृभिः (ना० शा० २।११ इत्यस्यानन्तरं प्रक्षिप्तम्) ।। विकृष्टो विभागेन कृष्टो दीर्घो न तु चतसृषु दिक्षु साम्येन ।

—कॄ (कॄ विक्षेपे)। मरुदवनिरुहां रजो वधूभ्यः समुपहरन् विचकार कोरकाणि (शिशु० ७।२६)। विचकार विकासयामास। पुप्लुवे कपिशार्दूलो विकिरन्निव रोदसी (रा० ५।१।६६)। विकिरन्=विक्षिपन्, वियुवन्।

—क्लृप् (कृपू सामर्थ्ये)। नास्योभयोः पक्षयोर्मोक्षाधिगमो विकल्पते (न्याभा० १।१।२२)। विकल्पते सन्दिग्धो भवति। उत्तरं दक्षिणं चापि अयनं न विकल्पयेत्। सर्वस्तेषां शुभः कालः…(मात्स्य पु० १८४।६१)। न विकल्पयेत् न विचारयेत्, न मीमांसेत। तया वा इदं सहस्रं विकल्पयामहा इति (पञ्च० ब्रा० २१।१।२)। विकल्पयामहै विभजामहै।

—क्रम् (क्रमु पादविक्षेपे)। विष्णोः क्रमोऽसि, विष्णोः क्रान्तमसि, विष्णोर्विक्रान्तमसि (तै० सं० १।७।७)। विक्रान्तं विजयः। रथः स्तूयते। विजयउक्तः। ते ऽन्योन्यस्मै ज्यैष्ठ्यायातिष्ठमानाश्चतुर्धा व्यक्रामन् (तै० सं० २।२।११।५)। चतुर्धा व्यक्रामन् चतुर्धा व्युह्य स्थिताः। अतिष्ठमानाः कार्येऽप्रकाशमानाः। नदीं गोदावरीं रम्यां जगाम लघुविक्रमः (रा० ३।६४।२)। लघुविक्रमः=त्वरितपदन्यासः।

—क्षिप् (क्षिप प्रेरणे)। स उ ह तूष्णीमेव शिश्ये तत उ हैनं यष्ट्या विचिक्षेप (कौ० ब्रा० उ० ४।१८)। विचिक्षेप अधुनात्, अधूनयत्। उद्भ्रिन्नमिव वेगेन विक्षिपन् रघुनन्दनः (रा० ३।६०।४)। विक्षिपन् हस्तादीनवयवान् इतस्ततः क्षिपन्। तेन विक्षिपतात्यर्थं पवनेन समन्ततः (रा० ४।१।१६)। विक्षिपता विविधं प्रेरयता। विद्युद्भिरिव विक्षिप्तमाकाशमभूत्तदा (रा० १।४३।२२)। विक्षिप्तं व्याप्तम्। चतुष्पथगदायुद्धे (भा० आदि० ६८।१२)। प्रक्षेप-विक्षेप-परिक्षेपाभिक्षेपाख्याश्चत्वारः पन्थानो यस्य तत्, तस्मिन्। विक्षेपः समीपस्थे कोटच प्रहारः। अविक्षिपः (अच्कावशक्तौ ६।२।१५७ सूत्रे वृत्तावुदाहरणम्)। अविक्षिपः=विक्षेप्तुं विभज्य दातुमसमर्थः।

—गाह् (गाहू विलोडने)। इह विहारसुखं दयितासखः सरसि को रसिको न विगाहते (पारिजात० १०।४०)। विगाहते ऽनुभवति, अश्नुते, निर्विशति।

—गै (कै गै शब्दे)। यस्त्वा एना विजिगासन् न शक्नोति विगातुमार्तिमार्च्छति (जै० ब्रा० १।१०३)। विशिष्य गानमिह विगानमुक्तं न तु विरोधोक्तिर्विगानं यथाऽन्यत्र।

—ग्रह् (ग्रह उपादाने)। त्रिर्विगृह्णाति (तै० सं० २।५।७।२)। विच्छिन्नत्तीत्यर्थः। वि ह्येनं (सोमं) तैः (ग्रावादिभिः) गृह्णते (तै० सं० ६।३।२।८)। विगृह्णते विभज्य विश्लिष्य गृह्णन्ति। तां देवासुरा व्यगृह्णत (तै० ब्रा० १।१।१०।१)। तामुद्दिश्य व्यवदन्तेत्यर्थः। तस्य (सोमस्य) यशः (धनरूपं) व्यगृह्णत (तै० ब्रा० २।२।८।६)। व्यगृह्णत विभज्य गृहीतवन्तः। देवाः कर्तारः। पवित्रं विगृह्णन्ति (पञ्च० ब्रा० ६।६।१२)। विगृह्णन्ति विस्तारयन्ति। धनुर्विगृह्य जानुभ्यां जघान च महाक्रतुम् (हरि० ३।३२।२३)। विगृह्य विनम्य। जानुभ्यां स्थित इति शेषः। न विगृह्य कथां कुर्यात् (मनु० ४।७२)। अभिनिवेशेन पणबन्धादिना लौकिकेषु शास्त्रीयेषु वाऽर्थेष्वितरेतरं जल्पनयाहोपुरुषिका या सा विगृह्यकथेति मेधातिथिः। न विप्रमोक्षो वाणानां न विकर्षो न विग्रहः (रा० ६।८९।३०)। विग्रहः प्रविभागः।

—चर् (चर गतिभक्षणयोः)। मा ते मनो विष्वद्रियग् विचारीत् (तै० सं० १।७।१३)। सोऽश्वान् विचारयित्वा तु रथे युक्तान् मनोजवान् (रा० ७।४६।२१)। विचारयित्वा विचार्य परिभ्रमगं परिवर्तनं कारयित्वा। वसन्तलक्ष्म्यामविचार्य चक्षुः (सौन्दर० ७।२१)। अविचार्य अचारयित्वा अव्यापार्य। विचार्य सर्वतो दृष्टिम् (रा० ४।१४।२) उक्तोर्थः।

—चि (चिञ् चयने)। गदामि वेदान् विचिनोमि छन्द (भा० वन० १९७।८)। विचिनोमि परिचिनोमि, अभ्यस्यामि। व्रीहीनाहरेच्छुक्लांश्च कृष्णांश्च विचिनुयात् (तै० सं० १।८।९)। विचिनुयात् विविञ्च्यात्। कर्णांश्चाकर्णांश्च तण्डुलान् विचिनुयात् (तै० सं० १।८।९)। पृथक् कुर्यादित्यर्थः। एतद्विचार्य मनसा भवानेतद्विनिश्चयम्। विचिनोतु··· (भा० उ० १७७।६)॥ विचिनोतु=अन्विष्य विन्दतु। छन्दोविचित्यां सकलस्तत्प्रपञ्चो निर्दशितः (काव्यादर्शे १।१२)। छन्दांसि विचीयन्ते संगृह्यन्तेऽत्रेति, विज्ञायन्ते वाऽनयेति छन्दोविचितिः। यथाङ्गमेवेतराण्यङ्गानि विचिन्वन्ति (जै० ब्रा० १।४९)। विचिन्वन्ति विशेषेण चिन्वन्ति, उपचिन्वन्ति।

—चृत् (चृती ग्रन्थनहिंसनयोः)। कृण्वन्त्संचृतं विचृतमभिष्टये (ऋ० ९।८४।२)। विचृतं विग्रन्थि विश्लथम्।

—छद् (छद अपवारणे)। घ्नन्ति त्वेवैनं विच्छादयन्तीव (छां० उ० ८।१०।२)। इदं धृतपूर्वं पुस्तके। अर्थस्तु न निरदेशीति स निर्दिश्यते। विच्छादयन्तीव विद्रावयन्तीव।

—छिद् (छिदिर् द्वैधीकरणे)। स ऐक्ष्वाकोऽधावयत् (रथवाहानश्वान्) ब्राह्मणकुमारं रथेन (रथावयवेन चक्रेण) व्यच्छिनत्। (पञ्च० ब्रा० १३।३।

१२) । व्यच्छिनद् विच्छिन्नावयवमकरोत् । अदृष्टे दर्शनोत्कण्ठा दृष्टे विच्छेद-भीरुता । नादृष्टेन न दृष्टेन भवता लभ्यते सुखम् ।। विच्छेदो वियोगः ।

—जि (जि जये, जि अभिभवे) । सं च जयति वि च जयते (ऐ० ब्रा० ३।१६) । विजयते वियुज्य शत्रून् जयति ।

—ज्ञा ( ज्ञा अवबोधने ) । शरीरज्ञानविज्ञानैः ( सुश्रुत० १।३५।४ ) । ज्ञानं तत्त्वावबोधः । विज्ञानं चित्रादिकर्मकौशलम् । शूरस्य ज्ञानिनो वाऽहं देया विज्ञानिनो पि वा (कथा० ७६।६) । शिल्पादिज्ञानं विज्ञानम् ।

—तंस् (तसि भूष अलङ्करणे) । वीतंसस्तूपकरणं बन्धने मृगपक्षिणाम् इत्यमरः ।

—तन् (तनु विस्तारे) । बहूनां वितता यज्ञा द्विजानां य इहागताः । तेषां समाप्तिरायत्ता तव वत्स निवर्तने (रा० २।४५।२८) ।। वितताः प्रवर्तिता अनुष्ठीयमाना वितायमानाः । प्रस्तारस्थगिता इवोन्मुखमणिज्योतिर्वितानै-र्दिशः (मालती ६।५) । वितानः समूहः । प्रमुदितवरपक्षमेकतस्तत् क्षिति-पतिमण्डलमन्यतो वितानम् ( रघु० ६।८६ ) । वितानं सावसादं ग्लानम् । वितानेष्वप्येवं तव मम च सोमे विधिरभूत् (वेणी० ५।३०) । वितानो यज्ञः क्रतुः ।

—तृप् (तृप प्रीणने) । वितर्पयन्ति ये पुण्यास्तृषिताञ्शीतलैं जलैः(स्कन्द-पु० का० ४।१२।६०) । वितर्पयन्ति विगततृष्णान् सुहितान्कुर्वन्ति ।

—तॄ (तॄ प्लवनतरणयोः) । वि मित्र एवैररातिमतारीत् (तै० सं० १।८।१०) । अरातिमदानशीलं शत्रुं व्यतारीत् वितारयतु (वितरणशीलं) दान-शीलं करोतु । यदा विपूर्वस्तरतिर्विप्लवे वर्तते, विप्लवो विनाशः, तदा विनाश-यत्वित्यर्थ इति भट्टभास्करः । इतीमावेव तं लोकौ वितारयति (शां० ब्रा० २।१) । विग्रथितौ विश्लिष्टौ करोतीत्यर्थः । आरूढमद्रीनुदधीन् वितीर्ण···यशः (रघु० ६।७७) । वितीर्णमवतीर्णम् ।

—त्रस् (त्रसी उद्वेगे) । सहसा न प्रतिबोधयेद् वित्रासभयात् (सुश्रुत० ३।१।३८) । वित्रास उद्वेगः । बालमिति शेषः ।

—दंश् (दंश दशने) । दन्तान् विदशतस्तस्य श्रूयते दशनस्वनः (रा० ६।

६२।२३) । विदशत:=पिंषत: । अस्थिविवरप्रविष्टमस्थिविदष्टं वाऽवगृह्य (सुश्रुत० १।२८।६) । विदष्टमत्यासक्तम् ।

—दह् (दह भस्मीकरणे) । मैनमग्ने वि दहो माभि शोच: (ऋ० १०।१६।१) । एनं प्रेतं विशेषेण दग्धं मषीभूतं मा कुर्वित्यर्थः । तस्यै ह विदग्धायै सृगालः संभवति ( श० ब्रा० १२।५।२।५ ) । विदग्धा दग्धा । विर्नार्थेऽन्तरं कुरुते । यो विदग्धः स नैर्ऋतो योऽशृत: स रौद्रो यः शृतः स दैवतः । तस्मादविदहता श्रपयितव्य: सदैवतत्वाय(तै० सं० २।६।३।४) । य: पुरोडाश: । विरूपो दग्धो विदग्धोऽतिदग्धो वा । अविदग्धा विदग्धाश्च ते (रसा:) भिद्यन्ते त्रिषष्टिधा (सुश्रुत० उत्तर० ६३।३) । विदग्धशब्दः संयुक्ते वर्तते धातूनामनेकार्थत्वादिति डल्लनः । अविदग्ध इव क्षीरे क्षीरमन्यद् विमिश्रितम् (चरक० चि० १५।२३७) । अविदग्धे नातिसन्तप्ते ।

—दा (डुदाञ् दाने): अनुग्रहं कुरु विभो विदायं देहि साम्प्रतम् (ब्रह्मवै० १।२३।३६) । विशिष्टो दायो विदायः ।

—दाश् (दाशृ दाने) । ये ते हवेभिर्वि पणीँरदाशन् (ऋ० ७।१९।६) । पुस्तके पठितमप्यर्थनिर्देशायेहानूद्यते । धनानि विशेषेणादापयन् इत्यर्थ: । दाशतिरिहान्तर्णीतण्यर्थक: ।

—दु (टुदु उपतापे) । आदुन्वस्व विदुन्वस्व द्रुह्य कुप्यस्व याचकि (भा० आदि० ७८।११) । विदुन्वस्व पांशुषु लुठनादिना सन्तप्ता भव ।

—दुष् ( दुष वैकृत्ये ) । न शेषो अन्यजातमस्त्यचेतानस्य मा पथो वि दुक्ष: (ऋ० ७।४।७) । मा विदुक्षः=मा विदूदुषः ।

—दुह् ( दुह प्रपूरणे ) । सगोत्राय ब्रह्मणे देयः सोमपीथस्याविदोहाय ( पञ्च० ब्रा० १८।२।१२ ) । अविदोहो ऽविनाशः । विपरीतफलप्रशमनम् ।

—दृभ् ( दृभी ग्रन्थे ) । विरोधिदुर्वातविदर्भितां विपन्नदीं न दीना: परिलङ्घयन्ति ते ( धर्मशर्मा० १८।२३ ) । विदर्भिता धूयमाना विप्लाव्यमाना ।

— दृश् ( दृशिर् प्रेक्षणे ) । तत्र तत्र व्यदृश्यन्त मृता दैत्येश्वरा भुवि (मात्स्य० १५०।१७५) । विर्नानात्वे व्याप्तौ वा ।

—दॄ (दॄ विदारणे)। घ्नन् वृत्राणि वि पुरो दर्दरीति (अथर्व० २०।६०। २)। विदर्दरीति विशेषेण पुनः पुन र्दृणाति।

—दो (दो अवखण्डने)। वि च हैवास्य पाप्मानं द्यतः (तै० ब्रा० ३। १०।६।१)। विद्यतः—विच्छिन्दन्तः।

—धा (डुधाञ् धारणपोषणयोः)। रूपं विधत्ते ऽरूपश्च भक्तानुग्रहहेतवे (ब्रह्मवै० २।३४।२६)। विधत्ते धत्ते आधत्ते। स एकशतधात्मानं व्यधत्त (श० ब्रा० १०।१।६।१)। व्यधत्त व्यभजत। पूर्वापकारिणां त्यागे न ह्यधर्मो विधीयते (रा० २।६६।२४)। विधीयते शिष्यते उपदिश्यते, स्मर्यते। यत् प्रसिद्धं तदनूद्यते यदप्रसिद्धं तदाख्यायते विधीयते ज्ञाप्यते। यथा यः कुण्डली स देवदत्तः (पा० १।४।६७ सूत्रे न्यासे)। अभिव्यक्तोऽर्थः। विधापञ्चक-सूत्रग्राहक-चिकित्सकाः (कौ० अ० २।३०।२६)। विधा भक्ष्यमन्नम्। उत्क्षिप्त-हस्ततलदत्तविधानपिण्ड- (शिशु० ५।५१)। विधानं हस्तिकवल इति वैज-यन्ती। न ह्यविद्वान् विहितो ऽस्ति (मी० सू० २।८।८)। न विहितो नाधि क्रियते। अर्को वा एष यदग्निस्तस्यैतदेव स्तोत्रमेतच्छस्त्रं यदेषा विधा विधी-यते (तै० सं० ५।३।४।२१-२२)। विधा प्रकारः।

—धु (धुञ् कम्पने)। सहर्षं नृत्यन् रविकिरणसन्तप्तं पक्षोत्क्षेपै र्विधु-वति प्रासादं गृहमयूरः (मृच्छ० ४)। विधुवति वीजयति।

—धृ (धृञ् धारणे)। सम्यग्विधार्यतां बालो गुरुगेहे द्विजातिभिः। विष्णु-पक्षैः प्रतिच्छन्नै र्न भिद्येतास्य धीर्यथा (भा० पु० ७।५।७)॥ विधार्यतां रक्ष्य-ताम्। मूत्रं तु विधृतं चिरम् (अष्टाङ्ग० नि० ६।२३)। विधृतं निरुद्धम्। प्रजापतिः प्रजा असृजत ता अविधृता असञ्जानाना अन्योन्यमादन् (पञ्च० ब्रा० २४।११।२)। अविधृता असंयताः, निरर्गलाः। छेदानुरूपं च वैधरणं दद्युः (कौ० अ० २।१६।६)। वैधरणं यावत्क्षतादि-प्रतिसमाधाने समुत्सर्ज-नीयं स्यात् तावद् द्रव्यं दण्ड इति देयम्। विधरणस्य प्रतिसमाधानस्येदं वैधरणम्।

—नी (णीञ् प्रापणे)। एष हितो वि नीयते ऽन्तः शुभ्रावता पथा (ऋ० ६।१५।३)। एष सोमो हविर्धाने हितो निहितो विनीयते प्रणीयते (आहवनीयं प्रति) इति श्रुतेरर्थः। विनयति सुदृशो दृशोः परागं प्रणयिनि कौसुममाननानि-लेन (सा० द० ३।१६६ इत्यत्रोदाहरणश्लोकः)। विनयति प्रक्षिपति। तत्र ते ऽहं विनेष्यामि ब्रह्मत्वं यत्र वैष्यसि (भा० अनु० ११८।७)। ब्रह्मविद्यां

**शिक्षयिष्यामि, प्रापयिष्यामीति वार्थः ।** प्रणयिनीमिह मानविनोदिनीं सविनयं विनयन्ति विलासिनः (पारिजात० १०।२१)। **विनयन्ति अनुनयन्ति । अत्रार्थेऽन्यत्र दुर्लभः प्रयोगः ।** तेजो मा विनैत् (तै० सं० १।१।१०)। **मा विनीनशदित्यर्थः । लोके तु विनैषीदिति स्यात् ।** विनीयमानो विद्यासु (कथा० २८।६)। **विनीयमानःशिक्ष्यमाणः ।** विनीतधर्मार्थमपेतमोहं लब्ध्वा द्विजम्··· (भा० वन० २६।११)। **विनीतौ सम्यक् शिक्षितौ धर्मार्थौ येन स तथोक्तः, तम् ।** पटुपटहध्वनिभिर्विनीतनिद्रः (रघु० ९।७५)। **विनीतनिद्रो विगमितस्वापः ।** प्रीतो राजन्पुत्रगुणैर्विनीतः (भा० सभा० ५८।६)। **विनीतो विरुद्धमार्गं नीत इति देवबोधः ।** उत्तरीयविनयात् त्रपमाणा (शिशु० १०।४२)। **विनय आकर्षणम् ।** स संनयः स विनयः पुरोहितः (ऋ० २।२४।९)। **विनयः संगतानां विविधं नेता पृथक् कर्ता ।**

**—पद् (पद गतौ) ।** भूताश्चार्था विपद्यन्ते देशकालविरोधिताः (रा० ५।२।३९)। **विपद्यन्ते नश्यन्ति । भूता निष्पन्नप्रायाः ।** तच्चास्य प्रार्थितं न सम्पद्यते सम्पद्य वा विपद्यते (न्या० भा० ४।१।५७)। **उक्तोऽर्थः ।** सर्वं वस्तु द्रव्यात्मना नोत्पद्यते विपद्यते वा परिस्फुटमन्वयदर्शनात् (स्याद्वाद० २१ हैमः)। स दैत्यभुजमासाद्य पाशः सद्यो व्यपद्यत (स्कन्द० मा० कौ० २।२१।२०७)। **व्यपद्यत विच्छिन्नो विशीर्णोऽभवत् ।** समाधातुं कार्यमेतद् विपन्नम् (भा० उ० २९।४७)। **विपन्नं विकृतम् । समाधातुं साधूकर्तुम् ।**

**—पाशय् (पाश प्रातिपदिकाद् धात्वर्थे णिच्) ।** विपाड् विपाशनाद्वा पाशा अस्यां व्यपाश्यन्त वसिष्ठस्य मुमूर्षतः (नि० ९।२६।१)। **व्यपाश्यन्त विस्रस्ता अभवन् ।**

**—पृच् (पृची सम्पर्के) ।** आदित्सोमो वि पपृच्यादसुष्वीन् (ऋ० ४।२४।५)। **विपपृच्यात् पृथक् कुर्यात् ।**

**—प्रच्छ् (प्रच्छ ज्ञीप्सायाम्) ।** अथ ह स्म ततः पुरो विपृच्छमानाश्चरन्ति (जै० ब्रा० २।५५)। **विशब्दो नानात्वे । यथा विप्रश्न इत्यत्र ।** उपो एमि चिकितुषो विप्रच्छम् (ऋ० ७।८६।३)। **विप्रच्छं विप्रष्टुम् । नाना प्रश्नान्कर्तुम् ।**

**—प्लु (प्लुङ् गतौ) ।** विप्लवते हि खल्वपि कश्चित्पुरुषकृताद्वचनात्प्रत्ययः (मी० शा० भा० १।१।२।२)। **विप्लवते मिथ्या भवति । वितथो भवति ।**

—फल् (ञिफला विशरणे) । गर्भोऽयं सप्तधा विफलीकृतः (रा० १।४७। २) । विफलीकृतः शकलीकृतः ।

—बन्ध् (बन्ध बन्धने) । ···मूत्रं तु विधृतं चिरम् । न निरेति विबद्धं वा (अष्टाङ्ग० नि० ६।२६-२७) । विबद्धं सक्तम् ।

—बृंह् (बृहि करिगर्जिते) । शक्तो हन्तुं किमात्मानं जातिदोषाद् विबृंहसि (मात्स्य० १४०।२२) । विबृंहसि गर्जसि वल्गसि ।

—भा (भा दीप्तौ) । सर्वान्गुणानेष गुणो विभाति (भा० उ० ३५।५३) । विभाति भासयति ।

— भू (भू सत्तायाम् ) । यत्र क्वचिदुत्पन्नाः शब्दा विभवन्त्याकाशे (न्या० भा० ४।२।२१) । विभवन्ति व्याप्नुवन्ति, तत्र समवेता भवन्ति । विभूर्मात्रा प्रभूः पित्रा (वा० सं० २२।१९) । विभूः=वैभवयुक्तः । वैभवं विविधभक्ष-सम्पत्तिः ।

—भ्रम् ( भ्रमु चलने, अनवस्थाने ) । यथा न विभ्रमेत्सेना तथा नीति-र्विधीयताम् (भा० वि० ४७।२३) । न विभ्रमेत् न विघटेत, न भज्येत । रोदने व्याधिमभ्येति हसने देशविभ्रमम् (मात्स्य० २३२।५) । विभ्रमम् विप्लवम् ।

—मद् ( मदी हर्षे ) । निषेव्य पानं मदनीयमुत्तमं निशाविवासेषु चिराद् विमाद्यति (सौन्दर० ९।२९) । विमाद्यति विगतमदो भवति ।

—मा (माङ् माने) । वि यो रजांस्यमिमीत सुक्रतुः (ऋ० ६।७।७) ।

मृद् (मृद क्षोदे) । अन्या मध्यस्थचिन्ता हि विमर्दाभ्यधिकोदया (रा० २।२।१६) । विमर्दः पूर्वपक्षापरपक्षसङ्घर्षः ।

—मृश् (मृश आमर्शने, आमर्शनं स्पर्शः) । पांसुगुण्ठितसर्वाङ्गीं विममर्श च पाणिना (रा० २।२०।३४) । विममर्श पस्पर्श । राम षड् युक्तयो लोके याभिः सर्वं विमृश्यते ( रा० ३।७२।८ ) । विमृश्यते विचार्यते चिन्त्यते परीक्ष्यते ।

—म्रुच् (म्रुचु गतौ) । असौ वा आदित्योऽस्तं यन् पोढा विम्रोचति । व्यम्रुचदिति इति ह स्म वा एतं पूर्वे प्राणिन आचक्षते । अथैतर्हि न्यम्रुचदिति (जै० ब्रा० १।७) । विम्रोचति विभज्य व्यस्यास्तं याति ।

—**यत् (यती प्रयत्ने)** । आपन्नसत्त्वायां कौमारभृत्यो गर्भभर्मणि प्रसवे च वियतेत (कौ० अ० १।१७।२५) । **वियतेत विशेषेण यतेत ।** त्रिवृतमेव यज्ञमुखे वियातयति (तै० सं० ५।१।१।३) । **वियातयति व्यापारयति ।**

—**यम् ( यम उपरमे )** । वि मध्यं यामयौषधे (अथर्व० ६।१३७।३) । केशानां मध्यं **विविधं यमय स्थिरं कुरु । यामयेत्यत्र सांहितिको दीर्घः ।**

—**या (या प्रापणे, प्रापणमिह गतिः)** । वज्रो वा एतस्याग्नीनन्वेति यस्यान्तरेण युक्तं वा वियाति सं वा चरन्ति ( जै० ब्रा० १।५१ ) । **अग्नीनन्तरेणेत्यन्वयः । अन्तरेण मध्ये । युक्तं पक्षियुगम् । वियाति याति । विशब्दो नार्थे विशेष करोति । उत्तरत्र यदि मेऽपि ग्राम** एवाग्नीनन्तरेणायासीदिति श्रवणात् । वि जयुषा ययथुः सान्वद्रेः (ऋ० १।११७।१६) । **विययथुः—विविधं गतवन्तौ ।** सामात्याः सपरिषदो वियातशोकाः (रा० २।७९।१७) । **वियातशोकाः विशेषेण यातो गतः शोको येषां ते । विधूतशोका इति पाठान्तरम् ।**

—**रक्ष्** ( रक्ष पालने ) । राजा राष्ट्रं वि रक्षति (अथर्व० ११।५।१७) ।

—**रम् ( रमु क्रीडायाम् )** । इदममरवरात्मजस्य घोरं शुचिचरितं विनिशम्य फाल्गुनस्य ।··· त्रिदिवगता विरमन्ति मानवेन्द्राः (भा० वन० ४६।६३) । **विरमन्ति विशेषेण रमन्ते ।** रत्यर्थिनो वै दनुजा गृहेषु सहाङ्गनाभिः सुचिरं विरेमुः (मात्स्य० १३९।२२) । **विरेमुः—विशेषेण रेमिरे । अर्धं चेतसि** जानकी विरमयति अर्धं च लङ्केश्वरः (हनुमन्नाटके १०।१४) । **विरमयति विगतरतिकं करोति । दुःखयतीत्यर्थः ।**

—**रह्** (रह त्यागे) । ततो विरहितं दृष्ट्वा पितरं प्रतिपूज्य च (भा० आदि० १४१।३१) । **विरहितमेकाकिनम् ।**

—**राध् (राध साध संसिद्धौ)** । तर्हि कीटिकादिभिः किं तव विराद्धम् (स्याद्वाद०) । **विराद्धमपराद्धम् ।**

—**रुच् ( रुच दीप्तावभिप्रीतौ च )** । द्वे कर्मणी नरः कुर्वन्नस्मिँल्लोके विरोचते (भा० उ० ३३।५४) । **विरोचते विशेषेण दीप्यते । सं दूतो अद्यौदुषसो विरोके** (ऋ० ३।५।२) । **विरोको व्युष्टिः, विभानम् ।**

—**रुध् (रुधिर् आवरणे)** । विधेर्विधानाद् विरुणद्धि कस्य वा न मानसं

मोहमहातम स्थितिः ( परिजात० १६।१६ )। विरवस्य स्थाने। अवरुणद्धीति साधु स्यात्। संवरणमाच्छादनं हि विवक्षितम्।

—रुह् (रुह बीजजन्मनि)। सहस्रवल्शा वि वयं रुहेम (तै० सं० १।१।२)। विरुहेम विरोहेम विविधं रोहेम। वृक्षस्य नु ते पुरुहूत वया व्यूतयो रुरुहुरिन्द्र पूर्वीः (ऋ० ६।२४।३)। पूर्वीः पूर्व्यः पूर्वा (खिलीभूताः) व्यूतयो यज्ञमार्गाः। विरुरुहुः पुना रूढाः प्रसिद्धा अशून्या भवन्तु। यस्य यूपो विरोहति (तै० ब्रा० १।४।७।१) विरोहति अङ्कुरवान् जायते।

—रेभ् (रेभृ शब्दे)। विधिविहितविरिब्धैः सामिधेनीरधीत्य। विरिब्धैः स्वरैः। क्षुब्धस्वान्तध्वान्तेत्यादिना रेभेर्निष्ठायां निपातितम्।

—लक्ष् ( शम लक्ष आलोचने )। तां दृष्ट्वा युक्त्युपालब्धां राजा देवीं विलक्षिताम् (कथा० १७।३२)। विलक्षितां ह्रीमूढाम्। विलक्षो विस्मयान्वित इत्यमरः।

—लग् ( लगे सङ्गे )। इति ध्रुवं व्यलगिषुरात्तभीतयः खमुच्चकरैनलसखस्य केतवः ( शिशु० १७।५५ )। खं व्यलगिषु वियदारूढाः। केतवो रेणवः।

—लभ् (डुलभष् प्राप्तौ)। विलब्ध इव चक्राह्वैस्तस्य तीर्णनिशैः सदा। भेजे शतगुणीभावं करुणाक्रन्दितध्वनि (कथा० ८७।१९)। पूर्वमुपात्तो ऽप्येष ग्रन्थोऽर्थनिर्देशाय पुनरुपादीयते। विलब्धो मिश्रितः।

—लिप् (लिप उपदेहे)। चिताभस्मरजः विलिप्यते मौलिभिरम्बरौकसाम् (कु० ५।७९)।

—वद् (वद व्यक्तायां वाचि)। अथ ह प्राणा अहंश्रेयसि व्यूदिरे (छां० उ० ५।१।६)। अहं श्रेयानहं श्रेयानित्यत्र विषये विवदमाना बभूवुः, न संजज्ञुः, संवादं न विविदुः। तस्याननादुच्चरितो विवादश्चस्खाल वेलास्वपि नार्णवानाम् (रघु० १८।४३)। विवादो वचनम्। आज्ञावचनं शासनम्। अत्रार्थेऽन्यत्र दुर्लभः प्रयोगः।

—वल्ग् (वल्ग गतौ)। माहेन्द्रेण विवल्गतीव धनुषा धाराशरोद्गारिणा (मृच्छ० ५।२७)। विवल्गति इतस्ततः प्रद्रवति, विधावति।

—वस् (वस आच्छादने)। वाससी इव विवसानौ (तै० सं० १।५।१०।१)। अर्थव्यक्त्यर्थमिह पुनर्न्यासः। अन्योन्यस्य विपरिवृत्ते इव वाससी धारयन्तौ। वेदे वसिर्व्युच्छनेपि वर्तते तथा च प्रयोगः – ते देवा मित्रावरुणावब्रुवन्निदं नो विवासयतमिति (तै० सं० ६।४।८)। विवासयतम् विभातं कुरुतमिति।

—वह् (वह प्रापणे)। मघासु हन्यन्ते गावः फल्गुनीषु व्यूह्यते (अथर्व० १४।१।१३)। व्यूह्यते व्युह्यते विवाहो भवति। पशवो विवाहाः (ऐ० ब्रा० ७।१३)। वाहेन निर्वाहकाः।

—वा (वा गतिगन्धनयोः)। मिहं न वातो वि ह वाति भूम (ऋ० १०।३१।९)। मिहं न विवाति मेघमिवावगाहते। सायणस्त्वन्यथा व्याख्याति। नकारं प्रतिषेधार्थीयं पश्यति।

—विच् (विचिर् पृथग्भावे)। प्रत्यग्रमज्जनविशेषविविक्तकान्तिः (रत्ना० १।२०) विविक्ता शुद्धा। विविक्तौ पूतविजनावित्यमरः।

—वृ (वृञ् वरणे)। स्वर्गमेवैभ्य एतया लोकं विवृणोति (ऐ० ब्रा० ६।७)। स्वर्गद्वारमुद्घाटयतीत्यर्थः। आचरन्त्या न विवृता सद्यो भवति मेदिनी (रा० २।३५।१४)। विवृता विदीर्णेति भूषणकारः।

—वृत् (वृतु वर्तने)। वि पाप्मना वर्तत य एतया स्तुते (पञ्च० ब्रा० २।१।४)। विवर्तते पृथग्भवति। स्थाने रामायणकविर्देवीं वाचं व्यवीवृतत् (उत्तर० ६।२०)। व्यवीवृतत् पर्यणमयत्। प्राकृतेन च बन्धेन तथा वैकारिकेण च। दक्षिणाभिस्तृतीयेन बद्धोऽत्यन्तं विवर्तते (ब्रह्माण्ड० ३।३।३७-३८)॥ विवर्तते परिवर्तते। परिभ्रमति। संसरति। यो वा अश्वस्य मेध्यस्य विवर्तनं वेद (तै० ब्रा० ३।९।२३।२)। विवर्तनं मार्गश्रमपरिहाराय भूमौ शरीरस्य परिवर्तनम्।

—वृह् (वृहू उद्यमने)। सोमारुद्रा विवृहतं विषूचीममीवा (तै० सं० १।८।२२)। विवृहतमुन्मूलयतम्। त इमे लोका व्यवृहान्त वि यज्ञो व्यवृह्यत (जै० ब्रा० १।१५५)। व्यवृह्यन्त पृथगभवन्।

—शस् (शसु हिंसायाम्)। मां वा हरेयुस्त्वद्धस्ताद् विशसेयुरथापि वा। विशसेयुः—हिंस्युः। अन्यत्र विशसनं विकर्तनं भवति।

—शिक्ष् (शिक्ष विद्योपादाने)। सखे वि शिक्षेत्यब्रवीत (ऋ० ४।३५।३)। विशिक्ष (सोमपानम्) अनुगृहाण।

—शी ( शीङ् स्वप्ने )। मुञ्चन्ति गुर्वशुचिताविशयेन किं न (विश्व० च० २६।३६८)। विशय: संशयः। तत्र याथाकामी शब्दार्थस्य विशयित्वात् (सत्या० श्रौ० २५।४।५)। विशयी सन्देहास्पदम्।

—शॄ (शॄञ् हिंसायाम्)। मा तण्डुलं विशरीर्देवयन्तम् (अथर्व० १२।३। १८)। मा विशरीः—मा विशारीः। मा खण्डशः कार्षीरित्यर्थः।

—श्रण् (श्रणु दाने)। दक्षिणः क्षितिपतिर्व्यशिश्रणद दक्षिणाः (शिशु० १४।३३)। व्यशिश्रणत् प्रादात्। धातुर्विशब्दं न व्यभिचरतीत्येव द्योतनाय विरुपसर्गः प्रयुक्तः, अर्थं तु न कलयापि विशिनष्टि।

—श्रि ( श्रिञ् सेवायाम् )। ऊर्ध्वमस्या अञ्जयो वि श्रयन्ते ( ऋ० ७। ७८।१)। वि श्रयन्तामुर्विया हूयमाना द्वारो देवीः (ऋ० २।३।५)। विश्रयन्तां विवृतपिधाना भवन्त्वित्यर्थः। देवी द्वारो वि श्रयध्वम् ( ऋ० ५।५।५ )। उक्तोऽर्थः। प्रति गृभ्णाति विश्रिता वरीमभिः ( ऋ० १।५५।२ )। विश्रिता व्याप्ताः। वरीमा वरिमा प्रथिमा विस्तारः।

—श्रु (श्रु श्रवणे)। लक्ष्मणो जयतीत्येवं वाक्यं विश्रावयंस्तदा (रा० ६।६०।६२)। उच्चैरश्रावयन्नित्यर्थः। अट् न कृतः। पथा विश्राव्येषाम् (ऋ० १०।६३।१४)। विश्रावि विश्रुतम्। विश्रावोऽस्यास्तीति।

—श्वि (श्वि गतिवृद्ध्योः)। ईयुषीणामुपमा शश्वतीनां विभातीनां प्रथमोषा व्यश्वैत् (ऋ० १।११३।१५)। व्यश्वैत् प्रवृद्धा स्वतेजसाऽऽसीत्।

—सञ्ज् (षञ्ज सङ्गे)। तस्माद्यत् पूयति तत् प्रवाते विषजन्ति (तै० सं० ६।४।७)। विषजन्ति प्रसार्य स्थापयन्ति।

—सि (षिञ् बन्धने)। प्रजां त्वष्टा वि ष्यतु नाभिमस्मै (ऋ० २।३।६)। विष्यतु विमुञ्चतु। वितरत्वित्यर्थः। वि ष्यस्व शिप्रे विसृजस्व धेने (नि० ६।१७।२)। विष्यस्व प्रमुञ्च। जिह्वोपजिह्विके धेने। अधोदष्ट्रे वा। अथ यद्विषितो भवति तद्विष्णुर्भवति (नि० १२।१८।२)। विषितो व्याप्तः।

—सिव् (षिवु तन्तुसन्ताने)। तस्मान्नवधा शिरो विष्यूतम् (तै० सं० ६।२।१।४)। विष्यूतं परस्परस्यूतम्।

—सू (षू प्रेरणे)। तद् ये च वा इत ऊर्ध्वा लोका ये चामुतोऽर्वाञ्चः, तेषामेष एतदुभयेषां विषुवति (जै० ब्रा० २।५)।

—सृ ( सृ गतौ )। एवं चिन्तयतस्तस्य शालिसिक्थविसारिणः। महतो पि च मीनस्य···बृ० क० को० १४७।११)॥ **विसारिण इतस्ततः संचरतः। स्थाने प्रयोगः। विसारी मत्स्यो भवति वैसारिण इत्यपि। विसार इत्यपि च।**

—सृज् (सृज विसर्गे)। राज्यं च सर्वं विससर्ज तस्मै (भा० वि० ७१। २८)। **विससर्ज ददौ।** देवा अमुञ्चन्नसृजन्व्येनसः (तै० ब्रा० २।५।६।३)। **एनसो व्यसृजन् पापाद् वियुक्तवन्तः।** ताभ्या विसृज्यते विश्वं जगदेतच्चराचरम् ( दुर्गा० १।४३ )। **विसृज्यते विविधं सृज्यते। विर्नानार्थे।** श्रूयते च—इयं विसृष्टिर्यत आबभूव (ऋ० १०।१२९।७)। नोपकिरन्त्युत्तरवेदिं विसृष्टमसद् (श० ब्रा० २।५।१।१८)। **विसृष्टं विस्तीर्णमपरिच्छिन्नम्।**

—सृप् (सृप्लृ गतौ)। विविधं सर्पति यतो विसर्पस्तेन स स्मृतः। परिसर्पोऽथवा नाम्ना सर्वतः परिसर्पणात् ( चरक० चि० अ० २१ )॥ **विसर्पो ऽनार्द्रा कण्डूः।**

—सो (षो अन्तकर्मणि)। पुनान इन्दो वि ष्या मनीषाम् (ऋ० ९।९५। ५)। **विष्या विष्य विकासय।** रायस्पोषं वि ष्यतां नाभिमस्मे (ऋ० २।४०। ४)। **तौ सोमापूषणौ विष्यतां विमुञ्चताम्।** इमं वि ष्यामि वरुणस्य पाशम् (तै० सं० १।१।१०)। **विष्यामि विमुञ्चामि।**

—स्तम्भ् ( स्तम्भु धारणे सौत्रः )। यदुपयुक्तं चिराद् विपच्यते विष्टभ्नाति वा स विपाकदोष इति ( सुश्रुत० १।४५।६ )। **विष्टभ्नाति गुडगुडाशब्दं करोति।** सर्पच्च प्रतिघाति द्रव्यं न विष्टभ्नाति ( आकाशः ) (न्या० भा० ४।२।२२)। **नास्य क्रियाहेतुं गुणं प्रतिबध्नाति।** दृढेन मुष्टिबन्धेन शूलं विष्टभ्य निर्मलम् (मात्स्य० १५३।३९)। **विष्टभ्य=अवलम्ब्य।**

—स्था ( ष्ठा गतिनिवृत्तौ )। स यो व्यस्थादभि दक्षदुर्वीम् ( ऋ० २। ४।७)। **व्यस्थात् व्याप्यास्थात्।** पङ्गुलेन समं भोगान् भुञ्जाना सा वितिष्ठते (बृ० क० को० ८५।३४)। **वितिष्ठते तिष्ठति। अनुपसृष्टस्य तिष्ठते योऽर्थः स एव सोपसर्गकस्य।** ता यदसंयुक्ताः स्युः प्रजया पशुभि र्यजमानस्य वितिष्ठेरन् ( तै० सं० २।५।७।५ )। **वितिष्ठेरन् विश्लिष्टाः स्युः।** न व्यतिष्ठत

कस्मिंश्चिद् देशे वानरपुङ्गवः ( रा० ४।२।२ )। न व्यतिष्ठत न व्यरमत्, नावालम्बत। पारिप्लवगतैश्चापि ( विमानादिभिः ) देवतास्तत्र विष्ठिताः (रा० १।४३।१९)। विष्ठिताः सुष्ठु स्थिताः। पारिप्लवो यानभेदः शिबिकादिरूपः।

—स्ना (ष्णा शौचे)। विषमित्युदकनाम। विष्णाते विपूर्वस्य स्नातेः शुद्ध्यर्थस्य (नि० १२।२६।१)।

—स्फुर् (स्फुर संचलने)। आर्त्नी इमे विष्फुरन्ती अमित्रान्। स्फुरति वधकर्मा। विष्फुरन्त्यौ निघ्नन्त्यौ (नि० ९।४०)। निगदव्याख्यातम्। विशब्दो धात्वर्थानुवादी।

—स्यन्द् (स्यन्दू प्रस्रवणे)। मारुतं विष्यन्दमानम् (दुग्धम्) (ऐ० ब्रा० ५।२६)। अर्थवैशद्याय भूयोऽस्य न्यासः। विष्यन्दमानम् ऊर्ध्वमुद्गतं, पात्राद् बहिर्विशेषेण स्यन्दनदशापन्नम्। यस्याग्निहोत्रमधिश्रितं स्कन्दति वा विष्यन्दते वा (ऐ० ब्रा० ७।५)। विष्यन्दो नाम जलक्षीरयोरग्निसंयोगे क्षीरमधः कुर्वन् जलमुपरि च कुर्वन् व्यापारः (षड्गुरुशिष्यः)।

—स्रंस् (स्रंसु अवस्रंसने)। प्रजापतिः प्रजाः ससृजानः। स व्यस्रंसत (जै० ब्रा० २।१२८)। व्यस्रंसत शिथिलाङ्गो भवत्। प्राणानां ग्रन्थिरसि, मा विस्रसः (शां० गृ० ३।८।५)। मा विस्रसः=विश्लथो मा भूः।

—स्रम्भ् (स्रम्भु विश्वासे)। स्वगृहे स्वर्गलोके वा सङ्ग्रामे वा विरोधतः। विस्रम्भो वो न मन्तव्यो नित्यं क्षुद्रा हि दानवाः (मात्स्य० पु० १७८।७७)। विस्रम्भो विश्वासः क्षेमिणो वयमिति।

—स्रु (स्रु गतौ)। पतिशोकातुरां शुष्कां नदीं विस्रावितामिव (रा० ५।१९।१७ )। विस्रावितां रोधोभङ्गादिना निर्गमितजलाम्, कृतपरीवाहाम्।

—हन् (हन हिंसागत्योः)। यदावधीर्वि पुरः शम्बरस्य (ऋ० १।१०३।८ )। व्यवधीः=उज्जासयामासिथ, उदवर्तयः, उदसादयः। वि वृक्षान् हन्त्युत हन्ति रक्षसः (ऋ० ५।८३।२)। विहन्ति विविधं हन्ति। अलाभे न विहन्येत (मुनिः) लाभे चैव न हर्षयेत् (भा० शां० २७८।१०)। न विहन्येत विमना न स्यात्। अम्लेन योगेन विहता मनुष्या माधुर्ययोगे प्रणयी भवन्ति (सुश्रुत० सूत्र० ४६।४६८)। विहता उद्वेजिताः।

**—हा** (ओहाङ् गतौ)। (अग्नाविष्णू युवाम्)। मा···वि जिहाथाम् (तै० सं० १।१।१२)। **मम मार्गप्रदानार्थं विगच्छतम्।** स वायुमागच्छति तस्मै स तत्र विजिहीते यथा रथचक्रस्य खम् (बृह० उ० ५।१०।१)। **विजिहीते स्वात्मानं विश्लिष्टावयवं करोति।**

**—हूर्च्छ्** (हुर्च्छा कौटिल्ये)। नाङ्गेन विहूर्च्छति (छां० उ० २।१६।२)। **कुटिलो भवति।**

**—हृ** (हृञ् हरणे)। देवरथस्यैव तदन्तरौ रश्मी विहरति (ऐ० ब्रा० २। ३७)। **विहरति विशेषेण सम्पादयति।** वक्षसश्चन्दनं बाह्वोस्तिलकं विजहार सा (ब्रह्मवै० पु० २।१६।१२५)। **विजहार जहार जग्राह।** पच्छः प्रथमं षड् वालखिल्यानां सूक्तानि विहरति (ऐ० ब्रा० ६।२४)। **विहरति पदव्यत्यासपूर्वं शंसति।** वहिष्ठेभिर्विहरन्यासि तन्तुम् (ऋ० ४।१३।४)। **विहरन्व्यूहन् विस्तारयन्।** षट् स्वरेषुविहृताः (लीला० २२६)। **षट् स्वरेषुभिर्विहृता विभक्ताः।** कः पञ्चनिघ्नो विहृतस्त्रिषष्ट्या (लीला० २६०)। **उक्तोऽर्थः।** विहृता वा इमे प्राणाः (ऐ० ब्रा० ६।२८)। **विहृताः परस्परं व्यतिषक्ताः।** अविहृतानेव चतुर्थं प्रगाथाञ्छंसति (ऐ० ब्रा० ६।२४)। **अविहृतान् अव्यत्यस्तान्, यथापाठं स्थितान्।** व्यायामाच्च विहाराच्च (चरक० चि० १५। २३५)। **विहारो ऽङ्गक्षेपणादिचेष्टा।** प्रायशः सुकुमाराणां मिथ्याहारविहारिणाम् (सुश्रुत० नि० १।३६)। **विहारः कायवाङ्मनोव्यापारः।** अथातो विहारयोगान् व्याख्यास्यामः (सत्या० श्रौ० २५।१।१)। **विह्रियन्ते ऽस्मिन्नग्नय इति विहार आयतनम्।**

**—ह्वे** (ह्वेञ् स्पर्धायां शब्दे च)। तां देवासुरा व्यह्वयन्त (तै० सं० १।७।१।३)। **व्यह्वयन्त विविधमाह्वयन्।**

## व्यति (वि+अति)

**—क्रम्** (क्रमु पादविक्षेपे)। एवं पूर्वैर्गतो मार्गः पितृपैतामहो ध्रुवः। तमापन्नः कथं शोचेद् यस्य नास्ति व्यतिक्रमः (रा० २।१०५।२९)॥ **व्यतिक्रमः—लङ्घनं परिहारः।** गुणान्विताय दातव्यं नास्ति मूर्खे व्यतिक्रमः (गो० स्मृ० २।६८)। **व्यतिक्रमोऽतिक्रमदोषः।**

**—रिच्** (रिचिर् विरेचने)। अत्र द्वितीयार्धव्यतिरेकेण द्वितीयपादस्यैवार्थं इति पुनरुक्तता (सा० द० ७।११-१२ इत्यत्रोदाहरणम्)। **व्यतिरेको**

वैपरीत्यम् ।

—सञ्ज् ( षञ्ज सङ्गे )। नदं व ओदतीनामित्येतयैतानि व्यतिषजति (ऐ० आ० ५।१।६) । व्यतिषजति मिश्रयति । सोमग्रहांश्च सुराग्रहांश्च व्यतिषजति ( तै० ब्रा० १।३।३ )। व्यतिषजति सोमग्रहैः सुराग्रहान् गृह्णाति। पूर्वोऽध्वर्युर्गृह्णाति। जघन्यः प्रतिप्रस्थाता ( आप० श्रौ० १८।२।७-८)। अत्र सायणः—अध्वर्युणा प्रथमं सोमग्रहे गृहीते, प्रतिप्रस्थाता प्रथमं सुराग्रहं गृह्णीयात्। ततो द्वितीयो द्वितीयम्। सोऽयं व्यतिषङ्गः। यदि कामयेत प्रजा मुह्येयुरिति पशून् व्यतिषजेत् (तै० सं० ६।६।५) । विपर्यस्तस्थानान् कुर्यात्, क्रमसाङ्कर्येण स्थापयेत्। प्राणापानौ व्यतिषक्तौ प्रजा अनुसंचरतः (जै० ब्रा० १। १०२)। व्यतिषक्तौ परस्परसम्बद्धौ। नाऽवश्यं बध्नातिर्व्यतिषङ्ग एव वर्तते (पा० २।१।१ सूत्रे भाष्ये) । व्यतिषङ्गो रज्ज्वादिनिमित्तः संश्लेषः।

### व्यप (वि+अप)

—ऊह् (ऊह वितर्के)। एवं मनोधारणया क्रमेण व्यपोह्य किञ्चित्समुपोह्य किंचित् (सौन्दर० १६।१) । व्यपोह्य दूरीकृत्य, व्यपवर्त्य।

—तन् (तनु विस्तारे)। स यथा स्पन्दनां रज्जुभि र्व्यपतत्य दुह्युः (जै० ब्रा० २।३)। व्यपतत्य परितो बद्ध्वा।

—त्रप् ( त्रपूष् लज्जायाम् )। न व्यपत्रपसे नीच कर्मणाऽनेन रावण (रा० ३।५३।३) । व्यपत्रपसे अपत्रपसे जिह्रेषि लज्जसे व्रीड्यसि।

—दिश् ( दिश अतिसर्जने )। महाकुलप्रसूतस्य वसिष्ठव्यपदेशिनः (रा० १।१६।२)। अर्थान्तिरन्यासाय पुनर्न्यासः। व्यपदेशः कीर्तिरुपदेशो वेति गोविन्दराजः। तीर्थो पि तमनुकरोति यदाह वसिष्ठोपदेशवत इति। अत्रार्थे व्यपदेशशब्दस्य रूढिर्नास्तीत्यवश्यवाच्यम्।

—वृत् (वृतु वर्तने)। दीप्रदीपा निशा जज्ञे व्यपवृत्तदिवाकरा ( भामह का० ५।५१) । व्यपवृत्तदिवाकरा=विगतार्का, व्यर्का, अस्तमितसूर्या।

### व्यपाङ् (वि+अप+आङ्)

—श्रि ( श्रिञ् सेवायाम् )। आक्षिप्तः शत्रुभिः संख्ये सुहृद्भिश्च व्यपाश्रितः। अभवद् यो न विमुखः··· ( सौन्दर० २।५ )।। व्यपाश्रितोऽदत्तसंश्रय

इत्यर्थो भाति । सोऽयमन्यत्र दुर्लभः ।

## व्यभि (वि+अभि)

—चर् ( चर गतिभक्षणयोः ) । देवाश्च वा असुराश्च व्यभ्यचरन्त (काठ० १०।७,२५।९) । परस्परं विरुद्धमाचरन्नित्यर्थः । तस्मात् स्वधर्मं भूतानां राजा न व्यभिचारयेत् (कौ० अ० १।१।३) । नातिक्रमयेत्, त्याजयेत् । न सा व्यभिचरेन्मयि (कथा० ३७।१७६) । मनसा वाचा कर्मणा पुमन्तरगमनं व्यभिचारः, अतिलङ्घनम् । अन्यत्र पत्यादि र्व्यभिचारस्य कर्म श्रूयते न त्वधिकरणम् ।

## व्यव (वि+अव)

—इ (इण् गतौ) । न प्रवर्ग्यमादित्यं च व्यवेयात् (सत्या० श्रौ० २४। १।१३) । प्रवर्ग्यमादित्यं च पात्रमन्तरेण न गच्छेदित्याह । तयोरन्तर्भूतो मा भूदिति यावत् । सच्छन्दसो याज्यापुरोनुवाक्ये निगदो व्यवैति (शां० ब्रा० ३। ६) । व्यवैति भिद्यते । रूक्षमाशुकर चैव व्यवायि च विकाशि च (मद्यम्) । (सुश्रुत० उत्तर० ४७।२) । व्यवायि सर्वं देहं व्याप्य पश्चात् पाकं याति । तेनासां (प्रजानाम्) मध्यं व्यवैत् (पञ्च० ब्रा० १७।१०।२) । व्यवैत् विशेषेणागच्छत् ।

—ईक्ष् ( ईक्ष दर्शने ) । व्यवेक्षमाणौ सह सीतया गतौ (रा० २।८६। २५) । सर्वतो दत्तावधानौ ।

—ईर् (ईर गतौ) । तदन्तरिक्षं व्यवैर्यत (तै० सं० ७।१।५) । व्यवैर्यत विशीर्णमधोऽपतत् ।

—कल् (कल गतौ संख्याने च) । यदि व्यक्ते युक्तिव्यवकलनमार्गेऽसि कुशला (लीला० १३) । व्यवकलनं शोधनं न्यूनीकरणम् ।

—ग्रह् (ग्रह उपादाने) । अथ यद् व्यवग्राहं देवता आवाहयति (शां० ब्रा० ३०।३) । व्यवग्राहम् एकैकशः, पृथक्त्वशः । णमुलन्तमेतत् ।

—छिद् ( छिदिर् द्वैधीकरणे ) । काव्यशरीरम्—इष्टार्थ-व्यवच्छिन्ना पदावली (काव्यादर्श १।१०) । व्यवच्छिन्ना युक्ता ।

—सद् (षद्लृ विशरणगत्यवसादनेषु)। कपेः परमभीतस्य चित्तं व्यवससाद ह (रा० ४।२।३)। व्यवससाद ससाद। न्यग्गतं न्यक्तम्, नीचैर्गतम्। य एव सदेरर्थः स एव व्यवसदेः।

—सृप् (सृप्लृ गतौ)। स एतामनुष्टुभं व्यौहत तां मध्ये व्यवासर्पत् (पञ्च० ब्रा० १५।११।६)। व्यवासर्पत् प्राविशत्।

—सो (षो अन्तकर्मणि)। तात कर्मणा कृतनिःशेषविप्रियाः सम्प्रति वाचा व्यवस्यन्ति (वेणी० ५)। व्यवस्यन्ति चरितुं चिन्तयन्ति, तत्रार्थे कृतनिश्चयाः सन्ति। सिद्धं तु व्यवसितान्त्यत्वात् (पा० १।३।३ सूत्रे वा०)। व्यवसिताः परिच्छिन्ना धातुत्वप्रत्ययत्वादिना धर्मेण। चिराद् व्रणो रोहति यस्य चापि तं स्नायुविद्धं पुरुषं व्यवस्येत् (सुश्रुत० सू० २५।२०)। व्यवस्येत् जानीयात्, निश्चिनुयात्। विशाल भवति व्यवसाययत्येवैनम् (तै० सं० )। उद्योगिन करोतीत्यर्थः। व्यवसितपाठः कर्तव्यः (पा० १।३।९ इत्यत्र भाष्यम्)। व्यवसितानां विच्छिन्नानां पाठः। अन्यतोपि बहुशो व्यवसितचारित्रा (का० सू० १।५।६)। खण्डितशीलेत्यर्थः।

—हृ (हृञ् हरणे)। महापणेभ्यो व्यवहारिणश्च (सौन्दर० ५।१)। व्यवहारिणो वणिजः।

## व्याङ् (वि+आङ्)

—कुप् (कुप क्रोधे)। महाजना द्रोणाचार्यादयः ब्रह्मकर्मादरे सुरकार्यं न स्याद् अनादरे शिष्टाचारव्याकोप इति भावः (भा० शां० २६०।१७ इत्यत्र नीलकण्ठः)। व्याकोपो विरोधः।

—कृ (डुकृञ् करणे)। न चेत् प्रश्नान्पृच्छतो व्याकरोषि (भा० वन० ३।१३।१९)। व्याकरोषि व्याचक्षे व्याख्यासि वक्षि प्रतिब्रवीषि। दम्पत्यो र्व्याकृतैवं हतविधिरुभयोर्लोकयोः शोकयोगम् (विश्व० च० काशिदर्णन ७।९२)। व्यर्थौ व्याङावुपसर्गौ। व्याकृतेति कर्तरि लुङ्यात्मनेपदे रूपम्। व्याकरणं च गर्भस्य (सुश्रुत० १।३।३)। व्याकरणं विवरणम्। वाग्वै पराच्यव्याकृताऽवदत् (तै० सं० ६।४।७)। अव्याकृता अविभक्ता। अवदत् अभिव्यक्तिमगमत्, ध्वनिमात्रमेवोदचरत् इति भट्टभास्करः।

—चक्ष् (चक्षिङ् व्यक्तायां वाचि)। दक्षिणतो ब्रह्माणमुपवेश्य चतुर्होतॄन्

व्याचक्षीत (ऐ० ब्रा० ५।२३) । इहोच्चैरुच्चारणं व्याख्यानम् । चतुर्होतृनामकान् मन्त्रानुच्चारयेदित्यर्थः ।

—दिश् ( दिश अतिसर्जने ) । प्रजापति र्देवेभ्यो यज्ञान् व्यादिशत् । स आत्मन्यश्वमेधमधत्त (तै० ब्रा० ३।८।१४।१) । वाक्यशेषपरिपूर्त्यै पुनरुपादानम् । अर्थस्तु प्राङ्निर्दिष्टः ।

—धा (डुधाञ् धारणपोषणयोः) । न छन्दो व्याधीयते (पञ्च० ब्रा० १६। ११।१३) । व्याधीयते भिद्यते ।

—पद् ( पद गतौ ) । व्यापादयन्ति ते विघ्नान् (कथा० १२०।२०) । व्यापादयन्ति विशेषेणापादयन्ति प्रापयन्ति, उत्पादयन्ति । व्यापन्नानि हवींषि केशनखकीटपतङ्गै रन्यैर्वा बीभत्सैः (आश्व० श्रौ० ३।१०।२०) । व्यापन्नानि दूषितानि विकृतानि । रञ्जितास्तेजसा त्वापः शरीरस्थेन देहिनाम् । अव्यापन्नाः प्रसन्नेन रक्तमित्यभिधीयते (सुश्रुत० सू० १४।६) ॥ अव्यापन्ना अविकृताः । तत्राव्यापन्नेष्वृतुष्वव्यापन्ना ओषधयो भवन्ति (सुश्रुत० १।६।१७) । व्यापादो वैपरीत्यं शीतोष्णादीनाम् । विषमं वा ज्वरं कुर्याद् बलव्यापादमेव वा (सुश्रुत० उत्तर० ३९।५६) । बलव्यापादो बलापचयः ।

—भाष् (भाष व्यक्तायां वाचि) । तत्त्वेन मुखवर्णेन दृष्ट्या व्याभाषितेन च (रा० ६।१२५।१५) । आभिमुख्येन विविधं भाषणं व्याभाषितम् । व्याभाषितैर्वा रूपैर्वा विज्ञेया दुष्टताऽनयोः (रा० ४।२।२७) । उक्तोऽर्थः ।

—यम् (यम उपरमे) । ते (देवाश्चासुराश्च) आदित्ये व्यायच्छन्त (तै० ब्रा० १।२।६।६) । व्यायच्छन्ताऽकलहायन्त । आदित्योऽयमस्माकमेव स्यादिति । अथ या सहस्रतम्यासीत्तस्यामिन्द्रश्च विष्णुश्च व्यायच्छेताम् ( तै० सं० ७।१।५) । व्यायच्छेतां विप्रतिपन्नावभवतामिति भट्टभास्करः । सोऽयं व्यायामकालो नोत्सवकालः ( मुद्रा० ३ ) । व्यायामो युद्धम् ।

—लभ् (डुलभष् प्राप्तौ) । यत्रैतत् पशवो मनुष्या वयांसीति वाचं व्यालभन्ते (शां० ब्रा० ११।८) । व्यालभन्ते आददते ।

—वर्ण् (वर्ण वर्णक्रियाविस्तारगुणवचनेषु) । परवञ्चनात्मकान्यपि छलजातिनिग्रहस्थानानि तत्त्वरूपतयोपदिशतोऽक्षपादर्षेर्वैराग्यव्यावर्णनं तमसः प्रकाशात्मकत्वप्रख्यापनमिव (स्याद्वाद० १०, हेमः) । विस्पष्टोऽर्थः ।

—वृ (वृञ् वरणे)। गावो न व्रजं व्युषा आवर्तमः (ऋ० १।६२।४)। व्यावः=विवृतमपश्लिष्टमकरोत्। ततो व्यावृत्य वदनं महाज्वलगुहानिभम् (मात्स्य पु० १५२।१६)। व्यावृत्य, विवृत्य, व्यादाय।

— वृत् (वृतु वर्तने)। ततो वा इदं व्यावर्तत (पञ्च० ब्रा० २४।११।२)। व्यावर्तत व्यरमत्। वैयावृत्यं करिष्यामि दिव्यौषधिविधानतः (बृ० क० को० १०२।१२)। वैयावृत्यं चिकित्साम्, रोगापनयनम्। ते (अग्नयः) यदव्यावृत्ता आधीयेरन् (तै० ब्रा० १।१।८।१)। अव्यावृत्ताः समुदिताः। सर्वं ह वै तत्र व्यावृत्तं भवति (तै० ब्रा० ३।६।१६।२)। व्यावृत्तमितरविलक्षणम्। न वा इदं दिवा न नक्तमासीदव्यावृत्तं ते देवा मित्रावरुणावब्रुवन् इदं नो विवासयतम् (तै० सं० ६।४।८)। अव्यावृत्तमविभक्तम्। विवासयतं विभज्य स्थापयतम्।

—श्रु (श्रु श्रवणे)। मा वि वेनो वि शृणुष्वा जनेषु (तै० ब्रा० २।४।७।८)। विशेषेण शृण्वित्यर्थः।

—हृ (हृञ् हरणे)। अमानुषाणि सत्त्वानि व्याहृतानि मुहुर्मुहुः (रा० ७।४१।१८)। व्याहृतानि व्याहृतवन्ति। अर्शआदित्वादच्। व्याहारो व्यक्तवाक्, तद्युक्तानि।

—ह्वे (ह्वेञ् स्पर्धायां शब्दे च)। ताभ्यो न व्याह्वयीत (ऐ० ब्रा० ६।२१)। नानाऽऽह्वानं न कुर्यादित्यर्थः।

## व्युद् (वि+उद्)

–छिद् (छिदिर् द्वैधीकरणे)। अव्युच्छिन्न-पृथु प्रवृत्ति भवतो दानम् ममार्प्यर्थिषु (विक्रम० ४।        )। अव्युच्छिन्ना ऽविरता। स्वरूपविक्रिया-वत्त्वाद् व्युच्छेदस्तस्य विद्यते (तत्त्वसंग्रहे २७३)। व्युच्छेद उत्साव उच्छित्तिः, विनष्टिः।

—तप् (तप सन्तापे)। व्युत्तेपे तपस्तीव्रम् (स्कन्द० का० ४।१७।६४)। व्युत्तेपे ऽत्यन्तं तेपे।

—पद् (पद गतौ)। आर्य, किं महाराजस्य सन्देशोऽयमार्येणाव्युत्पन्न इव गृहीतः। भीमसेनः·· का पुनरत्र व्युत्पत्तिः (वेणी १)। अव्युत्पन्नोऽनवगतः। धम्मिल्लस्य न कस्य प्रेक्ष्य निकामं कुरङ्गशावाक्ष्याः। रज्यत्यपूर्वबन्धव्युत्पत्ते-

मानसं शोभाम् (का० प्र० ७।१८३) ।। विशिष्टा उत्पत्ति र्व्युत्पत्तिः कल्पना रचना ।

—सद् (षद्लृ विशरणगत्यवसादनेषु) । ते दिशो व्युदसीदन् (जै० ब्रा० १।१५३) । व्युदसीदन् व्युत्क्रान्तवन्तः ।

—सिच् (षिच क्षरणे) । व्युत्सेचोऽनूद्यतामेष नैवं कर्मणि सौमिके (जै० न्या० ७।३।११) । दर्शपूर्णमासयोर्दिक्षु सर्वास्वापो विविधमुत्सिच्यन्ते । सोऽयं व्युत्सेकः । अनेन मन्त्रेण यद्दिशां व्युत्सेचनं सोऽवभृथ इति (तै० सं० १।७।७ इत्यत्र) भट्टभास्करः । उत्क्षिप्य वारिणः सेचनं व्युत्सेचनम् ।

—स्था (ष्ठा गतिनिवृत्तौ) । अध्वर्युप्रैषकाले तु व्युत्थिता ऋषयस्तथा (मात्स्य० १४३।११) । व्युत्थिताः क्षुभिताः क्षोभं गताः । प्रभुर्व्युत्थितो ब्रह्मन् गुरुर्वा यदि वेतरः । त्वया नियम्याः सर्वे··· (हरि० १।५५।२७) ।। व्युत्थितो लङ्घितमर्यादः । चकर्ष यमुनां रामो व्युत्थितां वनितामिव (हरि० २।४६। ३४) ।। व्युत्थिता दुर्वृत्ता ।

### व्युदाङ् (वि+उद्+आङ्)

—हृ (हृञ् हरणे । अपक्रान्ते तु काकुत्स्थे दूरं यात्वा व्युदाहर (रा० ३।४०।२२) । व्युदाहर उच्चै र्व्याहर ।

### विनि (वि+नि)

—कृ (डुकृञ् करणे) । अथ यो विनिकुर्वीत ज्येष्ठो भ्राता यवीयसः (भा० अनु० १०५।७) । विनिकुर्वीत शाठ्यमाचरेत् ।

—धा (डुधाञ् धारणपोषणयोः) । तस्य वैते वयं घोरास्तनू र्विनिधास्यामः (शां० ब्रा० १।१) । विनिधास्यामः पृथङ् निधास्यामः ।

—युज् (युजिर् योगे) । नानाप्रयोजनो नियोगो विनियोगः (पा० ८।१। ६१ सूत्रे वृत्तौ) । त्वमह ग्रामं गच्छ । त्वमहारण्यं गच्छेत्युदाहरणम् । पुस्तक उदाहरणं नादायीति तदिह दीयते ।

### विनिस् (वि+निस्)

—कृन्त् (कृती छेदने) । तेषां गुदेभ्यश्चान्त्राणि विनिष्कृन्तन्ति (वामन०

१२।२५) । निष्कृष्य कृन्तन्तीत्यर्थः ।

—पत् ( पत्लृ गतौ ) । परिभ्रमति चित्राणि मण्डलानि विनिष्पतन् (रा० ३।४२।२७) । विनिष्पतन् संचरन् ।

—युज् (युजिर् योगे) । मर्यंकेन विनिर्युक्तः परिमुञ्चस्व राघव (रा० ३।६९।३९) । विनिर्युक्तः=वियुक्तः ।

## विपरि (वि+परि)

—इ ( इण् गतौ ) । ममैव तु न दुःखानामस्ति मन्ये विपर्ययः (रा० ५।३६।१४) । विपर्ययोऽन्तः ।

—ऊह् (ऊह वितर्के) । एतेमौ वि पर्यूहामेत्यन्नाद्येन देवा अग्निमुपामन्त्रयन्त (तै० सं० २।६।६।४-५) । विपर्यूहाम स्थानाद् विभ्रष्टौ स्थानेन विश्लिष्टौ कुर्मः ।

—हृ (हृञ् हरणे) । युक्ताश्वो वा आङ्गिरसः शिशू जातौ विपर्यहरत् (पञ्च० ब्रा० ११।८।८) । विपर्यहरद् बाधितवान् इति सायणः । पर्यत्यजत् परादादिति तु शब्दमर्यादया लभ्योऽर्थः । नात्मानं विपरिहरेदधीयानः (शां० गृ० ४।८।१९) । न स्थानान्तरं संचरेदित्यर्थो भाति ।

## विपर्याङ् (वि+परि+आङ्)

—वृत् (वृतु वर्तने) । ईदृङ् वै राष्ट्रं वि पर्यावर्तयति (तै० सं० २।५।१।१) । अपहृत्यान्यत्र सङ्क्रामयेत् ।

## विप्र (वि+प्र)

—इ (इण् गतौ) सा त्वं विप्रेहि तिष्ठ वा (भा० आदि० १६७।३८) । विप्रेहि दूरं गच्छ ।

—कृ (डुकृञ् करणे) । शैथिल्यं याति स रथः स्नेहो विप्रकृतो यथा (मात्स्य० १३६।५६) । येन कौमारके यूयं सर्वे विप्रकृताः सदा (भा० उ० ७९।१२) । विप्रकृता उपपीडिताः, कदर्थिताः । विप्रकारं सपत्नीनामेवं

जीर्णापि राघव (रा० २।२०।४६)। **विप्रकारं तिरस्कारम् अवज्ञाम्, अवमाननाम्।** विप्रकारं च रामस्य सम्प्रयाणं वनस्य च (रा० २।१२।७२)। **विप्रकारमपकारमिति तीर्थः।**

**—कृष् (कृष विलेखने)।** खादनीयानि (मधूनि)) भूतानां यैर्बालो विप्रकृष्यते (भा० स्त्री० ५।१८)। **विप्रकृष्यते दूरं कृष्यते ह्रियते।**

**—द्रु (द्रु गतौ)। यथा वै व्योकसौ (पक्षिणौ) विप्रद्रवत** (पञ्च० ब्रा० १४।३।८)। **विप्रद्रवतः=विश्लिष्टं पततः।** तांश्च विप्रद्रुतान्सर्वान् (रा० २।९६।५)। **विप्रद्रुतान् दिक्षु विदिक्षु च द्रुतान् पलायितान्।**

**—युज् (युजिर् योगे)।** वागेषा यत्पृष्ठानि। तामेतां विप्रयुञ्जते तां विहरन्ति (जै० ब्रा० २।१)। **विप्रयुञ्जते पृथक् कुर्वन्ति।** ततो रथैः विप्रयुक्तैर्वारणैश्च प्रचोदितैः (मात्स्य० १७५।४)। **विप्रयुक्तैः विशेषेण प्रयुक्तैः प्रेरितैः प्राजितैः।** दृश्यते खल्वपि विप्रयोगः। तद्यथा अक्षीणि मे दर्शनीयानि पादा मे सुकुमारा इति (पा० १।४।२१ सूत्रे भाष्यम्)। **विरुद्धः प्रयोगो विप्रयोगः।**

**—लप् (लप व्यक्तायां वाचि)।** अप्यस्वरं सुस्वरविप्रलापा (रा० ३।६३।७)। **विप्रलापो विलापः, अन्यत्र विरोधोक्तिमाह।**

**—लभ् (डुलभष् प्राप्तौ)।** पौरुषेयवचनानि तु पुरुषबुद्धिप्रभवत्वाद् भ्रान्त्या विप्रलिप्सया वा प्रयुक्तानि (शा० दी० १।२)। **विप्रलिप्साऽतिसन्धित्सा।** लुब्धेभ्यो विप्रलब्धेभ्यस्तेभ्यो नः सुमहद् भयम् (रा० ४।१९।१६)। **विप्रलब्धेभ्यः (पूर्वमस्माभिः) वञ्चितेभ्यः।**

**—वस् (वस निवासे)।** तस्य सर्वस्वमादाय तं राजा विप्रवासयेत् (विष्णु धर्म० २।७२।१४६)। **विवासयेत्, प्रवासयेदित्यर्थः। एकतरेणाप्युपसर्गेण शक्यो विवक्षितोऽर्थो वक्तुम्। यथास्थिते निर्वासयेदित्येवार्थः।**

**—व्यध् (व्यध ताडने)।** कवची सशिरस्त्राणो विप्रविद्धशरासनः (रा० ६।९०।७३)। **विप्रविद्धशरासनो भग्नधन्वा।**

**—सृ (सृ गतौ)**···बिलेभ्यश्चिरोषिता विप्रसरन्ति सर्पाः (रा० ४।३०।४५)। **विप्रसरन्ति विनिष्क्रामन्ति।**

—स्था (ष्ठा गतिनिवृत्तौ)। विप्रस्थाने प्रदीप्ते वा प्रविष्टे निर्जनेपि वा (कौ० अ० १३।२।४८)। **विप्रस्थाने उत्पथेन प्रस्थाने। विवैंपरीत्ये।**

—हन् ( हन हिंसागत्योः )। अविप्रहतमैक्ष्वाकौ पन्थानं प्रतिपेदतुः (रा० ३।६६।२)। **अविप्रहतम् अक्षुण्णम्। विशब्देन नार्थः।** नृत्येन चापराः क्लान्ताः पानविप्रहतास्तथा (रा० ५।११।५)। **पानेन विप्रहता हतेन्द्रिया अभिभूता निर्जिताः।**

## विप्रति (वि+प्रति)

—पद् ( पद गतौ )। कर्णत्वगक्षिजिह्वाघ्राणेन्द्रियाणां शब्दस्पर्शरूपरसगन्धेष्वविप्रतिपत्तिरिन्द्रियजयः ( कौ० अ० १।६।२ )। **अविप्रतिपत्तिरनाकुलत्वम्, अतिप्रसङ्गविरहो वा।** अहं तु मन्ये निर्विशेषेण रूपेण शब्दादीनां प्रतिपत्तिर्ग्रहणमविप्रतिपत्तिरिहोक्ता। सैवेन्द्रियजयः। धर्मं प्रति हि विप्रतिपन्ना बहुविदः। केचिदन्यं धर्ममाहुः केचिदन्यम् (मी० शा० भा० १।१।१।२)। **विप्रतिपन्ना विरुद्धमतयो नानादर्शनाः।** त्वयि विप्रतिपन्नस्य त्वमेव शरणं मम। भूमौ स्खलितपादानां भूमिरेवावलम्बनम् ( स्कन्द० १।७।१०१)। **विप्रतिपन्नस्य विपरीतबुद्धेः, अश्रद्दधानस्य, अनास्थावतः।** पथि विप्रतिपन्नः स्वयमेवागमिष्यति (आश्चर्य० ३)। **विप्रतिपन्नः प्रतिकूलमाचरितवान्।** शब्देऽविप्रतिपत्तिः (का० श्रौ० १।४।६)। **अविप्रतिपत्तिर् अविपरिणामः। ऊहो न कार्य इत्यर्थः।**

—सिध् ( षिध गत्याम् )। **विप्रतिपूर्वात् सिधेः कर्मव्यतिहारे घञ्। अन्योन्यप्रतिषेधो विप्रतिषेधः** ( सरस्वती० १।२।११६ )। निगदव्याख्यातमिदं श्रीभोजस्य वचनम्। तत्प्रमाणे वा न सर्वप्रमाणविप्रतिषेधः ( न्या० सू० २।१।१४)। **विशेषेण प्रतिषेधो विप्रतिषेधः। वीत्ययमुपसर्गः सम्प्रतिपत्त्यर्थे न व्याघाते इति न्यायभाष्यम्।**

## विवि (वि+वि)

—ईक्ष् (ईक्ष दर्शने)। विवीक्षमाणा हरितं ददर्श तन्महद् वनं नैव तु रामलक्ष्मणौ (रा० ३।४६।३७)। **तिलककारस्तु निरीक्षमाणेति पठति। विशब्दस्य द्विरुक्तिनर्थिवतीति** जघन्यः स पाठः।

## विसम् (वि+सम्)

—युज् (युजिर् योगे)। लज्जानता विसंयोगदुःखस्मरणविह्वला (भट्टि० २०।२०)। विसंयोगो वियोगो विप्रयोगः।

—वद् (वद व्यक्तायां वाचि)। उपजापं वा विसंवादयन्ति (कौ० अ० ७।५।१५)। बलवतश्चानभिजातस्योपजापं विसंवादयन्ति (कौ० अ० ८।२।२४)। विसंवादयन्ति विफलयन्ति। सत्यवागविसंवादकः (कौ० अ० १।१८।६)। यः प्रतिज्ञातं न मिथ्या करोति सोऽविसंवादकः।

—स्था (ष्ठा गतिनिवृत्तौ)। नेष्टारं विसंस्थितसंचरेणानुप्रपद्य (आश्व० श्रौ० ५।१९।८)।

## आङ्

—इ (इण् गतौ)। अथान्नस्याये द्रष्टा भवति (छां० उ० ७।९।१)। आयो लाभः।

—कल् (कल गतौ संख्याने च)। प्राचेतसाद्याः कवयोऽनवद्या यदेकदेशाकलनेऽपि नेशाः (विश्व० च० ५।४६)। आकलने कात्स्न्येंन सङ्ख्याने उपवर्णने।

—काङ्क्ष् (काक्षि काङ्क्षायाम्)। धर्मविवाहात्कुमारी परिग्रहीतारमनाख्याय प्रोषितमश्रूयमाणं सप्त तीर्थान्याकाङ्क्षेत् (कौ० अ० ३।४।३१)। आकाङ्क्षेत् प्रतीक्षेत। तीर्थमार्तवकालः। तूष्णीं वै श्रेयस आकाङ्क्षन्ते (ऐ० ब्रा० ७।१२)। श्रेष्ठान्राजगुर्वादीन् आगत्य स्वाभीष्टं प्रार्थयन्ते।

—काश् (काशृ दीप्तौ)। आकाशवतो वै स लोकानभि सिध्यति (छां० उ० ७।१२।२)। आकाशवतो ऽवकाशवतो विशङ्कटान्।

—कुच् (कुच सम्पर्चन कौटिल्य प्रतिष्टम्भविलेखनेषु)। अस्तेयमिन्द्रियाकोचः (स्कन्द पु० का० ४।४०।८६)। आकोच आकुञ्चनं परकीयार्थादनतिसृष्टात्प्रतिसंहरणमिन्द्रियाणाम्।

—कृ (डुकृञ् करणे)। पुनर्नो रयिमा कृधि (वा० सं० १२।८)। आकृधि आकुरु। इत आहर। विद्मा ह्यस्य भोजनमिनस्य यदा पशुं न

गोपाः करामहे ( ऋ० १०।२३।६ )। भोजनं धनमाकरामहे स्वाभिमुखं कुर्म इत्यर्थः। तन्नो महान्करति शुष्म्या चित् ( ऋ० ४।२२।१ )। आकरति स्वीकरोतु।

—कृष् (कृष विलेखने)। दण्डमस्याकर्षतेति गर्हायाम् (नि० २।११।२)। वसन्तसेनाभवनद्वारस्य सश्रीकता यत्सत्यं मध्यस्थस्यापि जनस्य दृष्टिमाकारयति (मृच्छ० ४)। आकारयति आकर्षति आवर्जयति। शिलामाकुर्वतीं तीर्त्वा ( रा० २।७१।३ ) शिलामा समन्तात् कुर्वतीं शिलाकर्षणस्वभावाम् (शिलावहामितिनाम्नीं नदीम्)।

—कॄ (कॄ विक्षेपे)। कदा नौ संगमो भावीत्याकीर्णे वक्तुमक्षमा (काव्यादर्शे २।२६१)। आकीर्णे जनाकुले स्थाने, जनसंमर्दे।

—कै (कै गै शब्दे)। त्वामवस्युराचके ( तै० सं० २।१।११।१८ )। आचके आभिमुख्येन शब्दयामि। लिट्युत्तमैकवचने रूपम्।

—क्रन्द् ( क्रदि आह्वाने रोदने च )। यदा मन्येत नृपतिराक्रन्देन बलीयसा। पार्ष्णिग्राहाभिभूतोऽरिस्तदा यात्रां प्रयोजयेत् (मात्स्य पु० २४०।२)॥ पार्ष्णिग्राहं च सम्प्रेक्ष्य तथाक्रन्दं च मण्डले ( मनु० ७।२०७ )। इहारिं प्रति यातस्य विजिगीषोः पार्ष्णिग्राहात् त्राताऽऽक्रन्द उक्तः। पुराणवचने तु मनाग्भेदेन। अमरश्च पठति—सारावे रुदिते त्रातर्याक्रन्दो दारुणे रणे इति। यद्यप्यमर आक्रन्दं निर्विशेषेण त्रातारमाह तथापि मनुवचनसंवादायार्थसङ्कोचो बोद्धव्यः। पश्चात्पार्ष्णिग्राह आक्रन्दः पार्ष्णिग्राहासार आक्रन्दासारः (कौ० अ० ६।२।१८)।

—क्रम् (क्रमु पादविक्षेपे)। साष्टाङ्गपातमवनौ प्रणिपत्य वक्तुमाचक्रमे किमपि (पारिजात० ४।६)। आङ्स्थाने। प्रः प्रयोज्य उपो वा।

—क्रीड् (क्रीडृ विहारे)। आक्रीडतामरुणपादसरोरुहाभ्यामार्द्रे मदीयहृदये भुवनार्द्रमोजः (कृष्णामृते श्लो० १५)। आक्रीडतां समन्तात् स्वैरं क्रीडतु विहरतु।

—क्रुश् (क्रुश आह्वाने रोदने च)। तं वत्सं मेधातिथिराक्रोशदब्राह्मणोसि शूद्रापुत्र इति (पञ्च० ब्रा० १४।६।५)। आक्रोशदशपत्, परुषं व्याहरत्, साधिक्षेपमवदत्।

—क्षिप् ( क्षिप प्रेरणे )। पार्श्वं केषां चिदाक्षिपत् (रा० ६।६८।४)। आक्षिपत् आच्छिनत्। कान्तस्याक्षिप्यते यस्मात् प्रस्थानम्··· (काव्यादर्शे २। १४४)। आक्षिप्यते प्रतिषिध्यते। वादायाचिक्षेप स पण्डितान् (कथा० ६६। ६४)। आचिक्षेप आजुहुवे। आदावेव तदाङ्के स्यादामुखाक्षेपसंश्रयः ( सा० द० ६।६३)। आक्षेप उपक्षेपः संकेतः। चित्रैर्वाक्यैः स्वकार्योत्थैः प्रस्तुताक्षेपिभिर्मिथः (सा० द० ६।३२)। प्रस्तुताक्षेपिभिः प्रकृतं दूरात् सङ्केतयद्भिः।

—गम् (गम्लृ गतौ)। तस्योपकरणं प्रमाणं प्रहरणं प्रधारणमवधारणं च खरपट्टादागमयेत् ( कौ० अ० ४।८।२४ )। आगमयेत् उपलभेत, प्रतीयात्। प्रज्ञामेवागमयति यः प्राज्ञेभ्यः स पण्डितः (भा० उ० ३५।६६)। आगमयति आनयति। न तस्य पुनरागतिः (स्कन्द पु० का० ४।२१।११०)। पुनरागतिः पुनर्भवः प्रेत्यभावः। अथ यस्यागमादर्थपृथक्त्वमह विज्ञायते ( नि० १।४ )। आगमोऽध्याहार इति दुर्गः।

—गुर् ( गुरी उद्यमने )। सर्वाभ्यो वा एष देवताभ्यः सर्वेभ्यः पृष्ठेभ्य आत्मानमागुरते यः सत्त्रायागुरते (तै० ब्रा० १।४।७।७)। आगुरते संकल्पयति। पुस्तके न्यस्तपूर्वमपीदं वचोऽनूद्यतेऽर्थनिर्देशाय। यद्वो देवास आगुरे यज्ञियासो हवामहे ( तै० सं० १।२।१ )। आगुरे कर्मोद्योगे। छायातरोः स्वादुफलप्रदस्य च्छेदार्थमागूर्णपरश्वधानाम्। धात्री न लज्जां यदुपैति भूमि र्व्यक्तं तदस्या हृतचेतनत्वम् (आर्यशूरकृतायां जातकमालायाम्)॥ आगूर्णपरश्वधा उद्यतस्वधितयः।

—ग्रन्थ् ( ग्रन्थ सन्दर्भे )। तद्यथा पुनराग्रन्थं पुनर्निर्ग्रन्थमन्तं बध्नीयात् मयूखं वा ऽन्ततो धारणाय निहन्यात् तादृक् तत् ( ऐ० ब्रा० ५।१५ )। अस्याप्यर्थनिर्देशायेह पुनरनुवादः। आग्रन्थमाग्रथ्याग्रथ्य।

—ग्रह् ( ग्रह उपादाने )। तमीमण्वीः समर्य आ गृभ्णन्ति योषणो दश (ऋ० ६।१।७)। ईम् (सोमम्) आगृह्णन्ति समन्ताद् गृह्णन्ति आददते। तेजो वावाऽद्भ्यो भूयस्तद्वा एतद् वायुमागृह्याकाशमभितपति ( छां० उ० ७।११। १)। आगृह्य अवष्टभ्य।

—चर् ( चर गतिभक्षणयोः )। करणगोचरश्च कर्तृव्यापारो न कर्मगोचरतामाचरति ( सर्वद० सं० पात० पं० १४१ )। आचरति गच्छति। ये तेऽर्यमन् बहवो देवयानाः पन्थानो राजन् दिव आचरन्ति (तै० सं० २।३।१४। ४)। आचरन्ति आभिमुख्येन यावत् कर्मस्थानं वितायन्ते। अथ याञ्छब्दानार्या

न कस्मिंश्चिदर्थे आचरन्ति म्लेच्छास्तु कस्मिंश्चिदर्थे प्रयुञ्जते ( मी० शा० भा० )। आचरन्ति व्यवहरन्ति। व्रणे च मधुमेहे च पानीयं मन्दमाचरेत् ( सुश्रुत० सूत्र० १६।३० )। टीकाकृतो डल्लनस्योद्धार एषः। आचरेत् उपयुञ्जीत आददीत। गमनेऽस्याः क्षणविघ्नमाचरन्त्या ( विक्रम० १।३९)। आचरन्त्या उत्पादयन्त्या कुर्वत्या।

—चि (चिञ् चयने)। आचर्य द्युतिमुत्साहम्... अपकर्षति (सौन्दर० १४। ४)।

—छिद् (छिदिर् द्वैधीकरणे)। तदानीं शिर आच्छिद्य पातयामि महीतले ( पद्मपु० ५।५६।२८ )। आच्छिद्य छित्वा। आङ्ना नार्थः। आच्छिद्य पुत्रे निर्याते कौसल्या यत्र जीवति (रा० २।५७।२२)। आच्छिद्य न्यायप्राप्तमभिषेकं त्यक्त्वेति तिलकः, आच्छिद्य प्रसह्येति तु भूषणम्।

—छृद् ( उ छृदिर् दीप्तिदेवनयोः )। अजक्षीरेणाच्छृणत्ति (असुर्यं पात्रम्) (तै० सं० ५।१।७)। दीपयतीत्यर्थः।

—छो (छो तनूकरणे)। मध्यतो हि मनुष्या आच्छ्यन्ति (तै० सं० ६। ३।९)। आच्छ्यन्ति छिन्दन्ति।

—जन् ( जनी प्रादुर्भावे )। स एक आजानजानां देवानामानन्दः (तै० उ० २।८।२ )। आजानो देवलोक इति शङ्करः। आजानो जन्मेत्यन्ये। ये शुश्रुवद्भ्यो देवेभ्योऽन्ये।

—जप् (जप जल्प व्यक्तायां वाचि, जप मानसे च)। तस्या उपोत्थाय कर्णमाजपेत् (तै० सं० ७।१।६)। आजपेत् उपांशु कथयेत्। आङ्पूर्वो जपिरिह सकर्मकः प्रयुक्तः। कर्णमेत्य जपेदित्यर्थः।

—जीव् (जीव प्राणधारणे)। निहतान्निहतान् दैत्यानाजीवयति (मात्स्यपु० १३७।१५)। आजीवयति संजीवयति।

—ज्ञा (ज्ञा अवबोधने)। आजिज्ञासेन्याः शंसति (ऐ० ब्रा० ६।३३)। आज्ञातुमवज्ञातुमिच्छा ऽऽजिज्ञासा, तामर्हन्तीति सायणः। आङ्नादर इति दुर्लभोऽन्यत्रार्थः। आजिज्ञासेन्याः (स्त्री०) कुन्तापसूक्तविशेषाः।

—तञ्च् (तञ्चू संकोचने)। सोमेन त्वा ऽऽतनच्मि (तै० सं० १।१।३)। आतनच्मि घनीकरोमि। त्वा क्षीरम्। प्रातर्दुग्धं द्वैधं कृत्वा तस्यान्यतरां भक्तिमातच्य तेन यजेत (ऐ० ब्रा० ७।३)। उक्तोऽर्थः। आतञ्चनं द्रव्यान्तर-सम्प्रयोगेण घनीकरणम्।

—तन् (तनु विस्तारे)। कतमां द्यां ररश्मिरस्याऽऽततान (तै० ब्रा० २।८।६।२)। आततान व्याप, व्याप्तवान्।

—तुद् (तुद व्यथने)। आतुद्यतेऽभिहन्यते इत्यातोद्यम् (ना० शा० ६। २८ अभिनवभारत्याम्)।

—दा (डुदाञ् दाने)। यद्वा अनीशानो भारमादत्ते वि वै लिशते (तै० सं० ६।२।५।१)। आदत्ते वहति। न मान्यमानो मुदमाददीत (मात्स्य पु० ३९।२६)। संमान्यमानो हर्षं नाहारयेदित्याह। आदिनाभ्यासेनोपहितेनोपधा-मादत्ते (नि० ५।१२)। उपधामकारं लुम्पतीत्यर्थः। श्रेय आददानस्य साधु भवति हीयतेऽर्थाद् य उ प्रेयो वृणीते (कठोप० १।२।१)। आददानस्य परि-गृह्णानस्य। एकस्मिन्नेव पशावादीयमानेऽप्रियं भवति किमु बहुषु (बृह० उ० १।४।१०)। आदीयमाने आच्छिद्यमाने। पाशासिमुद्गरधरास्तामादातुं कृतो-द्यमाः (स्कन्द पु० का० ४।७१।५४)। आदातुं ग्रहीतुं प्रग्रहीतुम्। अदत्तस्या-नादानमस्तेयम् (यो० भा० )। ब्राह्मणकल्पस्ते प्रजायामाजनि-ष्यते आदाय्यापाय्यावसायी (ऐ० ब्रा० ७।२९)। आदायी प्रतिग्रहशील:।

—दाश् (दाशृ दाने)। यो नो अग्ने दुरेव आ मर्तो वधाय दाशति (ऋ० ६।१६।३१)।

—दिश् (दिश अतिसर्जने, दिशिरुच्चारणक्रिय इति भाष्यम्)। औषध-ग्रहणाद् द्रव्यगुणरसवीर्यविपाकप्रभावानामादेशः (सुश्रुत० १।१।२७)। आदेशः कथनम्। तद्ये ऽनादिष्टदेवता मन्त्राः (नि० ७।४।१)। अनिर्दिष्ट-देवताका इत्यर्थः। सखे स एष सर्वसम्पदामास्पदतया त्रिदशालयस्यादेश इव गुर्जरदेशः (विश्व० च० १०।३३)। आदेशः स्थानापन्नः, प्रति-निधिः।

—दिह् (दिह उपचये)। निपेतुः शोणितादिग्धा धरण्यां पावकोपमाः (रा० ३।३।१२)। आदिग्धा ईषद् दिग्धाः।

—दु (टुदु उपतापे)। आदुन्वस्व विदुन्वस्व द्रुह्य कुप्यस्व याचकि (भा० आदि० ७८।११)। आदुन्वस्व आभिमुख्येन वक्षस्ताडनादिना सन्तापं प्राप्नुहीत्यर्थः।

—दृश् (दृशिर् प्रेक्षणे)। प्रत्यक्षप्रमाणस्यानुमानादिप्रमाणान्तरानङ्गीकारे ऽकिञ्चित्करत्वप्रदर्शनेन तेषां प्रज्ञायाः प्रमादमादर्शयति (स्याद्वाद० १६ इत्यत्र हैम.)। आदर्शयति कार्त्स्न्येन दर्शयति। अप्स इति रूपनामाप्सातेरप्सानीयं भवत्यादर्शनीयं व्यापनीयं वा (नि० ५।१३।१)। आदर्शनीयमाभिमुख्येन दर्शनीयम्।

—द्रु (द्रु गतौ)। तावाद्रुत्याब्रूतां प्राणन्तु नौ युवाभ्यां पशव इति (जै० ब्रा० १।१०६)। आद्रुत्य एत्य, सहसोपेत्य।

—धा (डुधाञ् धारणपोषणयोः)। स्वां प्रजां बृहदुक्थो महित्वाऽऽवरेष्वदधादा परेषु (ऋ० १०।५६।०)। आदधात्=अकरोत्। आङ् नार्थे विशेषं करोति। यथा ऽनसि युक्त आधीयते (तै० सं० ५।४।१०)। आधीयते वोढव्यमिति शेषः। वहत्यनड्वानादधानः (जै० ब्रा० १।३८)। आदधान आहितभारः। यो ह वै शिशुं साधानं सप्रत्याधानं सस्थूणं सदामं वेद (बृह० उ० २।२।१)। आधीयते ऽस्मिन्नित्याधानम्। भूतसूक्ष्ममयं लिङ्ग शरीरम्। तेन सह वर्तमानं साधानम्। प्रहृत्य परिधीन् जुहोति। निराधानाभ्यामेव (अश्वाभ्याम्) घासं प्रयच्छति (तै० ब्रा० १।६।३)। आधानं खलीनं कविकम्। आधिभेदाद्यथा भेदो मणेरवगतस्तथा (उपदेश० १८।१२२)। आधिरुपाधिः। छन्दोवशादुपशब्दस्त्यक्तः। स दोषः। न ह्याधिरुपाधेरर्थे प्रसिध्यति।

—ध्मा (ध्मा शब्दाग्निसंयोगयोः)। यच्चैतद् बहुभिर्भेरीमाधमद्भिः शब्दमुच्चारयद्भि र्महाञ्शब्द उपलभ्यते (मी० शा० भा० १।१।६।१७)। आधमद्भिः, पूरयद्भिः, ताडयद्भिः। शराध्मातमहातूणाः (मौन्दर० १।३५)। आध्माताः स्फीताः पूर्णाः।

—नम् (णम प्रह्वत्वे शब्दे च)।···नन्दिना सह संकथाम्। काञ्चित्तर्जनिविन्यासपूर्वं कुर्वन्तमानमत् (स्कन्द पु० का० ४।८६।२)। आनमत् प्राणमत्। सकृदेवानतं शेकू रथमभ्यसितुं परे (भा० वि० ५५।२०)। आनतमुपनतमुपगतम्। अभ्यसितुं परिचेतुम्। शराः कर्तारः। पामरैरप्यपेयानां

वारीणां परिपातरि । आश्रये जलजन्तूनामानिनंसा कथं तव (विश्व० च०) ॥ **आनिनंसा नन्तुमिच्छा ।**

**—नह् ( णह बन्धने )** । आनह्यते यस्य विधूप्यते च प्रक्लिद्यते शुष्यति चापि नासा । न वेत्ति यो गन्धरसांश्च जन्तुर्जुष्टं व्यवस्येत्तमपीनसेन (सुश्रुत० उत्तर० २२।३) ॥ **आनह्यते रुध्यते** । पुनरानह्यते वापि पुर्नविव्रियते तथा (नासिका) (सुश्रुते २४।१०) । **उक्तोऽर्थः** ।

**—पत् (पत्लृ गतौ)** । किन्त्वधीते वेदे द्वयमापतति (मी० शा० भा० १।१।१।१) । **आपतति प्रसज्यते प्राप्नोति** । वाग्दत्ता यद्यनूढैव कन्या पञ्चत्वमापतेत् ( कर्मप्रदीपे १।६।१३ ) । **आपतेत् प्राप्नुयात्** । आपतत्यात्मनि प्रायो दोषोऽन्यस्य चिकीर्षितः (कथा० २०।२१३) । **आपतति आयाति** । मदश्चैकपदे नष्टः क्रोधश्चापतितो महान् (रा० ४।१५।२) । **आपतित उत्पन्न आविर्भूतः, विजृम्भितः** । तत्रायमद्यापतितो विपाकः (रा० ३।६३।४) । **आपतित उपनतः प्राप्तः प्रसक्तः** । आपतये त्वा गृह्णामि (तै० सं० १।२।१०) । **प्राणो वाऽऽपतिः । आवृत्त्याऽऽभिमुख्येन वा पततीति ।**

**—पद् ( पद गतौ )** । तदाहुर्यस्याग्निहोत्रमधिश्रितममेध्यमापद्येत (ऐ० ब्रा० ७।५ ) । **आपद्येत सम्पद्येत भवेत्** । मृत्युरापद्यते मोहात्सत्येनापद्यतेऽमृतम् ( भा० शां० १७५।३० ) । **आपद्यते प्राप्यते** । दोषाः प्रकुपिताः…। व्याप्य देहमशेषेण ज्वरमापादयन्ति हि (सुश्रुत० उत्तर० ३९।६) । **आपादयन्ति प्रसञ्जयन्ति, जनयन्ति** । अत्रैव मा भगवान् मोहान्तमापीपदत् (बृह० उ० ४।५।१४) । **मोहावस्थां मा प्रापिपत्** । द्वयोरापन्नयोस्तुल्यमनुबध्नाति यः पुनः । तयोर्दण्डमाप्नोति पूर्वो यदि वेतरः ( नारद० ) ॥ **आपन्नयोरभियुक्तयोः, अभियोगग्रस्तयोः** । यथाक्षन्नापन्नं विधावति ( तै० सं० ६।१।९ ) । अक्षन्नापन्नम् =**अक्ष्णि प्रविष्टम्** । तेनैचश्चतुर्विंशतेः संज्ञाः स्युरिति नापादनीयम् (पा० १।१।१० इत्यत्र दीक्षितः कौमुद्याम्) । **नापादनीयम् =नानिष्टापत्तिश्चोदनीयेत्यर्थः** । अथ ये प्रभवो ध्यानापादांशा इवैव ते भवन्ति (छां० उ० ७।६।१) । **ध्यानमापद्यन्ते प्राप्नुवन्ति ते ध्यानापादाः ।**

**—पा (पा पाने)** । आपिबेयं समुद्रं च (रा० ३।४९।३) । **निःशेषं पिबेयमित्यर्थः** । सा निनाय तमुद्यानमापानाय सुराङ्गना ( कथा० ७३।१५२ ) । **आपानं सुरापानम्** । आपित्वे नः प्रपित्वे तूयमागहि (ऋ० ८।४।३) । **आपित्वे** आपानकाल इति दुर्ग । (नि० ३।२०)

—पृच् ( पृची सम्पर्के ) । हन्तास्यान्याभिर्ऋग्भिर्मन्त्रमापृणचाम ( ऐ० ब्रा० ६।१) । सर्वतः सम्पृक्तं करवामेत्यर्थः ।

—पृ (पृ पालनपूरणयोः) । आ रोदसी अपृणाज्जायमानः ( तै० सं० ५। १।८) । आपृणात् आप्रात् ।

—प्री ( प्रीञ् प्रीतौ ) । स मुखत आत्मानमा प्रीणीत (तै० सं० ५।१। ८) । प्रीणया मासेत्यर्थः ।

—प्लु (प्लुङ् गतौ) । आप्लवन्तः प्लवन्तश्च गर्जन्तश्च प्लवङ्गमाः (रा० ६।४।२६) । आप्लवन्तः समन्ताद्रक्षणार्थं गच्छन्तः । ध्वजवर्मरथानश्वान्नाना प्रहरणानि च । आप्लुत्याप्लुत्य समरे वानरेन्द्रा बभञ्जिरे (रा० ६।९३। १२ ) ॥ आप्लुत्याप्लुत्य प्लुतिभिराक्रम्याक्रम्य । सितासिते सरिते यत्र संगते तत्राप्लुतासो दिवमुत्पतन्ति ( ऋग्वेदे खिलपाठः ) । आप्लुतास आप्लुताः कृतस्नानाः । आप्लाव आप्लवः स्नानम् इत्यमरः ।

—भज् ( भज सेवायाम् ) । आभजन्ति गुणिनः पृथक् पृथक् पार्थ सत्कृतिमकृत्रिमाममी ( शिशु० १४।५७ ) । आभजन्ति अर्हन्ति । प्राचीने वैदिके साहित्ये त्वन्यादृश एव व्यवहार आभजेः, स पुस्तके दर्शित इति तत एव विज्ञानीयः ।

—भाष् (भाष व्यक्तायां वाचि) । चित्रस्थानवलोक्य शून्यवलभावेकैकमाभाषते (सा० द० १०।६० इत्यत्रोदाहरणश्लोकः) । आभाषते आलपति, सम्बोधयति । आबभाषे तदा वीरो यथावत् प्रशशंस च ( रा० ४।३।३) । उक्तोऽर्थः । तमेवमुक्त्वा राजानं गङ्गां चाभाष्य लोककृत् (रा० १।४२।२६) । वत्से राजानं यथाकालमनुगृहाणेत्युक्त्वा । गङ्गां चाभाष्य गङ्गां चाभिमुख्येन सम्बोध्य ।

—भुज् (भुज पालनाभ्यवहारयोः) । स्वरूपसाक्षात्कारवती प्रज्ञा आभोगः (यो० सू० तत्त्ववैशारद्याम्) ।

—भू (भू सत्तायाम्, भू प्राप्तौ) । य आबभूव भुवनानि विश्वा (वा० सं० ३२।५) । आबभूव कारणात्मना व्याप्तोऽभूत् । कथं भवन्ति कथमाभवन्ति कथं भूता गर्भभूता भवन्ति (मात्स्य पु० ३९।६) । आभवन्ति पुनर्जायन्ते । तय । देवाः सुतमा बभूवुः (तै० सं० ३।८।३।३) । आबभूवुः प्राप्ताः ।

—भृ (भृञ् भरणे)। येनेमा विश्वा भुवनान्याभृता (ऋ० १०।१७०। ४)। आभृता =आभृतानि पूर्णानि।

—मन् (मन ज्ञाने)। अथा हि मद आ सोम मन्ये (ऋ० ८।४८।६)। आमन्ये आ समन्तात् स्तौमि।

—मन्त्र् (मत्रि गुप्तपरिभाषणे)। ततः परिषदं सर्वामामन्त्र्य वसुधाधिपः (रा० २।२।१)। आमन्त्र्य=अभिमुखीकृत्य, सम्बोध्य।

—मुच् (मुच्लृ मोक्षणे)। माहेन्द्रमामुमोच तनुच्छदम् (रघु० १२।८६)। आमुमोच प्रतिमुमोच बबन्ध। येनाहं शीघ्रमामुञ्चे महापातककिल्बिषात् (मात्स्य पु० १०३।६)। आमुञ्चे मुच्ये। आङ्स्थाने। मुचोऽकर्मकस्यैवेति सूत्राल्लिङ्गान्मुचिरकर्मकोऽप्यस्तीत्यभ्युपगमः। तेनेहाकर्मकत्वेन प्रयोगो न दुष्यति।

—मुद् (मुद हर्षे)। ईश्वरामोदिताः सर्वं उत्पेतुश्चाम्बरे ततः (मात्स्य-पु० १३८।२)। आमोदिता उद्धर्षिताः।

—मृश् (मृश आमर्शने, आमर्शनं स्पर्शः)। परस्वं भुवि नामृक्षन्महा-विषमिवोरगम् (सौन्दर०)। नामृक्षन् नामार्क्षुः, नाम्राक्षुः, नास्पृशन्। पुत्र देवेन सर्वज्ञेन सर्वशक्तिनाऽऽमृष्टाः श्रियः (भोज० २७ तमस्य श्लोकस्य परस्तात्)। आमृष्टाः=आच्छिन्नाः आक्षिप्ताः।

—यत् (यती प्रयत्ने)। आस्मै यतन्ते सख्याय पूर्वीः (ऋ० १०।२६।८)। आयतन्ते सर्वात्मना यतन्ते प्रयस्यन्ति। इच्छिन्तीत्यर्थः। आ ते यतन्ते यथा पृथक् पृथक् शर्धांस्यग्ने अजरस्य धक्षतः (साम० उत्तर० ३।२।७)। आयतन्ते सर्वतो यतन्ते। आ यद् वामीयचक्षसा मित्र वयं च सूरयः। व्यचिष्ठे बहुपाय्ये यतेमहि स्वराज्ये (ऋ० ५।६६।६)॥ स्वराज्ये स्वराड् इन्द्रः। स्वराज इन्द्रस्य राज्ये आयतेमहि आयतनमास्पदं लभेमहि। भो भोः शूलायतनाः, न खलु व्यापादयितव्यश्चन्दनदासः (मुद्रा० ७)। शूलमायतनं जीवनोपायो येषां ते तथोक्ताः। आयतनवती वा अन्या आहुतयो हूयन्ते, ऽनायतना अन्याः (तै० सं० १।१।६।२७)। विभक्तावकाशं स्थानमायतनम्।

—यम् (यम उपरमे)। अस्माकं त्वा मतीनामा स्तोम इन्द्र यच्छतु (ऋ० ४।३२।१५)। आयच्छतु आकर्षतु। आयम्यते हिक्कतो यस्य देहः

(सुश्रुते) । आयम्यते दीर्घी भवति । या राजन्ये दुन्दुभावायतायाम् (तै० ब्रा० २।७।७।१) । आयतायामभिहन्यमानायां ताड्यमानायाम् । तस्य बाणमयं वर्षं शलभानामिवायतिम् (भा० वि० ५८।६५) । आयतिः सन्ततिः ततिः । अल्पायतिश्चेन्महाव्ययो भक्षयति (कौ० अ० २।९।१०) । आयतिरायः । अतो यान्यन्यानि वीर्यवन्ति कर्माणि यथाग्नेर्मन्थनमाजेः सरणं दृढस्य धनुष आयमनमप्राणन्ननपानंस्तानि करोति (छां० उ० १।३।५) । आयमनं कर्षणम् ।

—यस् (यसु प्रयत्ने) । आयस्योत्पाटितान् केशान् यो नरो नावबुध्यते (चरक० इन्द्रिय० ८।८) । आयस्य बलादाकृष्य ।

—याच् (टुयाचृ याच्ञायाम्) । वाग्यतां देवतागारे ददर्शायाचतीं श्रियम् ( रा० २।४।३० ) । आयाचतीमायाचन्तीं प्रार्थयमानाम् । आङाभिमुख्ये स्यात् ।

—यु (यु मिश्रणामिश्रणयोः) । आयुषा वै देवा असुरानायुवत (पञ्च० ब्रा० १६।३।२) । आयुवत आयुवन् व्ययोजयन् । आज्यं वै देवानां सुरभि-घृतं मनुष्याणामायुतं पितृणां नवनीतं गर्भाणाम् (ऐ० ब्रा० १।३) । आयुत-मीषद् विलीनम् ।

—युज् (युजिर् योगे) । ये तत्र ब्राह्मणाः संमर्शिनः । युक्ता आयुक्ताः (तै० उ० १।११।३) । इदं पुस्तके न्यस्तपूर्वम् । भूयोवैशद्याय पुनर्न्यासः । साङ्गोपाङ्गं सकलेषु श्रौतेषु स्मार्तेषु च कर्मसु युक्ता आयुक्ता उक्ता इति गोपालानन्दस्वामी । तिष्ठा हरी रथ आ युज्यमाना (ऋ० ३।३५।१) ।

—रभ् ( रभ राभस्ये ) । यज्ञो वै देवेभ्योऽपाक्रामत् स सुपर्णरूपं कृत्वाऽचरत् तं देवा एतैः सामभिरारभन्त ( पञ्च० ब्रा० ४।३।१० ) । आरभन्त अगृह्णन् । आरभामहे त्वा जीर्णा इव दण्डम् (नि० ३।२१।१) । अवलम्बामह इत्यर्थः । अन्तरिक्षेऽनारम्भणान्यादायात्मानं परिपतन्ति (छां० उ० २।९।४) । अनारम्भणानि अनालम्बनानि, अनाश्रयाणि ।

—रम् (रमु क्रीडायाम्) । तस्मादेना आरतं शंसेत् (शां० ब्रा० १५।४) । आरतं तूष्णीम् । विरामोऽस्त्वति चारमेत् (मनु० २।७३) । आरमेत् विरमेत् ।

स्वात्मारामेषु कुशलप्रश्न एव विडम्बनम् (ब्रह्मवै० २।६१।२०)। **स्वात्मन्यारामो रति र्येषां ते तथोक्ताः।**

**—रम्भ् (रभि शब्दे)**। श्रुत्वा भेरीरवं घोरं मेघारम्भितसंनिभम् (मात्स्यपु० १३६।२८)। **मेघारम्भितं मेघगर्जितं स्तनयित्नुस्तनितम्।**

**—लभ् (डुलभष् प्राप्तौ)**। आलभेतासकृद् दीनः करेण च शिरोरुहान् (सुश्रुत० कल्प० १।८)। **आलभेत स्पृशेत्।** धनैर्मलिनचित्तानामालभन्तेऽङ्गनं क्वचित् (स्कन्द० का० ४।७१।१६)। **उक्तोऽर्थः।** मङ्गलालम्भनं योगः श्रुतमुत्थानमार्जवम् (भा० उ० )। **आलम्भनं स्पर्शः।**

**—लम्ब् (अबि रबि लबि शब्दे, लबि अवस्रंसने च)**। यमुद्धर्तुं पूषा व्यवसित इवालम्बितकरः (विक्रम० ४।३४)। **आलम्बितकरः प्रसारितकरः, आयामितहस्तः।**

**—ला (ला आदाने)**। गृहीतामालितां स्तम्भे···।···गजराज वधूमिव (रा०)॥ आलितां बद्धामिति भूषणकारः।

**—लिख् (लिख अक्षरविन्यासे)**। कैलासशिखरप्रख्यामालिखन्तीमिवाम्बरम् (रा० ५।२।२३)। **लङ्कापुरीमिति शेषः। आलिखन्तीमुल्लिखन्तीम्।**

**—वस् (वस निवासे)**। मास्म मत्कारणाद् देवी सुमित्रा दुःखमावसेत्। अयोध्याम्···(रा० २।५३।१६)॥ **अयोध्यायां वसेत् इत्यर्थः।** आवसन् संयुताः कान्तैः पर्द्धिरचितां गुहाम् (मात्स्य० १२०।३३)। **उक्तोऽर्थः।** स्वाध्यायाद्योगमासीत योगात्स्वाध्यायमावसेत् (योगभाष्ये)। **स्वाध्यायेऽवस्थितः स्यादित्यर्थः।**

**—वह् (वह प्रापणे)**। आवहति धार्यमाणः सङ्गममचिरात् प्रियजनेन (विक्रम० ४।३३)। **आवहति जनयति, करोति।** जीवन्न सम्प्रति भवामि किमावहामि (का० प्र० ५।११४)। **किं करोमीत्यर्थः।** उदिते प्राङ्मुखा गृह्याः प्रत्यङ्मुखा आवहमाना गोत्रनामान्यनु कीर्तयन्तः कन्यां वरयन्ति (शां० गृ० १।६।४)। आवहन्ती पोष्या वार्याणि (ऋ० १।११३।१५)। **आवहन्ती आहरन्ती प्रापयन्ती (उषाः)।** आवाहे विवाहे यज्ञे गमनं सखीभिः सह (का० सू० ४।१।१५)। **आवाहे वरगृहे।**

—विद् (विद ज्ञाने)। अवेदनीय आवेद्यः (लिङ्गपु० पू० ६५।४०)। आवेद्य आ ईषद् वेदितुं ज्ञातुं शक्यः।

—विश् (विश प्रवेशने। हन्त निर्युक्तमित्युक्त्वा रामः कवचमाविशत् (रा० ३।२४।१६)। कवचमाविशत् सन्नाहमबध्नात्। आविशन्ति हि दुर्गाणि क्षिप्रमन्यानि वानराः (रा० ४।१६।१५)। आविशन्ति आक्रामन्ति। क्रुद्धे स्मेरमुखावधीरणमथाविष्टे प्रसादक्रमः (प्र० च० ४।१८)। आविष्टः क्रोधवशं गतः। वेष्टमानां तथाविष्टां पन्नगेन्द्रवधूमिव (रा० ५।१६।६)। आविष्टां मणिमन्त्राद्यभिभूताम्। महाबलो यष्टिपाणि र्गेहावेशनिवारकः (शिवपु० २।४।१५।२७)। आवेशः प्रवेशः। अत्रार्थेऽन्यत्र मृग्यः प्रयोगः।

—वृ (वृङ् संभक्तौ)। आ सर्वतातिमदितिं वृणीमहे (ऋ० १०।१००।१)। वृणीमहे वरयामः। आ त्र्यावृत इमे लोकाः (तै० ब्रा० ३।८।१०।३)। त्र्यावृतः त्रिप्रकाराः। अत्र वृञ् वरणे इति धातुः।

—वृज् (वृजि, वृजी वर्जने)। असुरेषु वै यज्ञ आसीत्तं देवास्तूष्णीं होमेनावृञ्जत (तै० सं० ६।३।७)। आवृञ्जत आहरन् वशेऽकुर्वन्। अहमावर्जयिष्यामि युष्माकं परिपन्थिनः (रा० ५।६२।२)। आवर्जयिष्यामि वशे करिष्यामि, नमयिष्यामि, न्यग्भावयिष्यामि। चतुर्दिगावर्जितसम्भृतां यो मृत्पात्रशेषामकरोद् विभूतिम् (रघु० ६।७६)। आवर्जिताऽऽहृताऽऽनीता।

—वृत् (वृतु वर्तने)।…विद्यां संजीवनीं कविः। आवर्तयामास तदा विधानेन शुचिव्रतः (वामनपु० ६६।७)॥ आवर्तयामास अभ्यास, गुणयाञ्चकार। पितृपैतामहं राज्यं कस्य नावर्तयेन्मनः (रा० ६।१२५।१६)। आवर्तयेत् परिवर्तयेत् भ्रमयेत्। यथाग्नौ कर्मारः पचति भृशमावर्तयति च (स्वर्णम्) (सौन्दर० १५।६८)। आवर्तयति सन्तपति। तदाहुर्यज्जीवन्पुरुषः करोत्येव साधु करोति पापं का तयोर्व्यावृत्तिः (जै० ब्रा० १।१५)। व्यावृत्तिः पृथग्भावः। सर्वौषधावघातः किमावर्त्यः सकृदेव वा (जै० न्या० ११।१।१८)। आवर्त्यः=आवृत्त्या कार्यः। आसीत् तृतीये त्रेतायामावर्ते च मनोः प्रभो (लिङ्गपु० उ० ८।८)। आवर्ते परिवर्ते युगपरिवर्ते।

—वृह् (वृहू उद्यमने)। सरघा वा अश्वस्य सक्थ्यावृहत् (पञ्च० ब्रा० २१।४)। आवृहत् आच्छिद्य गृहीतवती। सक्थिप्रदेशे व्रणमकरोदित्यर्थः।

—वै (पै ओवै शोषणे)। उपाध्यायिनी च स्नाता केशानावापयन्त्युप-विष्टा (भा० ३।१५७)। आवापयन्ती शोषयन्ती।

—व्यध् (व्यध ताडने)। तं दुन्दुभिं गिरिसंनिभम्। आविध्यत्···(रा० ४।११।४०)। आविध्यत् अभ्रमयत्। अनाविद्धं रत्नं किसलयमलूनं कररुहैः (शा० २।१०)। अनाविद्धं छिद्रकर्या शलाकयाऽकृतच्छिद्रम्। आविध्याथ गदां सोपि (दुर्गा० ६।१३)। आविध्य भ्रमयित्वा। आव्याधिनीनां पतये नमः (काण्व सं० १७।२)। आ समान्ताद् विध्यन्तीत्याव्याधिन्यः।

—व्रश्च् (ओ व्रश्चू छेदने)। आ वृश्च्यन्तामदितये दुरेवाः (ऋ० १०।८७।१८)। पुस्तके ऽर्थो न निरदेशीत्यर्थनिर्देशायेहानूद्यते। आवृश्च्यन्तामाच्छिद्यन्ताम्। दुरेवा यातुधानाः। आ देवताभ्यो वृश्च्यते पापीयान्भवति (तै० ब्रा० १।१।४।८)। आवृश्च्यते विच्छिद्यते, विश्लिष्यते, पृथग्भवति।

—शक् (शक्लृ शक्तौ)। त्वमङ्ग शक्र वस्व आ शको नः। रायस्कामो जरितारं त आगन् (ऋ० ७।२०।६)। वस्वो वसुनो न आशकः धनस्येश्वरान्नः कुरु।

—शंस् (आङः शसि इच्छायाम्)। जग्मुराशंसवो जनाः (रा० २।१६।३५)। आशंसव आशंसितारः, प्रार्थयितारः। सदा पुंयोगमाशंसु र्मनसा मदनातुरा (ब्रह्मवै० १।२३।२६)। आशंसुः=इच्छुः।

—शास् (आङः शासु इच्छायाम्)। कच्चिदाशास्ति देवानां प्रसादं पार्थिवात्मजः (रा० ५।३६।१९)। आशास्ति आशास्ते प्रार्थयते।

—शिक्ष् (शिक्ष विद्योपादाने)। आशिक्षायै प्रश्निनम् (तै० ब्रा० ३।४।४)। अल्पा शिक्षा आशिक्षा। आङीषदर्थे।

—शी (शीङ् स्वप्ने)। ऽपो वृत्वी रजसो बुध्नमाशयत् (ऋ० १।४२।६)। आशयत् आश्रित्याशेत। अहिमोहमानमप आशयानम् (ऋ० ५।३०।६)। आशयानमावृत्य शयानम्। इत्येनमाशयेनाभिजुहोति (आश्व० गृ० २।१।६)। यस्मिन्नाज्ये पुरोडाशः शायितः स आशय उच्यते। प्रयुक्तवीचि हस्ताग्रं प्रसन्नविपुलाशयम् (सरः) (कथा० १०१।१२)। आशयः परिमाणम्। कुशलाकुशलाश्च कर्माशयाः समूलघातं हता भवन्ति (योगभाष्ये)। आशेरतेऽत्र सांसारिका इत्याशयाः। कर्माशयः कर्मनिधिः।

—श्रु (श्रु श्रवणे)। यत्र ग्राम्यस्य पशोर्नाशृणुयात् (पञ्च० ब्रा० २१।३।५)। ग्राम्यपशूनां शब्दं न शृणुयात्। आङ् विशेषकृन्न। श्रोत्रेण सर्वा दिश आशृणोमि (तै० ब्रा० २।५।१।२)। आशृणोमि सर्वतः शृणोमि। आङ् व्याप्तौ। इमं मे गङ्गे यमुने…आर्जीकीये शृणुह्या सुषोमया (ऋ० १०।७५।५)। आभिमुख्येन शृण्वित्यर्थः। आश्रवसङ्गरसन्धाः प्रतिश्रवः संश्रवः प्रतिज्ञा चेति पर्यायान्पठति हलायुधः।

—श्लिष् (श्लिष आलिङ्गने)। मा तद् भूम्यामाश्लिषन्मा तृणेषु (ऋ० १।१६२।११)। मा ऽऽश्लिषत् मा संलग्नं भूत्।

—श्वस् (श्वस प्राणने)। मातरि जायायां पितरि वा नाश्वस्युः (मी० शा० भा० १।१।६।३०)। न विश्वस्युरित्यर्थः। न खलु मे आसीदाश्वास यथा पुनरपि सखीजनं प्रेक्षिष्य इति (विक्रम० १)। आश्वासो विश्वासः प्रत्ययः।

—सद् (षद्लृ विशरणगत्यवसादनेषु)। आसीददसुरो युद्धे शक्रसूनुर्व्यवर्धत (रा० ४।११।४४)। आसीदत् क्षीणबलोऽवर्तत। तयेह विश्वाँ अवसे यजत्राना सादय (ऋ० ३।५७।५)। आसादय उपवेशय। आयुतद्वयविष्कम्भस्यासन्नो वृत्तपरिणाहः (आर्य० २।१०)। आसन्नः सशेषः। परिणाहः परिधिः।

—सिच् (षिच क्षरणे)। आ सिञ्चस्व जठरे मध्व ऊर्मिम् (तै० सं० १।४।१९)। आसिञ्चस्व आभिमुख्येन क्षारय।

—सृ (सृ गतौ)। मित्रबलमासारः (कौ० अ० १०।२।६)। निगदव्याख्यातम्।

—स्कु (स्कुञ् आप्रवणे)। यो अस्याः कर्णावास्कुनोत्या स देवेषु वृश्चते (अथर्व० १२।४।६)। आस्कुनोति आतृणत्ति, विध्यति, आच्छिनत्ति, छिद्रं करोति।

—स्था (ष्ठा गतिनिवृत्तौ)। एह्यश्मानमातिष्ठाश्मेव त्वं स्थिरा भव (शां० गृ० १।१३।१२)। आतिष्ठ आक्राम, आरोह। रुद्रो वा अपशुकाया आहुत्यै नातिष्ठत (तै० ब्रा० १।६।१०)। पशुरहितामाहुतिं नाङ्गी करोतीत्यर्थः। अन्योन्यस्मै नातिष्ठन्त (तै० ब्रा० १।३।२।२)। परस्परं विवदमानाः प्रथमानुष्ठातृत्वलक्षणाय ज्यैष्ठ्याय नातिष्ठन्त ज्यैष्ठ्यं नाङ्गीचक्रुः। ता अस्मै (प्रजा-

पतये) नातिष्ठन्तान्नाद्याय (तै० ब्रा० २।२।१०।६) । अन्नाद्यं दातुं नाङ्गीकृतवत्य इत्यर्थः । आ यस्तस्थौ भुवनान्यमर्त्यः (ऋ० ६।८४।२) । आतस्थौ अधितष्ठौ । मा स्वधितिस्तन्व आतिष्ठिपत्ते (ऋ० १।१६२।२०) । किमेवमेभिर्विषयाभिषङ्गरसगृघ्नुभिरास्थानिकैरास्थानीधूर्तैः ( प्र० च० ६ ) । आस्थानी सभा । स्नेहविरेचनास्थापनानुवासनैश्चैवं दशरात्राहृतवेगमुपक्रमेत् ( सुश्रुत० चि० ५।२७) । अनास्थाप्यास्त्वतिस्निग्धः क्षतोरस्को भृशं कृशः ( अष्टाङ्ग० सूत्र० १६।४) । आस्थापनशब्दो निरूहवचनः ।

—स्फल् (स्फल ताडने, लौकिकः) । निहन्मि किं खलामेतां दृषद्यास्फालयामि किम् (वृ०क० को० १०८।४१) । आस्फालयामि अवताडयामि ।

—स्रु (स्रु गतौ) । तद्वै राष्ट्रमास्रवति भिन्नां नावमिवोदकम् (अथर्व० ५।१९।८) । आस्रवति वृष्ट्याऽऽप्लावयति ।

—हन् (हन हिंसागत्योः) । क्वासौ रामो य आहत्य साखायं रावणं गतः (पद्मपु० ५।३४।५) । आङ्स्थाने । प्रः स्थाने स्यात् ।

—हु ( हु दानादनयोः, प्रीणन इत्येके ) । तस्मा इन्द्राय सुतमाजुहोमि (तै० ब्रा० १।१।१।५) । आजुहोमि सर्वतो जुहोमि ।

—हृ (हृञ् हरणे) । आहरेद् विधिवद् दारान् (याज्ञ० १।८९) । आहरेत् परिगृह्णीयात् । रक्षसां चैव सन्तापमनर्थं चाहरिष्यसि (रा० ३।३८।२४)। आहरिष्यसि यत्नेन सम्पादयिष्यसि । न तद्धरेद्यत्पुनराहरेत्परः (भा० वन० १४०।६९ ) । आहरेत् अपहरेत् आक्षिपेत्, आच्छिन्द्यात् । नाहारमाहरत् (कथा० ३३।६५) । आहरत् अभ्यवाहरत् अभुङ्क्त, आश्नात् । अन्यत्र मृग्यः प्रयोगः । तदाहुः । कथमग्नीनन्वादधानोऽन्वाहार्यपचनमाहारयेत् ( ऐ० ब्रा० ७।११) । अन्वाहार्यनामक ओदनः पच्यते यस्मिन्दक्षिणाग्नौ सोऽन्वाहार्यपचनः । तस्याहरणमभिज्वलनम् । प्रति प्रस्थातर्वर्षाहारं साम गाय (सत्या० श्रौ० २४।६।४) । वर्षमाहरति आनयतीति वर्षाहारः । कर्मण्यण् । न चालङ्कृतीनामपोद्धाराहाराभ्यां वाक्यं पुष्यति दुष्यति वा ( काव्यानु० हैमः ) । आहारोऽध्याहारः । तद्यथा श्रेयांसमाहरन्नुपेयात् ( शां० ब्रा० २५।१० ) । आहरन् उपहरन् । सोपहार इत्यर्थः । रिक्तहस्तो न यायादित्यभिप्रायः ।

—ह्वे (ह्वेञ् स्पर्धायां शब्दे च) । आह्वायके विसृष्टेऽपि साऽन्यथा नागता कथम् (कथा० ५८।८८) । आह्वायक आह्वाता ।

## आङ् नि (आ+नि)

—सद् (षद्लृ विशरणगत्यवसादनेषु) । एदं बर्हिर्निषीदत (ऋ० २।४१।१३) । आनिषीदत एत्य निषीदत उपविशत ।

# नि

—अञ्च् ( अञ्चु गतिपूजनयोः ) । यदेवास्य तत्र न्यक्तम् । तदेवावरुन्धे ( तै० ब्रा० १।१।३।४ ) । न्यक्तं निगूढम् । यत्र यत्रैवास्य न्यक्तम् (तै० सं० १।५।२।४) । न्यक्तं निमग्नं विस्मृतम् । नीचैरक्तं गतमित्यक्षरार्थः ।

— अस् (असु क्षेपणे) । ऋषेर्हि न्यस्तदण्डस्य वने वन्येन जीवतः (रा० २।६३।२७ ) । न्यस्तदण्डस्य त्यक्तपरपीडस्य । न्यस्तमार्त्विज्यमकार्यम् (आश्व० गृ०) ।

…इ (इण् गतौ) । यत्रायमणिमानं न्येति (बृह० उ० ४।३।३६) । कार्श्यं नितरामेतीत्यर्थः । आर्ति वा एते नियन्ति ( तै० ब्रा० १।४।६।५ ) । नियन्ति नितरां प्राप्नुवन्ति । यद्यपरपक्षे भङ्गं नीयात् (शां० ब्रा० ४।१) । भङ्गं भ्रंशं व्यसनमुपेयात् ।

—उन्द् (उन्दी क्लेदने) । यदाज्यमुच्छिष्यते तस्मिन्रशनां न्युनत्ति (तै० ब्रा० ३।८।२।३) । नितरामुनत्ति क्लिन्नां करोतीति सायणः । नीचैः कृत्वा निमज्ज्य उनत्तीति तु वयम् । आस्वास्वोषधीष्वात्मानं न्युद्यापूर्यमाणोऽमुं लोकं गच्छति (जै० ब्रा० २।३) । उक्तोऽर्थः ।

—उब्ज् ( उब्ज आर्जवे ) । तत्रैतांश्चमसान्न्युब्जन् (ऐ० ब्रा० ७।३०) । अधोमुखानस्थापयन्नित्यर्थः । भुजन्युब्जौ पाण्युपतापयोः (पा० ७।३।६१) । न्युब्जिताः शेरते ऽस्मिन्निति न्युब्ज उपतापो रोगः ।

— ऊह् (ऊह वितर्के) । पशूनेवैतेन न्यौहन्त (पञ्च० ब्रा० १३।६।१३)। न्यौहन्त नितरां प्राप्नुवन्, समूहीकृतवन्त इति वा ।

—ऋ (ऋ गतिप्रापणयोः) । प्राणमपानो ऽनु न्यृच्छेत् (तै० सं० ६।४।६) । न्यृच्छेत् निर्गच्छेदवस्तात् ।

--ऋष् ( ऋषी गतौ ) । ह्रदं न हि न्यृषन्त्यूर्मयो ब्रह्माणीन्द्र तव यानि वर्धना (ऋ० १।५२।७) । न्यृषन्ति नितरां प्राप्नुवन्ति, त्वयि प्रविशन्ति, त्वद्-हृद्गतानि भवन्ति ।

—कण् (कण रण गतौ) । अक्षिनिकाणं जल्पति (पा० ३।४।५४ सूत्रे वृत्तौ) । नेत्रनिकोचं नेत्रे निकोच्य । णमुलन्तमेतत् ।

—कम् (कमु कान्तौ) । न्याहवनीयो गार्हपत्यमकामयत (तै० ब्रा० १।१। ५।६) । न्यकामयत नितरामकामयत । सुतरामभ्यलष्यत् । तेभ्यो गायत्रीव वसुभ्यो देवेभ्य एकैकेनाक्षरेण कामान् निकामान् दुहे (जै० ब्रा० १।३०) । निश्चितः कामो निकामः ।

—काश् ( काशृ दीप्तौ ) । गजयूथनिकाशेन बलेन महता वृतः (रा० ६। ५७।२१) । गजयूथनिकाशेन करिघटासदृशेन । नीकाश इति तु पाणिनीया इच्छन्ति ।

—कृ ( डुकृञ् करणे ) । होतारं मृत्युः प्रत्यालीयत तमाज्येन न्यकरोत् ( शां० ब्रा० १५।५ ) । न्यकरोत् पृथगकरोत् । सा चित्तिभिर्नि हि चकार मर्त्यम् (ऋ० २।१६४।२९) । निचकार नीचैः करोति भयोत्पादनात् । ब्रह्मा ऽनिकृतिश्चास्तु यस्ते हरति पुष्करम् (भा० अनु० ९४।२०) । अनिकृतिरकृत-प्रायश्चित्तः । चूडारत्नग्रहनिकृतिभिर्दूषितः केशपाशः ( प्र० च० ६।९ ) । निकृतिस्तिरस्कारः ।

—कृष् ( कृष विलेखने ) । भर्तृभावाद् भुजङ्गानां शेषस्त्वत्तो निकृष्यते (काव्यादर्शे २।१८८) । निकृष्यते निकृष्टोऽस्ति, जघन्यो भवति ।

—क्रम् (क्रमु पादविक्षेपे) । सा यत्र यत्र न्यक्रामत् (तै० सं० २।६।७। १) । न्यक्रामत् निष्क्रम्यापतत् । निक्रमणं निषदनं विवर्तनम् (ऋ० १।१६२। १४) । अर्थनिर्दिष्टयेऽनुवादः । निक्रमणं न्यक्पतनम् । यस्यै निक्रमणे घृतं प्रजाः संजीवन्तीः पिबन्तीति (तै० सं० १।७।२) । उक्तोऽर्थः ।

—क्षिप् (क्षिप प्रेरणे) । अमी पवननिक्षिप्ता विनदन्तीव पादपाः (रा० ४।१।१८ ) । निक्षिप्ता निपातिता अवपातिताः । निक्षिप्तविजयो रामो गतश्रीः (रा० ५।२०।२६) । निक्षिप्त विजयस्त्यक्तविजयः ।

**—गम्** (**गम्लृ गतौ**)। वीणावादनतत्त्वज्ञः श्रुतिजातिविशारदः। तालज्ञश्चाप्रयासेन मोक्षं मार्गं निगच्छति (याज्ञ० ३।११५)॥ **निगच्छति निश्चितं प्राप्नोति**। तमिदं निगतं सहः (अथर्व० १३।४।१२)। **निगतमन्तः प्रविष्टम्**। **निगमो वेदार्थव्याख्यानवचनोऽप्यस्तीति** निगमा इमे भवन्तीति निरुक्ते पाठात् (मनु० ६।१९ इत्यत्र मेधातिथिः)। **निगदव्याख्यातम्**। व्यर्थं निगमनं ततः (तत्त्वसंग्रहे १४।३९ तम श्लोकांशः)। **निगम्यन्तेऽनेन प्रतिज्ञाहेतूदाहरणोपनया एकार्थतया समर्थ्यन्ते सम्बध्यन्त इति निगमनमिति कमलशीलः**। **न्यायभाष्येपि** (१।१।३९) **प्रायेणेदमानुपूर्वीक एव ग्रन्थः स्थितः**। अञ्जनसामान्येन वाक्यस्योपक्रमो घृतेन विशेषेण निगमनम् (मी० शा० भा० १।४।१३।२४)। **निगमनं समाप्तिः, उपसंहारः**। इदं चापि तत्रैवाह शवरस्वामी—यथोपक्रमं च निगमयितव्यमेकस्मिन्वाक्य इति। **निगमयितव्यम् उपसंहर्तव्यम्**।

**—ग्रह्** (**ग्रह उपादाने**)। एवमनेनार्धर्चेन दक्षिणजुहूमुद्गृह्य अर्धर्चान्तरेण सव्येनोपभृतं निगृह्णाति (तै० सं० १।१।१३ इत्यत्र भट्टभास्करः)। **निगृह्णाति नीचैर्गृह्णाति**। ब्रह्मणैवात्मानमुद्गृह्णाति ब्रह्मणा भ्रातृव्यं निगृह्णाति (तै० सं० ५।४।७)। **उद्गृह्णाति उन्नयति उन्नमयति**। **निगृह्णाति अवनमयति, नीचैः करोति विधेयी करोति**। ये त्वामुत्पथमारूढं न निगृह्णन्ति सर्वशः (रा० ३।४१।६)। **निगृह्णन्ति वारयन्ते, प्रतिषेधन्ति**। निगृह्यानुयोगे च (पा० ८।२।९४)। **स्वमतात् प्रच्यावनं निग्रह इति वृत्तिः**।

**—चर्** (**चर गतिभक्षणयोः**)। पुरूणि बभ्रो नि चरन्ति मामव (ऋ० ६।१०७।१९)। **न्यवचरन्ति नीचीनं चरन्ति बाधन्त इत्यर्थः**। नमो निचेरवे (काण्व सं० १७।२)। **नितरां चरति विचरतीति निचेरुः**।

**—तॄ** (**तॄ प्लवनतरणयोः**)। निदंनिदं पवमान नि तारिषः (ऋ० ९।८०।५)। **नितारिषः=विनाशय**। पुर आयसी नितारीत् (ऋ० २।२१।८)। **नितारीत् न्यतारीत् उदजासयत्, नितान्तमनाशयत्**।

**—दह्** (**दह भस्मीकरणे**)। जातवेदसे सुनवाम सोममरातीयतो नि दहाति वेदः (ऋ० १।९९।१)। **निदहाति नितरां दहति**। **लेट्**।

**—दा** (**डुदाञ् दाने**)। या गौः सुदोहा भवति न तां निददीत (माधवनिदानव्याख्यायां मधुकोशाख्यायां १।४ इत्यत्रोद्धृतं भट्टारहरिचन्द्रवचनम्)। **निददीत निदानेन बध्नीयात्**।

**—दिश् (दिश अतिसर्जने)।**···शचीं शुचिप्राज्यपरिच्छदां सः । न्यदिक्षतोपस्करणे ··· (जै० कु० ३।४०) ॥ **न्यदिक्षत=आदिशत ।** अहं निदेशं भवतो यथोक्तमनुपालयन् (रा० २।३४।४४) । **निदेश आदेशः ।** किं स्मृतोसि महाराज निदेशो दीयतामिति (कथा० १२३।३५) । **उक्तोऽर्थः ।**

**·· दृ (दॄ विदारणे)** । दरी कन्दर निर्दरान् (रा० २।५४।४२) । **निर्दरा विदीर्णपाषाणसन्धयः ।**

**—धा (डुधाञ् धारणपोषणयोः)** । नि त्वा दधे वरेण्यं दक्षस्येळा (ऋ० ३।२७।१०) । **निदधे आहितवती ।** नि त्वा दधीत रोदसी यजध्यै (ऋ० ६।१५।१५) । ते घेदग्ने स्वाध्यो ये त्वा विप्र निदधिरे नृचक्षसम् ( ऋ० ८। १९।१७) । **आधानसंस्कारेण स्थापयन्ति ।** पदे पदे मे जरिमा नि धायि (ऋ० ५।४१।१५) । **स्तुतिरकारीत्यर्थः । प्रशस्तिरुपाहारीति यावत् ।** रामः सीतागतं स्नेहं निदधे तदपत्ययोः (रघु० १५।८६) । **निदधे निहितवान् संक्रमितवान् ।** मानं निधाय विकृतं परिधाय वासः (सौन्दर० ७।४८) । **निधाय संन्यस्य ।** निधाय स्वान्यायुधानि ( ऐ० ब्रा० ७।१९ ) । **निधाय परित्यज्य संन्यस्य ।**

**—धाव् (धावु गतिशुद्धयोः)** । नीव हि मनुष्या धावन्ति (तै० सं० ६। १।१।६) । **निधावन्ति भ्रमन्ति ।**

**—धृ (धृञ् धारणे)** । यः ककुभो निधारयः (ऋ० ८।४१।४) । **निधारयति स्थिराः करोति । उपस्तभ्नाति ।** अस्मे रयिं नि धारय (ऋ० १०।२४। १) । **निधारय नितरां स्थापय ।**

**—ध्यै (ध्यै चिन्तायाम्)** । तस्मात्कुमारं जातं संवदन्त उप वै शुश्रूषते नि वै ध्यायतीति (ऐ० ब्रा० ३।२) । **पाठकात्स्न्यायेहानुवादः । अर्थस्तु निर्दिष्टचरः ।** तं सूतिकागृहनिविष्टमथो निदध्युः ( शा० दि० वि० २।८१ ) । **निदध्युः=ददृशुः ।** नि त्वा यज्ञस्य साधनम् । अग्ने होतारमृत्विजम् । वनुष्वद् देव धीमहि (तै० ब्रा० २।७।१२।६) । **निधीमहि नितरां ध्यायेम ।**

**—नी (णीञ् प्रापणे)** । ग्रामादनिर्णयनमसम्पातं च सुरायाः (कौ० अ० २।२५।३) । **निर्णयनं बहिर्नयनम् ।**

**—नृत् ( नृती गात्रविक्षेपे )** । तं तमिति निनृत्तिः । अन्तस्तृतीयमहर्नीव वा अन्तं गत्वा निनृत्यति (शां० ब्रा० २०।४) । **निनृत्तिरावृत्तिः । निनृत्यति आवर्तते ।**

—पक्ष् (पक्ष परिग्रहे) । अग्नेः पक्षतिस्सरस्वत्यै निपक्षतिः (तै० सं० ५।७।२१) । निकृष्टा पक्षतिर्निपक्षतिः । पार्श्वबङ्क्रीणां द्वितीया ।

—पत् (पत्लृ गतौ) । ततो वेगात्खमुत्पत्य निपत्य च मृगारिणा (दुर्गा० ३।१५) । निपत्य = अवतीर्य । विपोथिता निपातेन गदया भुवि शेरते (दुर्गा० २।५७) । निपातेन निपातनेनेति नागेशः । गदया कृतेनेति सम्बन्धः । निपातः प्रहार आघातः । कांश्चिन्निपातभाज (नि० ७।१३) । निपातः सन्निपातः । निपातशब्दः शुद्धोपि सम्पूर्वार्थे द्रष्टव्यः । साधारणस्तुतित्वादिति महेश्वरः ।

—पद् (पद गतौ) । एतावदुक्त्वा धृतराष्ट्रो न्यपद्यदन्तर्वेश्म सहसोत्थाय राजन् (भा० वन० ४।२२) । अन्तर्वेश्म न्यपद्यत् (न्यपद्यत) गृहेऽन्तरशेत ।

—पा (पा पाने, पा रक्षणे) । इमे शंसं वनुष्यतो निपान्ति (तै० ब्रा० २।८।५।६) । निपान्ति नितरां पान्ति रक्षन्ति । शास्त्रप्रतप्ता निपिबन्ति चान्ये (वामनपु० १०।४३) । निपिबन्ति नितरां पिबन्ति । निपतन्तीति पाठान्तरम् । निपाने महिषं रात्रौ (रा० २।६३।२१) । नीचैरवतीर्य पीयतेऽत्रेति नद्यवतारस्थलम्, तीर्थमिति यावत् ।

—बाध् (बाधृ लोडने) । उच्छ्वञ्चस्व पृथिवि मा नि बाधथाः (ऋ० १०।१८।११) । मा निबाधथा मा निबाधिष्ठा मा निपिपीडः ।

—भुज् (भुजो कौटिल्ये) । निभुजति जानुशिरसी (प्रतिमायाः) (पा० १।२।६६ सूत्रे भाष्ये) । निभुजति कुटिलो करोति, वक्रयति । निशब्दो धात्वर्थानुवादी ।

—भृ (भृञ् भरणे) । अनेन दत्तानि वनीयकेषु भुक्ताश्च भोगा निभृताश्च भृत्याः (रा० ६।१०६।२२) । निभृता नितरां पोषिता भक्तादिदानेन । निभृतात्मजभृत्यदाराः (दुर्गा० ४।१४) । उक्तोऽर्थः । निभृतैर्व्यपत्रपन्ते दयितानुशयैर्मनस्विन्यः (विक्रम० ३।१६) । निभृतैर्गुप्तैरशब्दोक्तैः । तिरोहितैरिति यावत् । तथाभूतां दृष्ट्वा···विराटस्यावासे स्थितमनुचितारम्भनिभृतम् (वेणी० १।११) ।। निभृतमवरुद्धं प्रच्छन्नम् आकारसंवृत्या । जैत्रं हीन्द्र निभृतं मनस्तव (ऋ० १।१०२।५) । निभृतमव्याकुलं शान्तम् ।

—मन्थ् (मन्थ बिलोडने । यदु दुग्धनिधिं निमथ्य देवैर्मृदुसारः समकर्षि पूर्णचन्द्रः । स बभूव कृशो वियोगतप्तेश्वरमूर्धोष्मपरिक्षरच्छरीरः (स्कन्द० का० ४।४४।५) ।। निमथ्य नितरां मथित्वा ।

—मिञ् (डुमिञ् प्रक्षेपे) । अक्षानिव श्वघ्नी नि मिनोति तानि (अथर्व० ४।१६।५) । निमिनोति प्रवपति । काले निमीयते सोमः (सौन्दर० १।१५) । निमीयते लूयते । तव द्यावापृथिवी पर्वतासोऽनुव्रताय निमितेव तस्थुः (ऋ० ३।३०।४) । निमितेव निखाता इव । निश्चला इत्यर्थः । नित्यः समास इवेन ।

—मिह् (मिह सेचने) । गौर्यत्राधिष्कन्ना न्यमेहत् (तै० सं० २।२।८। २) । नितरां मेहति मूत्रयति ।

—मृज् (मृजू शुद्धौ) । न्यु शीर्षाणि मृड्ढ्वम् (तै० सं० १।६।३।१) । नितरां शोधयध्वम् । पुरस्तान्निमार्ष्टि (आश्व० गृ० १।२४।१४) । अङ्गुलिगतं लेपमपनयतीत्यर्थः । निशब्दोऽपस्योपसर्गस्यार्थे । अपनयनपूर्वकं शोधनमभिप्रेतम् । यथा अप नः शोशुचदघमित्यत्र ।

—मे (मेङ् प्रणिदाने) । रसा रसैर्निमातव्याः (मनु० १०।९४) । गुडादयो घृतादिभिः परिवर्तनीया इत्यर्थः ।

—यम् (यम उपरमे) । अर्वाग् रथं नि यच्छतम् (ऋ० ८।३५।२२) । अर्वागस्मदभिमुखे नियच्छत निरुन्द्धम् । न किष्ट्वा नि यमत् सुते (ऋ० ८।५।८) । न कश्चिद् रुणद्धीत्यर्थः । न कथचन सङ्कीर्णः प्रकृतिं स्वां नियच्छति (भा० अनु० ४८।४२) । सङ्करजः स्वभावं गूहितुं न शक्नोतीत्यर्थः । घृतस्य महती मात्रा पीता चाग्निं नियच्छति (सुश्रुत० उत्तर० १२।७) । नियच्छति निवारयति । यदि कामयेत वर्षुकः पर्जन्यः स्यादिति नीचा हस्तेन निमृज्याद् वृष्टिमेव नियच्छति (तै० सं० ६।४।५) । नियच्छति न्यक् पातयतीति भट्टभास्करः । स एवास्मै प्रजा नस्योता नि यच्छति (तै० सं० २। १।१।२) । नियच्छति नियमयति विधेयी करोति । नदाश्च ता (नदीः) नियच्छन्ति (भा० शां० २१९।४२) । नियच्छन्ति स्ववशे कुर्वन्ति । इत्यादि बन्धपारुष्यं शैथिल्यं च नियच्छति (काव्यादर्शे १।६०)। इत्यादि अनुप्रासोपेतं काव्यं बन्धपारुष्यं शैथिल्यं चात्मनि नियमेन धत्त इत्यर्थः । कच्चित् ते नियतः क्रोधः (रा० ३।७४।८) । नियतो निगृहीतः । समर्थस्त्वप्सरोवर्गो नियन्तुं यमिनां

यमान् (स्कन्द० का० ४।२०।३३)। नियन्तुं निराकर्तुं निरोद्धुम्। नकिरस्य शचीनां नियन्ता सूनृतानाम् (ऋ० ८।३२।१५)। शोभनानां कर्मणां नियन्ता नियामकः परिच्छेत्ता नास्ति। एतावन्त्येवास्य कर्माणीति इयत्तया परिच्छेत्तुं नार्हतीत्यर्थः। चकार नियमं तस्या मुक्तिवायया विशुद्धधीः (वृ० क० को० ६७। ७)। नियमो वारणं परिहारः। नियतिः केन लङ्घ्यते (काव्यादर्शे २।१७२)। नियतिर्दिष्टम्।

—या (या प्रापणे, प्रापणमिह गतिः)। इदं पूर्वमपरं नियानं येना ते पूर्वे पितरः परेताः (अथर्व० १८।४।४४)। इहास्यार्थान्तरन्यासाय पुनर्न्यासः। नियानं शकटम्। नीचीनं पराङ्मुखं यान्त्यनेन प्रेता इति।

—यु (यु मिश्रणामिश्रणयोः)। नि युवाना नियुतः स्पार्हवीरा (ऋ० ७। ९१।५)। नियुवानौ नियुवन्तौ संमिश्रयन्तौ युञ्जानौ।

—युज् (युजिर् योगे)। तस्मा उपाकृताय नियोक्तारं न विविदुः।... एनं नियोक्ष्यामि...तं स बर्हिर्युक्तया प्लक्षशाखया मन्त्रपुरःसरं समुपस्पृश्य नियुयोज (ऐ० ब्रा० ७।१६)। यूपे बन्धन (पशोः) नियोजनम्। नियोक्ता बन्द्धा। तां वै धारयितुं शक्तो हरस्तत्र नियुज्यताम् (रा० १।४२।२४)। नियुज्यतां सत्कारपूर्वकं व्यापार्यताम्। प्रार्थ्यतामित्यर्थः। भृश नियुक्तस्तस्यां च मदनेन मदोत्कटः (रा० ५।१८।५)। नियुक्तः प्रयुक्तः प्रेरितः।

—येष् (येषृ प्रयत्ने)। अथो खलु य एव लोहितो वा ऽऽव्रश्चनान्निर्येषति (तै० सं० २।५।१।४)। निर्येषति निर्गच्छति।

—रम् (रमु क्रीडायाम्)। स यो हास्य दानजितो लोको भवति तस्मिन्निरमते (जै० ब्रा० १।४६)। निरमते नितरां रमते। इन्द्र मा त्वा यजमानासो अन्ये नि रीरमन् (अथर्व० २०।९६।१)। अस्माकं यज्ञे समुपस्थानान्न त्वां रुधन्नित्यर्थः। वेदे ण्यन्तो रमि निवेशने गतिनिरोधने बहुशो दृष्टः। मो षु त्वामत्र बहवो हि विप्रा नि रीरमन् यजमानासो अन्ये (ऋ० २।१८।३)। उक्तोऽर्थः। सायणस्तु मा त्वां नितरां रमयन्त्वित्याह। न्येतशं रीरमत् ससृमाणम् (ऋ० ४।१७।१४)। निरीरमत् न्यरीरमत् निवारितवान्।

—रुध् (रुधिर् आवरणे)। स्फटिकेऽप्यन्या व्यक्तय उत्पद्यन्ते, अन्या निरुध्यन्ते (न्याय० ३।२।१० सूत्रभाष्ये)। निरुध्यन्ते नश्यन्ति। शरीरेन्द्रिय-

बुद्धिवेदनाप्रबन्धे खल्वन्यः सङ्घात उत्पद्यते ऽन्यो निरुध्यते । उक्तोऽर्थः ।

—रूपय् (रूप प्रातिपदिकाद् धात्वर्थे णिच्) । समाहितैरप्यनिरूपितस्ततः पदं दृशः स्याः कथमीश मादृशाम् (शिशु० १।३७) । अनिरूपितोऽदृष्टः ।

—लिप् (लिप उपदेहे) । धुनिश्च ध्वान्तश्च ध्वनश्च ध्वनयंश्च । निलिम्पश्च विलिम्पश्च विक्षिपः ( तै० आ० ४।२४ ) । यत्पूर्वमुपमार्ष्टि तत्कूर्चे निलिम्पति (शां० ब्रा० २।२) । निरिह धात्वर्थानुवादी ।

—ली (लीङ् श्लेषणे) । यथा निलयमायद्भिर्निलीनानि मृगद्विजैः (रा० २।४६।३) । निलीनानि अन्तर्लीनतया व्याप्तानि । निलीयमानैर्विहगैर्निमीलद्भिश्च पङ्कजैः ।...ज्ञायतेऽस्तं गतो रविः (रा० ४।२८।५२) ।। निलीयमानैर्नीडेषु गच्छद्भिः ।

- वप् (डुवप बीजसन्ताने) । अयं छेदनेऽपि । अन्यं ते अस्मन्नि वपन्तु सेनाः (ऋ० २।३३।११) । निवपन्तु निघ्नन्तु इति सायणः ।

—वह् (वह प्रापणे) । नि पेदव ऊहथुराशुमश्वम् (ऋ० ७।७१।५) । गरीयान् गण्डुकः तण्डुलभारो न निवहति दम्यः (हर्ष० उ० ७) । इमं भारं गन्तव्यदेशं न वहतीत्यर्थः ।

—वा (वा गतिगन्धनयोः) । तेषामृतूनां शतशारदानां निवात एषामभये स्याम (शां० गृ० ४।१८।१) ।

—विद् (विद ज्ञाने) । कुमारपितृमेषाय वृक्षमूले निवेदयेत् (सुश्रुत० उत्तर० ३६।२) । बलिं हरेदित्यर्थः । घण्टा च देवाय बलिं निवेद्यः (सुश्रुत० २८।६) । शूरान्संपततश्चान्यान् कालरात्र्यै न्यवेदयन् (भा० सौ० १।८४) । न्यवेदयन् उपाहरन् । पृथिव्याश्च निवेदनम् ( रा० १।३।२५ ) । द्वीपसमुद्रादिसंनिवेशकथनम् ।

—विश् ( विश प्रवेशने ) । करणायतनेषूग्रा बाह्याभ्यन्तरेषु च । निविशन्ते यदा दोषास्तदा मूर्च्छन्ति मानवाः (सुश्रुत० उत्तर० ४६।१) ।। निविशन्ते प्रविशन्ति । निविष्टाः स्थिता भवन्ति । यदा च निविशते ( जलौकाः ) (सुश्रुत० १।१३।१८) । निविशते लगति लग्ना भवति । सजति संसक्ता भवति । यथार्थिकार्थो वाक्यार्थे न निविशते । तथा कार्यमपि (मङ्गलादि-

प्रयोजनमपि) न निविशेत ( सर्व० सं० पात० पं० ७८ )। न निविशते प्रवेशं स लभते। कालेनोदेति सूर्यः काले निविशते पुनः (अथर्व० १८।५४।१)। श्रुत्यर्थस्तु निर्दिष्टपूर्वः, प्रवेशविशेषोऽस्या न निर्दिष्ट इति स निर्दिश्यते। निविष्टे मृता पत्नी नष्टा वाऽग्निहोत्रं कथमग्निहोत्रं जुहोति (ऐ० ब्रा० ७।१०)। विवाहादूर्ध्वमग्निहोत्रे निविष्टेऽनुष्ठातुमुपक्रान्ते सतीति सायणः। तन्न। निविशिर्दारक्रियापूर्वके गार्हस्थ्याश्रयणे वर्तते। तेन निविष्टे कृतविवाहे गृहीभूते सति इति व्यवहारानुगोऽर्थः। भर्तुः प्रिया धर्मपरा निविष्टाः ( रा० ५।५ १६)। निविष्टा ऊढाः। महाकुले निवेष्टव्यम् (भा० अनु० १०४।३६)। उपरेषु शब्देषु संप्रविष्टेषु वा गेह निवेशनं वा ( आश्व० गृ० ४।.।७ )। निर्दिष्टचरस्यार्थस्योपपादनायात्र पुनर्न्यासः। निवेशनशब्देनात्र संवेशनं शयनस्थानमुच्यते। उपसर्गव्यत्ययोऽत्र द्रष्टव्यः। उक्तं च नैरुक्तैः—निरित्येष समित्यस्य स्थान इति वृत्तिकारो नारायणः। निवेशे हि वृत्ते संवत्सरे संवत्सरे द्वौ द्वौ मासौ समाहित आचार्यकुले वसेद् भूयः श्रुतमिच्छन्निति श्वेतकेतुः (सत्या० श्रौ० २६।४।३२)। निवेशो विवाहः, दारकर्म। निवेशः शिबिरोद्वाहविन्यासेष्वित्यमरः। रात्रीव शाला जगतो निवेशनी (अथर्व० ९।३।१७)। निवेशनी विश्रमस्थानम्।

—वृ (वृङ् संभक्तौ)। निवरा कन्या (नौ वृ धान्ये पा० ३।३।४८ इत्यत्र प्रत्युदाहरणम्)। निश्चितं व्रियत इति निवरा।

—वृज् (वृजी वर्जने)। नि यद् वृणक्षि श्वसनस्य मूर्धनि शुष्णस्य चिद् व्रन्दिनो रोरुवद्वना ( ऋ० १।५४।५ )। निवृणक्षि विक्षिपसि। वना वनानि उदकानि।

—वृत् (वृतु वर्तने)। शीर्षन्नि च वर्तते परि च (तै० ब्रा० १।५।६।५)। वपनीयानां केशानां स्थापनीयेभ्यः शिखागतकेशेभ्यः पृथक् करणं निवर्तनमिति सायणः। न निर्वर्तिष्यते लोके वृत्तान्तो वर्तनेष्विह (हरि० ३।२।४३)। न निर्वर्तिष्यते नितरां न वर्तिष्यत इति नील०। वर्तनेषु आचारेषु।

—व्यध् (व्यध ताडने)। नमः सहमानाय निव्याधिने (काण्व सं० १७।२)। नितरां विध्यति हन्ति शत्रून् इति निव्याधी।

—व्ये (व्येञ् संवरणे)। निवीतं मनुष्याणाम् (प्रशस्तमिति शेषः) (तै० सं० २।५।११।१)। उभावपि बाहू न्यग्भूतौ वीयेते तस्मिन्।

—शम् ( शम लक्ष आलोचने ) । पुनर्वृद्धिभयात् किञ्चिदनिवृत्तं ( भयम् ) निशामयेत् ( भा० शां० १४०।३५ ) । निशामयेत् पश्येत्, जानीयात् ।

—शास् (शासु अनुशिष्टौ) । नि देवीर्देवेभ्यो यज्ञमशिषन् (तै० सं० ३। ५।६) । न्यशिषन् (देवानाम्) विषेयमकुर्वन् ।

—शुच् ( शुच ज्वलन इति निघण्टुः ) । तदाहुर्नि शोचति (छां० उ० ७। ११।१) । निशोचति नितरां तपति ।

—शृ (शृञ् हिंसायाम्) । नि शृणीह्याबाध यो नो अस्ति (तै० ब्रा० २। ४।७।३) । नितरां शीर्णं कुरु ।

— शो (शो तनूकरणे) । पुरू सहस्रा नि शिशामि साकम् (ऋ० १०।२८। ६) । निशिशामि तनू करोमि, हिनस्मि ।

— श्रम् ( श्रमु तपसि खेदे च ) । यस्त्रयोदश वर्षाणि गदया कृतनिश्रमः (भा० शल्य० ५८।१९) । निश्रमो व्यायामः ।

—श्रि (श्रिञ् सेवायाम्) । निजनिकेतनं न्यशिश्रियम् (दशकु० पृ० २४४ ) । न्यशिश्रियं निश्चितमाश्रयम् । तस्यार्थवादरूपाणि निश्रिताः स्वविकल्पजाः ।···प्रवादाः···( वा० प० १।८) ।। उक्तोऽर्थः । निश्रेणिस्त्वधिरोहणी इत्यमरः ।

—सच् (षच समवाये) । अरिष्यन्तो नि पायुभिः सचेमहि (ऋ० ८।२५। ११) । निसचेमहि नितरां समवेता भवेम ।

—सद् (षद्लृ विशरणगत्यवसादनेषु) । नि पवर्ता अद्मसदो न सेदुः (ऋ० ६।३०।३) । निषेदुः=निश्चलाः स्थिताः, न्यविशन्त । कर्मभिर्मृत्युमृषयो निषेदुः प्रजावन्तो द्रविणमिच्छमानाः (न्याभा० ४।१।६०) । निषेदुः प्रापुः । मृत्युः संसारः । त्वां यज्ञेष्वृत्विजं चारुमग्ने नि षेदिरे (ऋ० १०।२१।७) । निषेदिरे निसादयन्ति नियमेन स्थापयन्ति । योनिष्ट इन्द्र निषदे अकारि (ऋ० १।१०४।१) । निषदे उपवेशनाय, आसिकायै । का ते निषत्तिः (ऋ० ४।२१।९) । निषत्तिः, निषदनं स्थितिः ।

—सिच् (षिच क्षरणे) । लक्ष्मीरार्ये निषिक्ता चतुरुदधिपयःसीमया सार्धमुर्व्या (सा० द० ६।११० इत्यत्र विवरणे) । निषिक्तार्पिता ।

—सिव् (षिव गत्याम्)। अथो सेधन्निषेधौ पापवस्यस्यैवोति ध्यै च नि-विद्ध्यै च (जै० ब्रा० २।१४३)।

—सृज् ( सृज विसर्गे )। तदा निसृष्टा सा पूर्वं गच्छ त्वं पतिना सह ( हरि० २।५१।२८ )। निसृष्टा आज्ञप्ता। शपथवाक्यानुयोगमनिसृष्टं कुर्वतः ( कौ० अ० ३।२०।१७ )। अनिसृष्टम् अननुज्ञातम् अनधिकृतम्। स्वनमनि-सृष्टोपजीविनम् (कौ० अ० २।१२।२१) अनिसृष्टोपजीवी य अन्यत्र वनस्थेभ्यः (कौ० अ० २।१२।३२)। अनिसृष्टमननुज्ञातम्। निसृष्टार्थं ततस्तस्मै मृत्युं निससृजु सुरा (कथा० ४५ ९०)। निसृष्टार्थं सन्दिष्टार्थं न्यस्तार्थम्। हिते-ष्वभिरता भर्तुर्निसृष्टा सर्वकर्मसु (रा० ४।५३।१०)। निसृष्टा दक्षा इति भूषणम्। एवं स्वभावं ज्ञात्वासां प्रजापतिनिसर्गजम् (मनु० ९।१६)। निसर्गः सर्गः सृष्टिः।

—स्तन् (स्तनगदी देवशब्दे)। निष्टनिहि दुरिता बाधमाना (ऋ० ६। ४७।३०)। हे दुन्दुभे शब्दं कुर्वित्याह।

—स्त्यै (ष्ट्यै शब्दसङ्घातयोः)। यो वै स्वार्थेतां यतां श्रान्तो हीयते उत स निष्टचाय सह वसति ( तै० सं० ६।२।४ )। निष्ट्याय स्वग्रामान्नि-र्गत्य।

—स्था (ष्ठा गतिनिवृत्तौ)। निष्ठां नयतु तावत्तु (रा० ३।५।२२)। भूषणधृतः पाठः। निष्ठा समाप्तिः। स्वप्रतिज्ञां पूरयत्वित्यर्थः।

—स्पृश् ( स्पृश संस्पर्शने )। य एते (अक्षरे) निस्पृशेत् वज्रं निस्पृशेत् (जै० ब्रा० १।११३)।

—स्पन्द् ( स्पदि ईषच्चलने )। आर्षोऽयं दैवनिष्पन्दो यस्त्वामभिग-मिष्यति (रा० ३।५५।३४)। निष्पन्दः सम्बन्ध इति भूषणम्। स्नेहबन्ध इति तिलकः।

—स्वृ (स्वृ शब्दोपतापयोः)। अम्ब नि ष्वरेत्याह (तै० सं० ६।४।४)।

—हन् ( हन हिंसागत्योः )। तस्माद् ब्राह्मणाय नापगुरेत न निहन्यान्न लोहितं कुर्यात् ( तै० सं० २।६।१०।२ )। निहन्यात् ताडयेत्। निहतार्थत्व-मुभयार्थस्य शब्दस्याप्रसिद्धेऽर्थे प्रयोगः (सा० द० ७)। भूवदनाभ्यां पृथङ् निहते

लम्बे (आर्य० २।८)। निहते गुणिते इति भटदीपिका। तां शङ्कुना शङ्कू-नतिमानन निहत्य (आर्य० २।१५)। उक्तोऽर्थः।

—हा (ओहाङ् गतौ)। न्यस्मै देवी स्वधिति जिहीते (ऋ० ५।३२।१०)। देवी द्योतमाना द्यौः। अस्मा इन्द्राय। निजिहीते नीचैर्गच्छति। निहीनोऽपसदो जाल्मः (इत्यमरः)। नि वो वना जिहते यामनो भिया (ऋ० ५।५७।३)। निजिहते ऽवनमन्ति न्यञ्चन्ति, कम्पन्ते।

—हृ (हृञ् हरणे)। निहारं नि हरामि ते (तै० सं० १।८।४)। नियमेन नितरां निर्हृत्य वा समुदायाद् हरणं निहरणम् (इति भट्टभास्करः)। निहारो मूल्यं मूल्येन क्रेतव्यः पदार्थश्चेति (वा० सं० ३।५०) उवटमहीधरौ।

—ह्नु (ह्नुङ् अपनयने)। तद्वै मा तात तपति पापं कर्म मया कृतं तदहं निह्नुवे (ऐ० ब्रा० ७।१७)। निह्नुवे परिहरामि, निष्कृतिमस्य करोमि। गार्हपत्यायैव निह्नुते (तै० सं० १।५।८।३)। निह्नुते प्रह्वी भवति, छादयति वा त्वमेवोपस्थेय इति। (भट्टभास्कर)। सायणस्तु निह्नुते ऽपलपतीत्याह।

—ह्वे (ह्वेञ् स्पर्धायां शब्दे च)। इन्द्रावतो ऽवसे नि ह्वये वः (ऋ० १०।१०१।१)। यदेवैनानि शसन्ति इन्द्रमेवैतै र्निह्वयन्ति (ऐ० ब्रा० ६।१८)। निह्वयन्ति नियमेनाह्वयन्ति। अश्विनाववसे नि ह्वये वाम् (तै० सं० २।४।३।७)। उक्तोऽर्थः।

(न्याङ् (नि+आङ्)

—ईर् (ईर गतौ)। ये त्वे कामं न्येरिरे (ऋ० ८।१६।१८)। न्येरिरे नितरां प्रेरयन्ति। यं देवा दूतमरतिं न्येरिरे (ऋ० ८।१६।२१)। न्येरिरे प्रेरयन्ति प्रस्थापयन्ति विसृजन्ति।

# अधि

—इ (इक् स्मरणे)। यस्याश्वो मेधाय प्रोक्षितोऽध्येति (तै० ब्रा० ३।६।१७।४)। अध्येति स्मरति। यं वा नाध्येति (तै० सं० २।३।१२।२) उक्तोऽर्थः।

—ऊह् (ऊह वितर्के)। तत्सलोकतायां यजमानमध्यूहति (शां० ब्रा० ११।६)। अध्यूहति निवेशयति स्थापयति। इदमहममुं यजमानं पशुष्वध्यूहामि (पञ्च० ब्रा० १।२।६)। उपरि स्थापयामि। क्षत्रमेव तद् विश्यध्यूहति। तस्मात् क्षत्रियो विश्यध्यूढः (जै० ब्रा० २।१४०) उक्तोऽर्थः। स ह दीक्षमाण एव ब्राह्मणतामभ्युपैति यत्कृष्णाजिनमध्यूहति (ऐ० ब्रा० ७।२३)। अध्यूहति आच्छादयति। यदुपर्युपरि बर्हिः प्रस्तरं हरन्ति यजमानमेव तत् प्रजास्वध्यूहन्ति (जै० ब्रा० १।८६) अध्यूहन्ति ऊर्ध्वं कुर्वन्ति उन्नमयन्ति।।

—कृ (डुकृञ् करणे)। सम्प्रति निपातोदाहरणप्रसङ्गेनोपमालक्षणं वक्तुमधिकरोति (नि० ।१३।१) इत्यत्र स्कन्दस्वामी)। अधिकरोति प्रस्तौति, प्रारभते। किमन्धस्याधिकारोऽस्ति रूपभेदोपलब्धिषु (काव्यादर्शे १।८)। अधिकारः सामर्थ्यम्।

—क्रम् (क्रमु पादविक्षेपे)। यो वा अग्निं चितं प्रथमः पशुरधिक्रामति (तै० सं० ५।४।४।१६)। अधिक्रामति आरोहति।

—क्षिप् ( क्षिप प्रेरणे )। तीक्ष्णैरुभयतो भागैस्ततो दोषमधिक्षिपेत् (सुश्रुत० उत्तर० १५।१२)। अधिक्षिपेत् निर्हरेत्। परस्परकक्षीकृतपक्षाधिक्षेपदक्षो वादो वचनोपन्यासो विवादः (स्याद्वाद० १०, हैमः)। अधिक्षेपो दूषणं निराक्रिया।

—धा (डुधाञ् धारणपोषणयोः। अधि श्रवांसि धेहि नस्तनूषु (ऋ० ३।१९।५)। अधिः सप्तम्यर्थानुवादी।

—मिह् (मिह सेचने)। स्त्रियं दासीमधिमेहयतां पूर्वः साहसदण्डः (कौ० अ० २।३६।४१)। अधिमेहयतामधिचरतामनार्यं व्यवहरताम् मैथुन्यमाचरताम्।

—वच् (वच व्यक्तायां वाचि, ब्रूञ आदेशो वा)। तत्रा न इन्द्रावरुणाधि वोचतम् (ऋ० ७।८३।२)। अस्मत्पक्षपातवचनौ भवतमित्याह।

—वप् (डुवप बीजसन्ताने)। अधि च वपते (दृषदि तण्डुलान्) (तै० सं० १।६।६)। अधिवपते निधत्ते।

—वस् (वस आच्छादने)। तार्प्यं च कृत्त्यधीवासे चाश्वं संज्ञपयन्ति (तै० ब्रा० ३।९।२०।१)। अधीवास उपरितन आच्छादनपटः।

**—वह् (वह प्रापणे)** । इदमपीतरद् वक्ष एतस्मादेव व्यूढं काये (नि० ४।१६।१) । अध्यूढमुपश्लेषितमिति दुर्गः ।

**—श्रि (श्रिञ् सेवायाम्)** । आलोकयामास हरिर्महीधरानधिश्रयन्तीर्गजताः परःशताः (शिशु० १२।५०) । अधिश्रयन्तीर् आरोहन्तीः । पथि व्रजन्त्यः करिणीरधिश्रिताः (पारिजात० ६।१४) । अधिश्रिता आरूढाः । तत्रेदं विश्वं भुवनमधिश्रितम् (काठक० १८।१) । अधिश्रितमर्पितं स्थितम् ।

**—स्कन्द् (स्कन्दिर् गतिशोषणयोः)** । गौर्यत्राधिष्कन्ना न्यमेहत् (तै० सं० २।२।८) । न्यमेहत् बहुतरं मूत्रयति । अधिष्कन्ना सन्धिनी, वृषभारूढा । पिता यत् स्वां दुहितरमधिष्कन् (ऋ० १०।६१।७) ।

**—स्था (ष्ठा गतिनिवृत्तौ)** । स सर्वभयनिर्मुक्तः सम्भवानधितिष्ठति (भा० अनु० ६४।११) ।

## अध्यव (अधि+अव)

**—सो (षो अन्तकर्मणि)** । कर्तुं समाध्यवस्यति (शिवपु० २।४।१३।१४) । निश्चिनोतीत्यर्थः । देवक्षेत्रं वा एषो ऽध्यवस्यति यः सोमस्योद्गायति (जै० ब्रा० १।८४) । अध्यवस्यति नियतमाप्नोति, निश्चितं विन्दति । देवयजनमध्यवसाय (ऐ० ब्रा० ७।२०) । अध्यवसाय निश्चित्य । इह य एष मनुष्यः प्रेक्षापूर्वकारी भवति स बुद्धया तावत् कञ्चिदर्थं सम्पश्यति । सन्दृष्टे प्रार्थना । प्रार्थनायामध्यवसायः (पा० १।४।३२ सूत्रे भाष्यम्) । अध्यवसायो दृढः प्राप्तिसंकल्पः ।

## अध्याङ् (अधि+आङ्)

**—रुह् ( रुह् बीजजन्मनि )** । अधिकार्थवचनम् अध्यारोपितार्थवचनम् (पा० २।१।३३ सूत्रवृत्तौ)। असन्नेव बुद्धया समारोपितो योऽर्थस्तस्य वचनम् ।

**—वस् ( वस निवासे )** । यथा रामां भुवं कश्चिदध्यावसति पुण्यकृत् (तन्त्रवा० १।३।३) । अधिवसत्येवार्थः । नार्थ आङा ।

## अधिनि (अधि+नि)

**—धा (डुधाञ् धारणपोषणयोः)** तानधिनिधाय परिचार्यं चरेत् (पञ्च० ब्रा० १३।४।१७) । अधिनिधाय रथमारोप्य ।

## अपि

—इ ( इण् गतौ ) । ब्रह्मैव सन्ब्रह्माप्येति (बृह० उ० ४।४।६) । ब्रह्माप्येति ब्रह्माभिसंविशति, ब्रह्मणि लीयते। अथा पितृन् सुविदत्रानपीतन (तै० सं० १।८।५) । अपीतन=अपि इतन=अपीत=अनुप्राप्नुत, एकी भवत इति भट्टभास्करः ।

—धा (डुधाञ् धारणपोषणयोः) । अथो यज्ञस्यैव छिद्रमपिदधाति (तै० सं० १।७।३) । अपिदधाति पिदधाति छादयति पूरयति । वधार्थं रावणस्येह पिहितं पुरुषोत्तमम् (रा० ६।११६।१७) मत्पुत्रत्वेनाच्छादितम् ।

—नह् (णह बन्धने) । एकशङ्खास्तदा नार्यो गवेधुकपिनद्धकाः (हरि० ३।३।३७) । पिनद्धका अलङ्काराः ।

—नी (णीञ् प्रापणे) । अग्नि वै पथिकृत् पथामपिनेता । स एवैनं यज्ञ-पथमपिनयति (श० ब्रा० १२।२।६।१) ।

—सृज् (सृज विसर्गे ) । सोमोंशून् पुनरपि सृजति (तै० सं० ६।४।४) । पुनरपि सङ्घात एकी करोतीत्यर्थः ।

## अति

—अर्ह् (अर्ह पूजायाम्) । बृहस्पते अति यदर्यो अर्हति (तै० सं० १।८। २२।२) । अत्यर्हति=अतिक्रम्यार्हति ।

—इ (इण् गतौ) । राजा (=सोमः) पवित्रमत्येति (ऋ० ६।८५।६) । दशापवित्रमतिक्रम्य गच्छति । ब्रह्मा देवानां पदवीः कवीनामृषिर्विप्राणां महिषो मृगाणाम् । श्येनो गृध्राणां सोमः पवित्रमत्येति रेभन् (तै० सं० ३।४।११) ॥ पवित्रान्नक्तकान्निश्च्योतति प्रस्रवति । अतीत्य मर्त्याननुपेत्य देवान् सृष्टाव-भूतामिव भूतधात्रा (सौन्दर० ४।६) । अतीत्य अतिक्रम्य अतिशय्य । पराव-रयोगे ल्यप् । आजग्मुः परमं क्षोभमत्ययेष्विव सागराः (मात्स्यपु० १३८।४) । अत्ययः प्रलयः । तयोः (अग्निहोत्रयोः) एतदेवात्ययनम्—अस्तमिते पुरा तमि-स्रायै सुव्युष्टायां पुरोदयात् (जै० ब्रा० १।६) ।

—काश् (काशृ दीप्तौ)। दिश्वतीकाशान् करोति (तै० सं० ६।१।१)। अतीकाशा द्वाराणि। भित्तौ छदिषि वाऽतीत्य व्यवधानं काशन्त इति।

—कृ (डुकृञ् करणे)। यदतिकरोति यन्नापि करोति (तै० सं० ६।६।२।१)। अतिकरोति अनपेक्षितमतिरिक्तं करोति।

—क्रम् (क्रमु पादविक्षेपे)। त्वां तु सत्यादतिक्रान्तं हनिष्यामि सबान्धवम् (रा० ४।३०।८२)। सत्यादतिक्रान्त सत्यात्प्रच्युतमपेतम्। अकर्मकोऽत्रातिक्रमिः।

—क्रीड् (क्रीडृ विहारे)। त एनमत्यक्रीडन् (तै० ब्रा० १।६।७)। द्यूतक्रियया देवनेनात्यशेरतेत्याह।

—गम् (गम्लृ गतौ)। परगृहमतिगतायाः षट्पणः (दण्डः) (कौ० अ० ३।४।३)। स्वगृहमतिक्रम्य गतायाः।

—नम् (णम प्रह्वत्वे शब्दे च)। विधूय निद्रां योगेन निशामप्यतिनामयेः (सौन्दर० १४।२०)। अतिनामयेः परिणमयेः। गमयेः क्षपयेः।

—निद् (णिदृ णेदृ कुत्सासन्निकर्षयोः)। अति वा एता वर्त्रं नेदन्ति (तै० सं० १।६।८।१)। अतिनेदन्ति अतिक्रामन्ति।

—नी (णीञ् प्रापणे)। याभिरिन्द्रमनयन्नत्यरातीः (काण्व सं० ११।१)। अत्यनयन् अतिक्रम्यानयन्। अन्तपालो वा दुर्गसम्प्रदानेन बलैकदेशमतिनीय विश्वस्तं घातयेत् (कौ० अ० १२।५।२५)। अतिनीय प्रतिसंहृत्य, पृष्ठतः कृष्ट्वा। तदवरुद्धदेशमतिनीय विश्वस्तं घातयेत् (कौ० अ० १२।५।२७)। उक्तोऽर्थः। संसिद्धमेवास्य रात्रियागे वनयागे वनक्रीडायां वा प्रवृत्तायां तीक्ष्णा विशस्याभित्यक्तमतिनयेयुः (कौ० अ० ५।२।६५)। अतिनयेयुः= देशान्तरं प्रापयेयुः। प्रवृत्तस्य कालातिनये (सत्या० श्रौ० २२।२।६)। अतिनयोऽतिक्रमः।

—पत् (पत्लृ गतौ)। यदि शिंशपा वृक्षत्वमतिपतेत् स्वात्मानमेव जह्यात् (सर्व० सं० बौ० पं० १८)। अतिपतेत् अतिक्रामेत्, अतीयात्। अतिपातिषु रोगेषु (सुश्रुत० १।५।२०)। आशुकारिषु अथवा बन्धकालादिनियमं व्यभिचरत्सु।

—पद् (पद गतौ)। यदाप्ते प्रवती: कुर्युरतिपद्येरन् (पञ्च० ब्रा० १५।६।३)। अतिपद्येरन् दूरं गच्छेयुः। यद्वै पुत्रोऽतिपादयते पिता वैतस्य शमयिता पिता निषेद्धा (जै० ब्रा० १।१४४)। अतिपादयते=अतिक्रमं करोति। देवा वा आदित्यस्य सुवर्गस्य लोकस्य पराचोऽतिपादादबिभयुः (तै० ब्रा० १।२।४।२)। अतिपादोऽतिगमनम्। पराचः पुनरावृत्तिरहितादूर्ध्व-भाविनः। देशकालातिपत्तौ वा स्वयं गृहीत्वोपहरेत् (कौ० अ० ३।१६।११)। अतिपत्तिरतिक्रमोऽत्ययः।

—पाल् (पा+लुक्, रक्षणार्थे)। शालिग्रामाभिधाने भगवतः क्षेत्रे कञ्चित्कालमतिपालयामि (प्र० च० ५)। अतिपालयामि गमयामि नयामि क्षपयामि।

—पॄ (पॄ पालनपूरणयोः)। सिन्धुं न नावा दुरिताऽति पर्षि (तै० ब्रा० २।४।१।५)। अतिपर्षि अतितारयसि, पारं नयसि।

—प्रच्छ् (प्रच्छ ज्ञीप्सायाम्)। नक्षत्रमतिपृच्छन्तं बालमर्थोऽतिवर्तते (कौ० अ० ९।१४२।४)। अतिपृच्छन्तमतिशयेन पृच्छन्तम्।

—मन् (मन ज्ञाने)। प्रजापतिः सविता भूत्वा प्रजा असृजत। ता एनमत्यमन्यन्त (तै० ब्रा० १।६।४)। अत्यमन्यन्त अवाजानन्, अवज्ञां कृतवत्यः।

— यज् (यज देवपूजासंगतिकरणदानेषु)। यः स्वां देवतामतियजते (तै० सं २।५।४।४)। अतिक्रम्य देवतान्तरं यजत इत्याह।

—याच् (टुयाचृ याच्ञायाम्)। अतियाच्ञा तु जीयेत दौर्मत्याविनयेन वा (कौ० अ० ३।१३।३७)। अतियाच्ञाऽत्यधिकनिर्वेशस्य मार्गणम्।

—युज् (युजिर् योगे)। ग्राम्यातियोगात् (माधव० २६।७)। मैथुनाति-सेवयेत्युक्तं भवति।

—लभ् (डुलभष् प्राप्तौ)। तस्य परिचारकजनं वाग्दण्डपारुष्यातिलब्धं मार्गेत (कौ० अ० ४।७।१४)। अतिलब्धं परुषं व्यवहृतं तीक्ष्णं वा दण्डि-तम्।

—वच् (वच परिभाषणे, ब्रूञ आदेशो वा)। यो नात्युक्तः प्राह रूक्षं प्रियं वा (भा० शां० २९९।१७)। अत्युक्तो निन्दितः स्तुतो वा।

—वद् ( वद व्यक्तायां वाचि )। अति वै मो ऽवादीरिति होचुर्यो नो भूयसः सतः पूर्वो ऽ प्राक्षीः (जै० ब्रा० १।१२२)। अत्यवादीः=अतिक्रम्यावादीः, अनिन्दीः। कामदानमतिमात्रमेकस्यातिवादं च वर्जयेयुः ( कौ० अ० ४।१।५६ ) । परिभवोपघातकुत्सातिवादांश्चैषु न प्रयुञ्जीत ( कौ० अ० ७।१६।२२) । अतिवादो धिक्कारः ।

—वह् (वह प्रापणे) । कार्यमदेशेनातिवाहयति (कौ० अ० ४।६।१५)। अतिवाहयति निर्वाहयति ।

— वृत् (वृतु वर्तने) । रामं दर्शय मे शीघ्रं पुरा मेऽर्थोऽतिवर्तते (रा० ७।१०५।२) । अतिवर्तते ऽतिक्रामति, अत्येति । कालम् इति शेषः ।

—शंस् (शंसु स्तुतौ) । तदाहुः कस्मात्स्तुतमनुशस्यते कस्मात्स्तोममतिशंसन्ति ( शां० ब्रा० २८।१० ) । स्तोमात्परेण किमिति शस्त्रमुदीर्यत इति पृच्छन्ति ।

—शी (शीङ् स्वप्ने) । रत्नातिशयप्रकाशाभ्यर्थनं (वर्जयेत्) (कौ० अ० ५।४।१०) । अतिशयो विशिष्टः प्रसादः । प्रासादशोभातिशयालुभिः पथि प्रभोर्निवासाः पटवेश्मभिर्बभुः (शिशु० १२।६३) । प्रासाद०=प्रासादशोभातिशायनशीलैः ।

—सृ ( सृ गतौ ) । शकृता यस्तु संसृष्टमतिसार्येत शोणितम् (सुश्रुत० उत्तर० ४०।५७) । गूढदण्डातिसारणम् ( कौ० अ० १।१६।३३ ) । इति दूतस्य कर्मोक्तम् । अतिसारणं छद्मना देशान्तरे सङ्क्रमणम् ।

—सृज् ( सृज विसर्गे ) । ते नमसिता होतारमतिसृजन्ते ( शां० ब्रा० १३।१ ) । अतिसृजन्ते अतिसृजन्ति अनुजानन्ति । तच्छ्रेयो रूपमत्यसृजत् क्षत्रम् ( बृह० उ० १।४।११ ) । अत्यसृजत् अतिशयेनासृजत् । ब्राह्मणेभ्यश्चात्मानमतिसृजेत् ( कौ० अ० १०।३।३७ ) । अतिसृजेत् परिदद्याद् अर्पयेत् । स चेदाचारक्रमं दर्शयेन्न विक्रेतारं तस्य द्रव्यस्यातिसर्गेण मुच्येत ( कौ० अ० ३।१६।१३ ) । अतिसर्गेण प्रत्यर्पणेन । तं राजा दूष्यद्रव्योपभोगातिसर्गेण दूष्ये विक्रमयेत् (कौ० अ० ५।१।१६) । अतिसर्गोऽनुज्ञानम् ।

—स्था ( ष्ठा गतिनिवृत्तौ ) । अत्यतिष्ठद्रणे भीष्मो विधूम इव पावकः (भा० भीष्म० ४६।४५) । अत्यतिष्ठत् (इतरान्) अतिक्रम्यातिष्ठत् ।

—हन् (हन हिंसागत्योः)। तदेतत् सृष्टम् (अन्नम्) पराङ् अत्यजिघांसत् (ऐ० उ० १।३)। अत्यजिघांसत् अतिक्रम्य गन्तुमैच्छत्। इह हन्तिर्गत्यर्थः। स यथा कुमारो वा महाराजो वा ऽतिघ्नीमानन्दस्य गत्वा शयीत (बृह० उ० २।१।१९)। अतिघ्नीम् अतिशयम्, परां काष्ठाम्।

—हृ (हृञ् हरणे)। न प्रत्यञ्चमक्षमध्वर्युः। सोमग्रहमतिहरति (श० ब्रा० ५।१।२।१७)। अतिहरति नयति। अतिशब्दः प्रत्यङ्नयनमतिक्रमो भवतीति द्योतनाय। न च देशकालोपभोगच्छलेनातिहरेयुः (कार्याणि) (कौ० अ० ३।२०।२२)। न प्रत्यादिशेयुरित्यर्थः।

अत्याङ् (अति+आङ्)

—धा (डुधाञ् धारणपोषणयोः)। अथ स्त्रीभ्यः पुमांसं तद्वीर्येणात्यादधाति (श० ब्रा० ७।५।२।१४)। अत्यादधाति उपरि दधाति। जमदग्निर्ह वै माहेनानां पुरोहित आस। तान् ह वित्तेनात्यादधौ। त उ हैनमुपजिहिंसुः (जै० ब्रा० १।१५२)। वित्तेन भूरिदक्षिणामार्गणेनोद्वेजयामासेति वाक्यार्थः। आधिर्मानसी व्यथा भवति। अत्याधिरनल्पा सा। ततस्तस्मिन्मुनिसुते हृते ऽत्याहितशंसिभिः (स्कन्द पु० का० ४।१२।६५)। अत्याहितं महदनिष्टम्।

—सृ (सृ गतौ)। अत्यासारिण्यध्वर्योर्नाशुका स्यात् (तै० सं० ६।५।४)। अत्यासारिणी अत्यासारवती वृष्टिः। धारासम्पात आसारः।

—हृ (हृञ् हरणे)। अत्याहारितमर्थं वा स्वयं परमुखेन वा (कौ० अ० ८।५।२६)। अत्याहारितम् अतिमात्रया कररूपेणात्तम्।

अतिवि (अति+वि)

—आप् (आप्लृ व्याप्तौ)। अलक्ष्ये लक्षणगमनमतिव्याप्तिः।

## सु

—इ (इण् गतौ)। प्र यद् भरध्वे सुविताय दावने (ऋ० ५।५९।४)। सुविताय सुप्राप्तव्याय। उकारस्य उवङादेशश्छान्दसः। नास्माल्लोकात् स्वेतव्यम् (तै० सं० ६।१।१)। स्वेतव्यं शोभनमेतव्यम्।

—धा (डुधाञ् धारणपोषणयोः)। केशश्मश्रु वापयित्वा मांसमाषलवण-

वर्जमश्नीतो यजमानः पत्नी चासुहितौ (वाराहश्रौ० १।१।२।२)। असुहितौ= अतृप्तौ। सुह चक्यर्थे इति धातो र्वा निष्ठायां रूपम्।

—सद् (षद्लृ विशरणगत्यवसादनेषु)। सुषदा (आसन्दी)। सुष्ठूपवेशनयोग्या।

—स्था (ष्ठा गतिनिवृत्तौ)। उच्छ्वञ्चमाना पृथिवी सु तिष्ठतु (अथर्व० १८।३।५१)। सुतिष्ठतु सुस्थिरा भवतु।

—हा (ओहाङ् गतौ)। परातरं सु निर्ऋतिर्जिहीताम् (ऋ० १०।५९। १)। सुजिहीतां सुतरां गच्छतु अपैतु।

## उद्

—अच् (अचु गतिपूजनयोः)। अथ या घृतकुल्या तस्यै हिरण्ययाः पुरुषा हिरण्ययैः चमसैः सर्वान्कामानुदचिरे (जै० ब्रा० १।४२)। उदचिरे उदब्तवन्तः। अत्रैव (१।४४) उदचन्त, उदाचीरिति प्रयोगौ स्थितौ।

—अज् (अज गतिक्षेपणयोः)। अवीरघ्नीरुदजन्त्वापः (अथर्व० १४।१। ३९)। उदजन्तु निः सरन्तु।

—अञ्च् (अञ्चु गतिपूजनयोः)। ते नो गोपा अपाच्यास्त उदक् त इत्था न्यक् (ऋ० ८।२८।३)। उदक् उदीच्याः (दिशः)।

—अन् (अन प्राणने)। ऋचा प्राणिहि यजुषा समनिहि साम्नोदनिहि (शां० गृ० ६।२४।२)। उदनिहि उदानाख्यः श्वासस्ते प्रेर्तामित्याह।

—अव् (अव रक्षणगतिकान्त्यादिषु)। यज्ञेयज्ञे न उदव (ऋ० ५।५। ६)। उदव उच्चै रक्ष। उरु नः शर्म यच्छेत्युक्तं भवति।

—अंश् (अंश विभाजने)। इन्द्र स्थातर्हरीणां नकिष्टे पूर्व्यस्तुतिम्। उदानंश शवसा न भन्दना (ऋ० ८।२४।१७)॥ उदानंश संबिभजे साधारणीचक्रे।

—अश् (अशू व्याप्तौ)। को वो महान्ति महतामुद् अश्नवत् (ऋ० ५।

५६।४)। उदश्नवत् व्यश्नवत् व्यश्नुवीत प्राप्नुयात्। अश्नवत् इति पञ्चमे लकारे रूपम्।

—अस् (असु क्षेपणे)। प्रह्लादो ह वै कायाधवः। विरोचनं स्वं पुत्रमुदास्यत् (तै० ब्रा० १।५।१०।७)। उदास्यत् हस्तेनोद्धृत्य भूमावपातयत्। प्रजापति वै प्रजाकामस्तपोऽतप्यत। स हिरण्यमुदास्यत् (तै० ब्रा० ३।११।८।६)। उदास्यत् उदपादयत्।

—इ (इण् गतौ)। उदिते ऽनुदिते वा (जुहोति) (वाराहश्रौ० १।४।२।६)। ऋकार उदये कण्ठ्यौ (ऋक् प्रा० ११।११)। उदये=परभूते। उदेति उपरि आगच्छतीत्युदयः परः। प्राणमेवानु प्रयन्ति प्राणमनूद्यन्ति (तै० स० ६।५।८)। उद्यन्ति समापयन्ति। अनुः सहार्थे। स गिरिमुदैत् (ऋ० सं० २।३।३।१)। उदैत् ऊर्ध्वमगच्छत्, उदपतत्।

—इङ्ग् (इगि गतौ)। आनशे व्यानश इति त्रिरुदिङ्गयति (तै० ब्रा० १।१।८।६)। उदिङ्गयति ऊर्ध्वं चलयति।

—ईक्ष् (ईक्ष दर्शने)। जहास शक्रं च शनैरुदैक्षत (भा० आदि० १६७।१६)। उदैक्षत उच्चक्षूर्भूयालोकयत्। व्रीडादनु देवीमुदीक्ष्य मन्ये संन्यस्तदेहः स्वयमेव कामः (कु० ७।६७)। उक्तोऽर्थः। तव मौनमुदीक्ष्य माधवो भविता काकुवचःपरायणः (पारिजात० ३।१६)। उदा नार्थः।

—ईर् (ईर गतौ)। अग्निर्वा इतो वृष्टिमुदीरयति (तै० सं० २।४।१०।२)। उदीरयति ऊर्ध्वं गमयति (आहुतिभिः)। वृष्टिमुदकम्। उदीरयामास सलीलमक्षान् (रघु० ६।१८)। उदीरयामास प्रोवाप प्रचिक्षेप। अग्निमुदर्यमुदीरयति (चरक० वि० ३।४२)। उदीरयति वर्धयति। लोभात् क्रोधः प्रभवति परदोषैरुदीर्यते (भा० शां० १६३।७)। उदीर्यते उद्दीप्यते। तिसृभिस्त्वमवस्थाभिर्महिमानमुदीरयन् (कु० २।६)। उदीरयन् उद्भावयन् प्रकटयन्। सर्वं तु दुःखं मम लक्ष्मणेदं शान्तं शरीरे वनमेत्य शून्यम्। सीतावियोगात्पुनरप्युदीर्णम् (रा० ३।६३।६)॥ उदीर्णमुत्थितम्। समुत्पपाताथ सदस्युदीरितो द्विजातिमुख्यैर्हविषेव पावकः (रा० ५।५७।२)। उदीरितः प्रेरित उद्दीप्तः।

—उब्ज् (उब्ज आर्जवे)। इन्द्रो वृत्रमहन्। तस्य शीर्षकपालमुदौब्जत् (तै० सं०)। उदौब्जत् उत्तानमभवत्।

—ऊह् ( ऊह वितर्के ) । ते ऽब्रुवन् । सर्वं वा अयमिदं प्रधक्ष्यति । एनमूर्ध्वमुदूहामेति (जै० ब्रा० २।५) । उदूहाम उन्नयाम । ते ऽपामूर्ध्वं रस-मुदौहन् । उदनयन्नित्यर्थः ।

—ऋ (ऋ गतिप्रापणयोः) । उन्नो वीराँ अर्पय भेषजेभिः (ऋ० २।३३।४) । उदर्पय उत्थितान् गदान्निर्गतान् कुरु । उल्लाघान् सम्पादय ।

—कल् (कल विल क्षेपे) । गाव उत्कालितपुंस्का वाहाय च विक्रयाय च स्त्रिय एवावशिष्यन्ते । कः पुनरर्हत्यग्राम्याणां पुंस उत्कालयितुं ये ग्रहीतुम-शक्याः कुत एव वाहाय च विक्रयाय च ( पा० १।२।७३ सूत्रे भाष्यम् ) । उत्कालितपुंस्काः=निष्कासितपुम्भावाः ।

—कष् ( कष हिंसायाम् ) । सीरोत्कषणसुरभि गन्धमाघ्राय चोर्व्याः (पूर्वमेघ० १६) । उत्कषणमुत्खननम् ।

—कृ (डुकृञ् करणे) । कृषिं सुसस्यामुत्कृधि (काठक० २।३) । उत्कृधि उत्कृष्टां कुरु । उत्करिकोपनाहैश्च स्वेदयेन्मृदुभिः क्षणम् (चरक० चि० १७।८०) । उत्करिका स्फोटादीनां विपाकाय कृतो लेपविशेषः ।

—कृत् (कृती छेदने) । यथा श्रान्तोऽविमुच्यमान उत्कृत्येत (ऐ० ब्रा० ६।२३) । उत्कृत्येत हीयेत क्षीयेत ।

—कृष् (कृष विलेखने) । मत्तान् गिरितटोत्कृष्टान्… । वारणान्… (रा० ४।१३।११)। उल्लिखितगिरितटान्नित्यर्थः । उत्कृष्टपर्णकमलां…पद्मिनीमिव (रा० ५।१९।१६) । उद्धृतपत्रपद्मामित्यर्थः ।

—क्लिद् (क्लिदू आर्द्रीभावे) । गौरवं शीतमुत्क्लेदो रोमहर्षोऽतिनिद्रता (माधव० २।१३) । उत्क्लेदः श्लेष्मनिष्ठीवनम् ।

—क्लिश् ( क्लिशू विबाधने ) । गुरुता हृदयोत्क्लेशः सदनं छर्द्यरोचकौ (सुश्रुत० उत्तर० ३९।३७) । हृदयोत्क्लेशो हृद्गता तीव्रवेदना । स्नेहस्वेदै-स्तथोत्क्लेश्य वपुषः शोधनैर्मलः (अष्टाङ्ग० सूत्र० १८।५९) । उत्क्लेश्य पतनो-न्मुखं कृत्वा ।

**—क्षिप्** ( क्षिप प्रेरणे )। उत्क्षिप्य तर्जनीम्। **ऊर्ध्वीकृत्य, उन्नमय्य, उदञ्च्य।**

**—गद्** (गद व्यक्तायां वाचि)। तदेतत्सर्वं मदिरारसगद्गदोद्गदितमिवाभासते (स्याद्वाद० १३, हेमः)। **उद्गदितमुल्लपितम्।**

**—गम्** (गम्लृ गतौ)। उज्जयिन्याः प्रस्थितो माहिष्मत्यां सूर्यमुद्गमयति ( हेतुमति चेतिसूत्रे चित्रीकरणे प्रापि इति वार्तिके वृत्तिस्थमुदाहरणम् )। **सूर्योद्गमनं प्राप्नोति। माहिष्मतीप्राप्तिकालेऽस्य सूर्य उदयत इत्याश्चर्यमिति वाक्यार्थः।**

**—गुह्** (गुहू संवरणे)। शाखामुद्गूहति···यजमानस्येति। इषे त्वा (तै० सं० १।१।१ इत्यत्र भट्टभास्करः)। **उद्गूहति उपगूहति।**

**—गॄ** (गॄ निगरणे)। कृत्वाप्यनन्यसामान्यमुल्लेखं नोद्गिरन्ति ये (कथा० ७८।११५)। **नोद्गिरन्ति वाचा न व्याहरन्ति नोदीरयन्ति।** प्रलपन्निव सोन्मादमुज्जगार मनोगतम् ( कथा० ८६।६५ )। **उज्जगार विववार।** क्वणितं मरणायोक्तं पराजयाय प्रवर्तनं कोशात्। स्वयमुद्गीर्णे युद्धे ज्वलिते विजयो भवति खड्गे (व० बृ० सं० ५०।५)॥ **उद्गीर्णे उद्गते निर्गते।** ससंवृतद्वारवती चत्वरोद्गारहासिनी ( हरि० १।५४।५६ )। **मथुरा विशिष्यते।**

**—ग्रह्** (ग्रह उपादाने)। बाहू उद्गृह्णाति सुवर्देवाँ अगन्म (बौ० श्रौ० ११।११)। **उद्गृह्णाति उद्यच्छति उन्नयति।** तान्यत्राद् गृह्णीयात् (ऐ० ब्रा० ७।३३)। **उद्गृह्णीयादूर्ध्वं धारयेत्।** ब्रह्मणैवात्मानमुद्गृह्णाति (तै० सं० ५।४।७)। **उद्गृह्णाति उच्छ्रितं करोति।** प्रजापतिः प्रजा असृजत सोऽताम्यत्। तस्मै वाग्ज्योतिरुदगृह्णात् (पञ्च० ब्रा० १०।३।१)। **उदगृह्णात् उत्कृष्य गृहीतवती।**

**—घृष्** (घृषु संघर्षे)। उद्घर्षणं तु विज्ञेयं कण्डूकोष्ठानिलापहम् (सुश्रुत० २।१४०।१४)। **उद्घर्षणं मर्दनं संवाहनम्।**

**—चर्** (चर गतिभक्षणयोः)। यद्युच्चरेत् समापिपयिषेत् (बृह० उ० १।५।२३)। **यद्युच्चरेत् आरभेत। प्राणोपासनमिति शेषः।** तावत्तत्रोच्चचारै-

वं भारती गगनाङ्गनात् (कथा० ८०।४३)। उच्चचार उद्गता। उच्चचार पुरस्तस्य गूढरूपा सरस्वती (रघु० १५।४६)। उच्चचार व्याजहार। आदित्य-मुच्चारं करोति (तै० सं० २।३।१२।२)। उच्चारम् उच्छ्रिताचारम्, उपरि चरन्तम्।

—चि (चिञ् चयने)। वसन्तसंभृतानीह पुष्पाण्युच्चिनुते स्वयम् (कथा० ८६।१०)। उच्चिनुते संगृह्णीते।

—चृत् (चृती हिंसाग्रन्थनयोः)। चर्म चरतेर्वा। उच्चृत्तं भवतीति वा (नि० २।५)। उच्चृत्तमुत्कृत्तं (शरीरात्)।

—छद् (छद अपवारणे)। स्नापकोच्छादका वैद्याः (रा० २।८६।१४)। उच्छादका अङ्गमर्दकाः। उच्छादनं स्मुल्लेखोद्वाहनोद्वर्तनेषु चेति विश्वः।

—छिद् (छिदिर् द्वैधीकरणे)। निदानोच्छेदेन हि निदानिन उच्छेदः शक्यते कर्तुम् (पा० ३।१।९४ सूत्रे न्यासे)। उच्छेद उन्मूलनमुत्सादो विनाशः।

—जन् (जनी प्रादुर्भावे)। यतो देवा उदजायन्त विश्वे (ऋ० ४।१८।१)। उदजायन्त उदभवन्।

—जस् (जसु हिंसायाम्)। स त्वमुज्जास्यमानासु प्रजासु (रा० ७।१०४।११)। उज्जास्यमानासु हिंस्यमानासु। उच्छब्दो जासयतिना साहचर्यं द्योतयति, नार्थं विशिनष्टि। एतत्साहचर्यमपभ्रंशेऽपि लक्ष्यत इत्यव्यभिचारीदम्।

—जि (जि जये, जि अभिभवे)। तेषामग्निरेवोदजयत् (जै० ब्रा० १।१०८)। उदजयत् उच्चैरजयत्, उत्कृष्टं जयमलभत। देवा वा ओषधीषु पक्व.स्वाजिमयुः। स इन्द्रो ऽवेदग्निर्वा उज्जेष्यतीति (काठक० १२।७)। उक्तोऽर्थः। अग्नेरहमुज्जितिमनूज्जेषम् (तै० सं० १।६।४।१)। उच्छ्रित ऊर्ध्वलोकविषयो वा जय उज्जयः।

—जृम्भ् (जृभि गात्रविनामे)। सौमित्रे ननु सेव्यतां तरुतलं चण्डांशुरुज्जृम्भते (हनुमन्नाटके ५।१८)। उज्जृम्भत उदयते। उज्जृम्भमाण घनकोपसमुद्भवेन कम्पेन··· (पारिजात० ४।२१)। उज्जृम्भमाणो वर्धमानः।

— ज्वल् (ज्वल दीप्तौ)। अथाग्नि नोदज्वलत् (तै० सं० २।६।६।४)। नोदज्वलत् नोददीप्यत।

—तस् (तसि भूष अलङ्करणे)। उत्तंसयिष्यति कचांस्तव देवि भीमः (वेणी० १।२१)। उत्तंसयिष्यति संयंस्यति।

—तक्ष्(तक्ष त्वक्ष तनूकरणे)। उत्तक्षतं स्वर्यं पर्वतेभ्यः(अथर्व० ८।४।४)। उत्तक्षतम् उद्धृत्य तक्षतम् संभरतम्। स्वर्यं स्वरणार्हमायुधम्।

—तन् (तनु विस्तारे)। उत्तानय दृशं सन्तु दिशः कुवलयाकुलाः (वृ० क० म० वे० ३१, श्लो० १२३)। उत्तानय उल्लासय। ऊर्ध्वं विलोकयेत्युक्तं भवति। उत्तानेषु न कोशविग्रहबलं पद्मेषु यत्र श्रितम् (भारतभावदीपे हरि० भवि० सप्तमाध्यायस्योपक्रमे नीलकण्ठपद्यम्)। उत्तानेषु विशदेषु।

—तॄ (तॄ प्लवनतरणयोः)। तेषां श्रवांस्युत्तिर (ऋ० १।११।७)। वर्धयेत्यर्थः। जलनिधिजलमध्यादेष उत्तार्यतेऽर्कः (शिशु० ११।४४)। उत्तार्यत उद्ध्रियत उन्नीयते। तत्रावमुत्तीर्य करेणुकायाः सुवासिनीसाधितमङ्गलश्रीः (धर्मशर्म्मा० १७।१०४)। उत्तीर्य अवतीर्य। अवस्यार्थ उदः प्रयोगो व्यवहारेण समर्थनां न लभते, तेन परिहार्योऽयं व्यवहारव्यभिचारमनिच्छद्भिः।

—दस् (दसु उपक्षये)। 'उद्दासी' इति ग्रह्यादिषु (पा० ३।१।१३४) पठितम्। प्रायेण दसिरुपपूर्वः प्रयोगमवतरन्दृष्टः, क्वचिदुत्पूर्वोऽपीतीतः प्रयोगाज्ज्ञायते।

—दिश् (दिश अतिसर्जने दिशिरुच्चारणक्रिय इति भाष्यम्)। अध्यापनविधिना हि प्रवर्त्यमानो माणवकः कथं चिदध्ययनमात्रमनुतिष्ठेन्न त्वपूर्वमुद्दिशेत् (शा० दी० १।१)। उद्दिशेत् निमित्तं कुर्यात्, लक्ष्यं कुर्यात्। अपूर्वमदृष्टं प्रयोजनमनुसन्धाय नाध्ययनं प्रक्रमेतेत्युक्तं भवति।

—दीप् (दीपी दीप्तौ)। पुनस्त्वोद्दीपयामसि (अथर्व० १२।२।५)।

—दृश् (दृशिर् प्रेक्षणे)। तान्समन्तमेवोदारान् परियत्तानुदपश्यन् (ऐ० ब्रा० २।३१)। उदपश्यन् उदङ्मुखाः सन्तो दृष्टवन्त इति सायणः। उदारान् उद्धतान् इति च सः। यावदाकर्णयन्नादमुत्पश्यति वियज्जनः ( )। उत्पश्यति उदीक्षते, उच्चक्षूभूय निरीक्षते। स्थान उपसर्ग-

योगः। अमावास्यायां पूर्वमहर्भवति। उद्दृष्टम् उत्तरम् (तै० ब्रा० १।८।१०)। उद्दृष्टं शुक्ला प्रतिपद् उत्कर्षेण दर्शनस्य तत्रोपक्रमात्।

—दो (दो अवखण्डने)। बद्धे सन्दानितं मूतमुद्दितं सन्दितं सितम् इत्यमरः। उद्दितं सन्दितं बद्धम्। उच्छ्रदः समोऽर्थे। समे तूद्दानबन्धने इत्यमरः। इह गजबन्धनमुद्दानमुक्तम्। उद्दाने क्रियमाणे तु मत्स्यानां तत्र रज्जुभिः (भा० शां० १३७।१४)। उद्दानं बन्धनम्। उद्यानमिति पाठान्तरम्।

—द्रु (द्रु गतौ)। तान् पत्नीसंयाजात उपानयन्। ते तदन्तमेव कृत्वोदद्रवन् (तै० ब्रा० १।५।६।३)। उदद्रवन् तत्परित्यज्योद्गताः। श्री वै सोमः पाप्मा सुरोपयामा यदागते काले प्राञ्च. सोमैरुद्द्रवन्ति (काठक० १४।६)। उद्द्रवन्ति=उत्क्रामन्ति। अथो खल्वाहुर्यत् प्राच उद्द्रुतस्य स्कन्देत् (जै० ब्रा० १।५४)। उद्द्रुतस्य निष्क्रान्तस्य।

—धा (डुधाञ् धारणपोषणयोः)। उर्द्धि करोति (तै० सं० ५।१।६)। उद्धिरुन्नतोऽवयवः। उद्धीयत उद्धतं भवतीति।

—धृ(धृञ् धारणे)। एतद् वित्तं तदभवद्यदुद्दध्रे युधिष्ठिरः (भा० आश्व० ६५।२०)। उद्दध्रे उच्चखान।

—नी (णीञ् प्रापणे)। सोऽन्तरिक्षं यजुर्भिरुन्नीयते सोमलोकम् (प्रश्नोप० ५।४)। उन्नीयते ऊर्ध्वं नीयते। पञ्चकृत्व उन्नयेत् (शां० ब्रा० २।१)। स्थाल्या उद्धरेत् (चमसेनेति शेषः)।

—पत् (पत्लृ गतौ)। यद्युद्वा पतेत् सं वा विजेत (गौर्घर्मधुक्) (रुद्रा० श्रौ० २४।७।१६)। उत्पतेत् उत्प्लुत्य गच्छेत्। उत्पतन्तमनूत्पेतू रुमाप्रभृतयः स्त्रियः (रा० ४।३४।४)। उत्पेतुः सहसोत्तस्थुः। उत्पतन्निपतश्चापि तिष्ठन् गच्छन् पुनः पुनः (रा० ५।१२।१५)। उत्पतन् अधिरोहन् (उच्चैः स्थानानि)। निपतन् ततोऽवरोहन्। ननु चोत्पततैव वचनलोप चोदिता समः (पा० १।२।६४ सूत्रे असमासे वचनलोप इति वार्तिके भाष्यम्)। उत्पतता तत्पक्षदूषणमुपक्रममाणेनैव।

—पद् (पद गतौ)। अलाबुं वर्जयेन्नारी तथैवोत्पादिकामपि (हरि० २।७६।५६)। उत्पादिकामुपोदकीम्।

—बन्ध् (बन्ध बन्धने)। सुदेवोऽद्योद्वा बध्नीत प्र वा पतेत् (श० ब्रा० ११।५।१।८)। उद्बध्नीत उद्वद्ध्नीयात् रज्ज्वा बद्ध्वाऽऽत्मानमवलम्बयेत्।

—भू (भू सत्तायाम्)। चतुर्भिरक्षरैरनुष्टुव् बृहतीं नोदभवत् (तै० ब्रा० १।५।१२।३)। नोदभवत् पूरयितुं समर्था नाभवत्। जर्जुंलदा दिक्षु ह्युद्भूताश्च महार्णवाः (मात्स्य० १५०।२११)। उद्भूता उद्गूर्णा उच्छलिताः। तास्ते (धानाः) सन्तूद्भ्वीः प्रभ्वीः (अथर्व० १८।४।४३)। उद्भ्वीः प्रचुराः प्रभूताः।

—भृ (भृञ् भरणे)। यदी घृतेभिराहुतो वाशीमग्निर्भरत उच्चाव च (ऋ० ८।१६।२८)। उद्भरते उदीरयति सम्पादयति। वाशीं शब्दम्।

—भ्रम् (भ्रमु चलने, भ्रमु अनवस्थाने)। उद्भ्रमन्निव वेगेन विक्षिपन् रघुनन्दनः (रा० ३।६०।४)। उद्भ्रमन् उत्पतन्। उद्भ्रमः संभ्रमश्चैव गणौ ते परिचारकौ। तवाज्ञया करिष्येते लोकस्योद्भ्रमसम्भ्रमौ (मा रु० १८०।६६)॥ उद्भ्रम उन्मादः।

—मद् (मदी हर्षे)। अति जनं वा गच्छेदुद्वा माद्येत (पञ्च० ब्रा० १८।११।१०)। उन्माद्येत उन्माद्येत् उन्मादमुपेयात्। कान्ताऽस्मिन्विना कान्तां चित्तमुन्मादयन्ति मे (रा० ४।१।६७)। उन्मादयन्ति उन्मत्तमुद्भ्रान्तं कुर्वन्ति।

—मन्द् (मदि स्तुतिमोदमदस्वप्नकान्तिगतिषु)। दानाय शूरमुदमन्दिषुः सुताः (ऋ० ६।८१।१)। अभिषुताः सोमाः शूरमिन्द्रं दानायोद्धर्षयन्ति प्रोत्साहयन्ति। लोके मदिरात्मनेपदी।

—मा (माङ् माने)। तानुदमिमीत यावदग्निहोत्रमासीत्तावानग्निष्टोमः (तै० सं० १।६।६।१)। उदमिमीत तुलयोन्मितवान्।

—मि (डुमिञ् प्रक्षेपे)। यत्र यूपमुन्मिन्वन्ति (ऐ० ब्रा० २।२)। उन्मिन्वन्ति उत्खनन्ति। निपूर्वस्तु निखनने वर्तते।

—मुह् (मुह वैचित्ये)। यस्तिष्यस्तौ पुनर्वसू येषां त इमे तिष्यपुनर्वसवः। उन्मुग्धास्तिष्यादय एव विपर्यासेन दृश्यमाना बहुव्रीहिणोच्यन्ते (पा० १।२।६३ सूत्रे वृत्तिः)। उन्मुग्धा व्यामुग्धाः संशयिता भ्रान्ते विषयतां गताः। कर्तृधर्मोऽधिकरण आरोप्यते। अविविक्ता इति तु तात्पर्यार्थः।

—**मृज्** (**मृजू शुद्धौ**)। स्तोमं चेमं प्रथमः सूरिरुन्मृजे (ऋ० १०।१६७।४)। **उन्मृजे शुन्धामि, शोधयामि, संस्करोमि। उच्छ-दः शोधनस्योत्कर्षमाह।**

—**यम्** (**यम उपरमे**)। यदि कामयेतावार्षुकः स्यादित्युत्तानेन निमृज्याद् वृष्टिमेवोद्यच्छति (तै० सं० ६।४।५)। **उद्यच्छति ऊर्ध्वमाकर्षति।** इन्द्रस्य त्वा बाहुभ्यामुद्यच्छे (तै० सं० १।१।२)। **उद्यच्छे उत्क्षिपामि।** उदु ष्य देवः सविता ययाम हिरण्ययीममतिं यामशिश्रेत् (ऋ० ७।३८।१)। **उद्ययाम उद्यच्छति उद्गमयति।** प्रजापतिमुखाभिरेवैनं देवताभिरुद्यच्छति (तै० ब्रा० ३।८।११।१)। **एनमश्वमेधम्। उद्यच्छते ऽनुतिष्ठति। व्यापियते उद्युङ्क्त इति त्वक्षरार्थः।** तमृगुद्यच्छत् (तै० सं० ६।१।२)। **उद्गृह्यानयदित्यर्थः।**

—**या** (**या प्रापणे, प्रापणमिह गतिः**)। स राजा दिवमुद्ययौ (कथा० २८।६२)। **दिवमारुरोहेत्यर्थः।**

—**युज्** (**युजिर् योगे**)। यदि चोद्योजयिष्यामि भर्तारं (सुग्रीवं) रामकारणात् (रा० ५।३०।१५)। **उद्योगं कारयिष्यामीत्यर्थः।**

—**रिच्** (**रिचिर् विरेचने**)। तेषामुद्रिक्तचित्तानामभिषेकाम्बुभिः समम्। विवेको विगलत्योघेनोह्यमान इवाखिलः (कथा० ६२।५५)॥

—**लम्ब्** (**लबि अवस्रंसने**)। तस्मिन्नुल्लम्बितमृतः कोप्येकः पुरुषः स्थितः (कथा० ७५।४८)। **उल्लम्बित उद्बध्य लम्बितः।**

—**लिख्** (**लिख अक्षरविन्यासे**)। पीत्वा च मद्यमपि चेक्षुरसप्रगाढम्। निःशेषतः क्षणमवस्थितमुल्लिखेच्च (सुश्रु० उत्तर० ४७।१७)। **उल्लिखेत् वमेत्।** कृत्वाप्यनन्यसामान्यमुल्लेखं नोद्गिरन्ति ये (कथा० ७८।११५)। **उल्लेखो लेखः, उत्कीर्य लेखो वा।** इत्यौत्सुक्यकृतोल्लेखा साऽवतीर्य नभोन्तरम् (कथा० २८।५६)। **औत्सुक्यकृतोल्लेखा औत्कण्ठ्यस्पृष्टा।** आरोप्य चक्रभ्रममुष्णतेजास्त्वष्ट्रेव यत्नोल्लिखितो विभाति (रघु० ६।३२)। **यत्नोल्लिखितः प्रयत्नेन शाणे घृष्टः।** समीक्ष्योल्लेखनं वापि कारयेल्लवणाम्बुना (चरक० चि० १७।८२)। **उल्लेखनं वमनम्।**

—**वच्** (**वच परिभाषणे, ब्रूञ आदेशो वा**)। **उद्विवक्षा** या निवृत्तमधिकृत्य विचार्यते (ऐ० ब्रा० षड्गुरुशिष्योक्तिः)। **निगदव्याख्यातम्।**

—वद् (वद व्यक्तायां वाचि)। तस्माद् बृहतः स्तोत्रे दुन्दुभीन् उद्वादयन्ति (जै० ब्रा० १।१४२)। उद्वादयन्ति उच्चैर्वादयन्ति।

—वप् (डुवप बीजसन्ताने)। तान् धिष्ण्यानुद्वापयाञ्चक्रुः (श० ब्रा० ३।६।१।२७)। पर्याभावयन्, अवमूर्ध्नोऽकुर्वन्। धिष्ण्यान्कुण्डान्। व्रीहियवैस्तिलसर्षपैरपामार्गैः सदापुष्पीभिरुद्वाप्य (शां० गृ० ३।१।३)।

—वस् (वस निवासे)। तस्य धर्मविरोधेन यथा तत्क्षेत्रमुद्वसेत् (स्कन्दपु० का० ४।४६।३)। उद्वसेत् विनश्येत्, उत्सीदेत्। घोरं तालवनं दैत्यश्चरत्युद्वासयन् प्रजाः (हरि० १।५४।७५)। उद्वासयन् उज्जासयन्, उद्वर्तयन्।

—वह् (वह प्रापणे)। राज्यमुद्वक्ष्यति नृपः स्वयम् (कथा० ८६।१६)। राज्यधुरां वक्ष्यतीत्युक्तं भवति। यदीमाविदं रोहिताश्वावश्माचितं कूलमुद्वहातः (पञ्च० ब्रा० १४।३।१३)। उद्वहातः=ऊर्ध्वम् उपरि नयेताम्। अश्माचितं कूलम्। तस्योपरि शकटस्य वहनं कर्षणं दुष्करमिति यदिशब्दोऽभिसन्धौ। उद्वहात इति पञ्चमो लकारः। स यद्यनुपश्येद् उदूह्य पूर्वमपरं निदध्यात् (ऐ० ब्रा० ७।६)। उदूह्य (आहवनीयस्थानात्) उद्धृत्य। उदूह्येत्यत्र दीर्घश्छान्दसः। उद्वहन्तो महावृक्षान् (रा० ६।४।२७)। उद्वहन्त उत्क्षिपन्त उद्धरन्तः। वानरा इति शेषः।

—वृ (वृञ् वरणे, वृङ् संभक्तौ)। न खल्वगृहीतमुद्वरति रमणीयं वस्तु (हास्य० १)। उद्वरति वृणुते। विरल उदो योगो वृङा च वृञा च। उद्वृतमन्त्रो दूतप्रणिधिः (कौ० अ० १ १६।१)। उच्चैरत्यन्तं वृतो निर्धारितो मन्त्रो येन स तथोक्तः। उद्धृतमन्त्र इति पाठान्तरम्। उद्वृत्य नयने सहसा दन्तान् कटकटाय्य च (रा० ६।८०।१)। उद्वृत्य विस्फार्य। रोषेण महताविष्ट इति पाठान्तरम्।

—वृत् (वृतु वर्तने)। भीमसेनद्वितीयश्च लोकमुद्वर्तयिष्यति (भा० उ० १३७।३)। लोकं शत्रुजनमाकुलीकरिष्यतीत्याह। स्वस्थानाद् वस्तिरुद्वृत्तः (माघव० ३१।२१)। उद्वृत्त ऊर्ध्वं गतः, उत्सृप्तः।···उद्वृत्तापवृत्तफलयोनयः (सुश्रुत० सूत्र० ११।१७)। उद्वृत्तफलः स्थानादूर्ध्वंगताण्डः। ओष्ठौ रक्तावनुद्वृत्तौ (अष्टाङ्ग० शारीर० ३।११०)। अनुद्वृत्तौ बहिरनिर्गतौ। कर्पूरकरम्बितभसितोद्वर्तितसकलतनूः .(भोज० ४४ श्लोकतः परम्)। उद्वर्तिता मर्दिता। भसितं भस्म। यद्भविष्यस्तु जालान्तरुद्वर्तनविवर्तने। कुर्वन्···

(कथा० ६०।१८६) ।। उद्वर्तनमुत्पतनम् । उद्वर्तनं परिक्षेपो विक्षेपः परिवर्तनम् । विसर्पणं च हस्तस्य ( ना० शा० ४।२४७-४८ ) ।। उद्वर्तनमुत्पातनम् ।

—वेप् (टुवेपृ कम्पने) । उद्वेपमाना मनसा चक्षुषा हृदयेन च (अथर्व० ५।२१।२) । उद्वेपमाना उत्कम्पमाना भृशमुद्विजमाना ।

—व्यध् (व्यध ताडने) । दशव्याममथोद्विद्धं निष्पत्रमकरोत्तदा (भा० वन० ११।३६) । उद्विद्धमुत्पाटितम् ।

—शल् (शल गतौ) । तारुण्यवातोच्छलितां रूपाब्धेर्लहरीमिव (कथा० ५७।७५) । उच्छलिता उद्गमिता, उत्क्षिप्ता । अतिरुचिरोत्प्रेक्षा कवेः ।

—शिष् ( शिष असर्वोपयोगे ) । इन्द्रो यतीन् सालावृकेभ्यः प्रायच्छत् । तेषां त्रय उदशिष्यन्त (पञ्च० ब्रा० १३।४।७) । उदशिष्यन्त अवाशिष्यन्त अवशिष्टा अभूवन् । मा तस्योच्छेषि किंचन (तै० ब्रा० २।४।१।२) । किमपि शिष्टं माभूत् । यदाज्यमुच्छिष्यते (तै० ब्रा० १।१।६।३) । उक्तोऽर्थः ।

—श्रि (श्रिञ् सेवायाम्) । सोऽग्नि र्दिविस्पृगूर्ध्व उदश्रयत (ऐ० ब्रा० ३।४२) । ऊर्ध्व उदश्रयत ऊर्ध्व उन्नतः सन् उपरितनं देशमाश्रितवानित्यर्थः । उदु ज्योतिरमृतं विश्वजन्यं विश्वानरः सविता देवो अश्रेत् (ऋ० ७।७६।१) । उदश्रेत् उच्छ्रयति उच्चैः स्थापयति । समीपतः स्थितं तेजो बलमुच्छ्रयते भृशम् (रा० ३।६।१५)। उच्छ्रयते वर्धयति । उच्छ्रिताक्षो ललाटेन स्विद्यता भृशमार्तिमान् (चरक० चि० १७।५८) । उच्छ्रिताक्षः उच्छूननेत्रः ।

—सद् ( षद्लृ विशरणगत्यवसादनेषु ) । उदस्याग्निः सीदेत् (तै० सं० १।४।१०) । उत्सीदेत् गत एव स्यात् । स समुत्सन्नमरुणं मण्डलं कफरक्तजम् (सुश्रुत० नि० अ० १३) । उत्सन्नमुद्गतम् । उत्सन्नः सलिलनिभोऽथ पिष्टशुक्लो बिन्दुः (सुश्रुत० उत्तर० ४।१०) । उत्सन्न उच्छूनः । तेऽग्निमन्वविन्दन्नृपूत्सन्नम् (तै० ब्रा० १।३।१।१) । उत्सन्नं वेषान्तरं कृत्वा स्थितम् । शनैश्चोत्सादितस्तत्र स्नानशालामुपागमत् (भा० अनु० २०।३) । उत्सादितः चालित इति नीलकण्ठः । उद्वर्तित इति तु मम भाति । शर्करामुत्सादेन (तै० सं० ५।७।१२) । उत्साद उच्चैः प्रदेशः (मेध्याश्वस्य) । घर्मायोत्साद्यमानायानुब्रूहि ( सत्याषाढश्रौ० २४।५।४ ) । उत्साद्यमानः संसाद्यमानः । समित्यर्थ उच्छब्दो व्यत्ययेन ।

—सह् (षह मर्षणे)। यद्येतावतीं दक्षिणां नोत्सहेत (सत्या० श्रौ० २३।२।४५)। दातुमिति शेषः। नोत्सहेत न शक्नुयात्।

—सिच् (षिच क्षरणे)। अथ या एताः स्रुचो निर्णिज्योदीचीरप उत्सिञ्चति तेन ऋषीन् प्रीणाति (जै० ब्रा० १।४१)। उत्सिञ्चति उत्क्षिपति। आवर्जयति बहिर्गमयति। कूप उत्सिच्यमानो हि भवेच्छुद्धो बहूदकः (स्कन्दपु० मा० कौ० २।२।६१)। उत्सेकः परीवाह उदञ्चनमुद्धारः। कामादिरुत्सेकः स्वाः प्रकृतीः कोपयति (कौ० अ० ६।७।११)। उत्सेकोऽतिरेकः। अतिरिक्तः सेव्यमानः कामादिरित्यर्थः। पद्मं बहुरजश्चन्द्रः क्षयी ताभ्यां तवाननम्। समानमपि सोत्सेकम्... (काव्यादर्शे २।३०)। सोत्सेकं सोत्कर्षम् अधिकोत्कर्षशालि।

—सिध् (सिध गतौ)। ···त्वङ्मांससंश्रयम्। उत्सेधं संहतं शोफं तमाहुः (अष्टाङ्ग० १३।२१-२२)। उत्सेधः शोफ इत्यनर्थान्तरम्। अथोत्सेधनिषेधौ पापवस्यस्यैवोत्सिद्धयै च निषिद्धयै च (जै० ब्रा० २।१४३)।

—सृज् (सृज विसर्गे)। उच्चैः स्विष्टकृतमुत्सृजति (तै० ब्रा० १।३।१।६)। स्विष्टकृन्मन्त्रमुच्चारयतीत्यर्थः। रक्षांसि वा एतद्यज्ञं सचन्ते यदन उत्सर्जति (तै० सं० ५।२।२।१०)। अनः शकटम्। उत्सर्जति उत्सृजति सङ्क्रीडति कूजति शब्दं करोति। प्राणानामुत्सृष्टयै (तै० सं० ५।१।८)। उत्सृष्टिरुत्सर्गस्त्यागः। उत्सर्गं वै प्रजापतिरेतैः कर्मभिः स्वर्गं लोकमैत् (शां० ब्रा० ८।२)। उत्सर्गमुत्सृज्य विरम्य विरामं कृत्वा। णमुलन्तमेतत्।

—सृप् (सृप्लृ गतौ)। यां पर्यस्तमुत्सर्पेत् (चन्द्रमाः) (शां० ब्रा० ३।१)। उत्सर्पेत् उदियात्। पर्यस्तम् उपास्तमयम्। दानधर्मस्यानुत्सर्पणान्न तुष्टिमुपजगाम (अवदा० जा० २)। अनुत्सर्पणात् अवर्धनात्। अन्धो भग इत्याहुरनुत्सृप्तो न दृश्यते (नि० १२।१४।१)। अनुत्सृप्तोऽनुद्गूर्णोऽनभ्युद्यतः।

—स्था (ष्ठा गतिनिवृत्तौ)। उत् संहायास्थाद् व्यृतूंरदर्धररमतिः सविता देव आगात् (ऋ० २।३८।४)। उत्संहायास्थात् संहायोदस्थात्। (सर्वो लोकः) शय्यां परित्यज्योत्तिष्ठति। उद् विप्राणां देवया वाचो अस्थुः (ऋ० ५।७६।१)। उदस्थुरुदैरत। उदतिष्ठत रामस्य समग्रमभिषेचनम् (रा० २।१४।५४)। उदतिष्ठत उपस्थितमभूत्। उदोऽनूर्ध्वकर्मणीत्यात्मनेपदम्। कः पुनरसुराणां पराभवः प्रत्यवाययोगः, यद्योगादद्यापि नोत्तिष्ठन्ति (पस्पशायां हेलयो हेलय

इति' कुर्वन्त इत्यत्र भाष्यदीपिका) । नोत्तिष्ठन्ति न संजीवन्ति । उत्तिष्ठमानस्तु परो नोपेक्ष्यो भूतिमिच्छता (शिशु० २।१०) । उत्तिष्ठमानो वर्धमानः। चित्रं यदत्र पतितः पुनरुत्थिर्तिं न प्राप्नोति पुल्कसजनोपि किमग्रजन्मा (स्कन्दपु० का० ४।३०।७३ ) । पुनरुत्थिर्तिं पुनर्देहसम्बन्धं पुनर्भवमिति यावत् । अविशेषेण सर्वोप्यपवृज्यत इत्याह ।

—स्नै (ष्णै वेष्टने) । उष्णिगुत्स्नाता भवति (नि० ७।१२।६)। उत्स्नाता उद्वेष्टिता ।

—हन् (हन हिंसागत्योः) । यद् उद् घ्नन्तो जिहिंसिम क्रूरमस्याः (आप० श्रौ०४।५।५) । उद् घ्नन्त उच्चैः प्रहरन्तः । ददाह प्रमथानीकं वनमग्निरिवोद्धतः (मात्स्य० १४०।३८) । उद्धत उत्थित उदर्चिः ।

—हा (ओहाङ् गतौ) । उदातैर्जिहते बृहद् द्वारो देवी र्हिरण्ययीः (ऋ० ६।५।५) । उज्जिहत उद्गच्छन्ति । कथमिव बत लज्जा तस्य नैवोज्जिहीते (रुक्मिणी० १।२३) । उज्जिहीते उदयते । परितापहरां हरस्तदानीं द्युनदीं तामधुनापि नोज्जिहीते (स्कन्दपु० का० ४।४४।६) । उज्जिहीते जहाति त्यजति । अत्र ओहाङः प्रयोगे किमपि स्वातन्त्र्यं पुराणकारस्य ।

—हा (ओहाक् त्यागे) । अस्य लोकस्योद्धानाय (पञ्च० ब्रा० १८।११।१०) । उद्धानमत्यन्ताय हानं परित्यागः ।

—हृ (हृञ् हरणे) । पुरा सम्भेदाच्छायानामाहवनीयमुद्धरेत् (ऐ० ब्रा० ७।१२) । उद्धरेत् गार्हपत्यादाहरेत् । नोद्धरेत्प्रथमं पात्रं पितृणामर्घ्यपातितम् (आश्व० गृ० ४।७।१४) । नोद्धरेत् नापनयेत् (समवनयनदेशात्) । तस्मात् स्त्रियं जातां प्रास्यन्त्युत् पुमांसं हरन्ति (तै० सं० ६।५।१०) । प्राप्ते च समये तं स भोगपुष्टं धरागृहात् । उज्जहार··· (कथा० ४०।६८) ।। उज्जहार उद्धृतवान् निरकासयत् । शीघ्रमुद्ध्रियतां पादो जयार्थमिह दक्षिणः (रा० ३।३४।२२) । उद्ध्रियतामुत्क्षिप्यताम् उदच्यताम् उन्नम्यताम् । ऋमादव्याहतं प्राप्तं पुत्रैर्यन्नर्णमुद्धृतम् (याज्ञ० २।५१ मिताक्षरायामुद्धृतं नारदवचनम् । ) नोद्धृतं न विगणितम् ( ऋणम् ) । समर्घं धान्यमुद्धृत्य महर्घं यः प्रयच्छति । सहि बार्धुषिको नाम··· (स्कन्दपु० का० ४।४०।६०) ।। उद्धृत्य आदाय । समर्घमल्पमूल्यम् । शकन्ध्वादित्वात्पररूपम् । मार्कण्डेयादिभिः प्राप्य कीर्त्युद्धारं च

सत्तम (स्कन्द पु० मा० कौ० २।१२।८)। कीर्त्तेरुद्धारः प्रत्यापत्तिः। अपि ते ब्राह्मणा भुक्त्वा गताः सोद्धरणान् गृहान् (भा० अनु० ६०।१४)। स्वामिन्यागते दास्यामीति याचमानेभ्यो बालकेभ्य आशाप्रदर्शनमुद्धरणमिति नीलकण्ठः।

—हृष् (हृष तुष्टौ)। उद्धर्षय मघवन्नायुधान्युन् सत्वनां मामकानां मनांसि (ऋ० १०।१०३।१०)। उद्धर्षय उच्चैर्हृष्टानि कुरु।

## उदव (उद्+अव)

—सो (षो अन्तकर्मणि)। ब्राह्मणो बन्धुना सहोदवस्यन्नेव क्षत्रियतामभ्युपैति (ऐ० ब्रा० ७।२४)। उदवसानीयेष्ट्या सोमयागं समापयन्नेवेत्याह। वेश्याभवने सभायामन्यतमस्योदवसिते वा···आसनबन्धो गोष्ठी (का० सू० १।४।१६)। उदवसितं गृहम्।

## उदाङ् (उद्+आङ्)

—अय् (अय गतौ)। सोऽग्नेः कृष्णो रूपं कृत्वोदायत (तै० सं० ५।२।६)। उदायत निरायत निरक्रामत्।

—इ (इण् गतौ)। असंवेपमाना अवभृथादुदायन्ति (शां० ब्रा० १९।३)। उदायन्ति उत्तरन्ति। तस्य वृत्रस्य शीर्षतो गाव उदायन् (तै० सं० २।१।४।५)। उदायन् निरगच्छन् निरक्रामन्।

—कृ (डुकृञ् करणे)। अथाहुरुदाकृत्या सा वशं चरेत् (तै० सं० ७।१।५१)। उदाकृतिरुत्सर्जनम्।

—नी (णीञ् प्रापणे)। स पत्नीमुदानेष्यन् पृच्छति केन चरसीति (श० ब्रा० २।५।२।२०)। उदानेष्यन् निष्क्रमय्य सहानेष्यन्।

—वृत् (वृतु वर्तने)। स्रोतांस्युदावर्तयति (वायुः) (माधव० २७।१४)। उदावर्तयति आवृणोति।

—हृ (हृञ् हरणे)। यत्तृतीयं छदिर्हविर्धानयोरुदाह्रियते (तै० सं० ६।२।९)। उदाह्रियते उपर्याह्रियते। अथ हास्य वेदमुपशृण्वतः त्रपुजतुभ्यां श्रोत्रप्रतिपूरणम्। उदाहरणे जिह्वाच्छेदः (गौ० ध० १२।४)। उदाहरणमुच्चारणम्।

## उद्वि (उद्+वि)

—ईक्ष् (ईक्ष दर्शने) । हंसैरुज्झितपङ्कजैरतितरां सोद्वेगमुद्वीक्षितः (मृच्छ० ५।२३) । उद्वीक्षित उच्चक्षुर्भिरीक्षितः । विर्विशेषकृन्न ।

# अभि

—क्रम् ( क्रमु पादविक्षेपे ) । अग्नि र्वा एतस्य पशूनपक्रमयति यस्य पशवोऽपक्रामन्त्यग्निरेव तस्य पशूनभिक्रमयति यस्य पशवोऽभिक्रामन्ति ( पञ्च० ब्रा० १२।४।२५ ) । अपक्रमणाभिक्रमणे प्रतिद्वन्द्विनी । अपक्रमणमपसरणमाह । अभिक्रमणं चोपसरणम् ।

—नी ( णीञ् प्रापणे ) । श्रुतिस्थिरा अप्यभिनिन्युरश्रुतिम् (नारा० ६१।३) । नाकर्णयाम इत्यङ्गचेष्टितेन दर्शयामासुः ।

—पद् ( पद गतौ ) । उष्णाश्रुता पीतकनेत्रता च पित्ताभिपन्ने नयने भवन्ति (सुश्रुत० उत्तर० ६।४) । पित्ताभिपन्ने पित्तग्रस्ते ।

—युज् ( युजिर् योगे ) । कृतपरिचयां दर्शितेङ्गिताकारां कन्यामामिषोपायतोऽभियुञ्जीत (का० सू० ५।२।१६) । अभियुञ्जीत आत्मना योजयेत् ।

—वन् (वन षण संभक्तौ) । उदा वर्धन्तामभिषाता अर्णाः (ऋ० ५।४१।१४) । अभिषाताः संभक्ताः (मर्शाङ्कः) ।

—स्वृ (स्वृ शब्दोपतापयोः) । इह त्या सधमाद्या…हरी इन्द्र प्रतद्वसू अभि स्वर (ऋ० ८।१३।२७) । अभिस्वर अस्मान् प्रत्यागच्छेति दुर्गो निरुक्तवृत्तौ ।

## अभ्यनु (अभि+अनु)

—शास् ( शासु अनुशिष्टौ ) । हन्ताहमन्यमभ्यनुशासानीति (छां० उ० ५।११।३) । अन्यमुपदेष्टारं निर्दिशानीति वाक्यार्थः ।

## अभ्यव (अभि+अव)

—नी ( णीञ् प्रापणे ) । हिरण्यमेवापो ऽभ्यवनयेत् हिरण्यमभ्युन्नयेत् (पञ्च० ब्रा० ६।६।३) । हिरण्यस्योपर्यप आसिञ्चेदित्याह ।

—अय् (अय गतौ) । असुरा वज्रमुद्यत्य देवानभ्यायन्त (तै० सं० ६।२।७।४) । अभ्यायन्त अभिमुखमागमन्, उपाद्रवन् ।

—रुह् ( रुह बीजजन्मनि ) । न श्रेयांसं पापीयानभ्यारोहति ( पञ्च० ब्रा० २।१।४) । अभिक्रामतीत्यर्थः । पृथगेव तौ भवत इत्युक्तं भवति ।

## अभिप्र (अभि+प्र)

—मृष् (मृष तितिक्षायाम्) । मा नो अग्ने सख्या पित्र्याणि प्र मर्षिष्ठा अभि विदुष्कविः सन् (ऋ० १।७१।१०) । यत्र सुपर्णाः···अनिमिषन्तो वेदनेनाभिस्वरन्तीति वा ऽभिप्रयन्तीति वा ( नि० ३।१२।१ ) । अभिप्रयन्ति=आभिमुख्येन प्रयान्ति ।

## अभिसम् (अभि+सम्)

—भू (भू सत्तायाम्) । स ऋङ्मयो यजुर्मयः साममय आहुतिमयः स्वर्गं लोकमभिसम्भवति (श० ब्रा० ११।२।६।१३) । अभिसम्भवति प्राप्नोति ।

# प्रति

—अर्थ् (अर्थ याच्ञायाम्) । अहो सुखप्रत्यर्थिता दैवस्य (विक्रम० ६) । सुखविरोधितेत्यर्थः ।

—ईक्ष् (ईक्ष दर्शने) । प्रतीक्षायै कुमारीम् (तै० ब्रा० ३।४।१।१६) । प्रतीक्षा संभावनाऽऽशास्यम् ।

—कृ ( डुकृञ् करणे ) । ततः सीतां शिरःस्नातां संयुक्तां प्रतिकर्मणा (रा० ६।११४।१४) । प्रतिकर्म प्रसाधनमित्यमरः ।

—गम् (गम्लृ गतौ) । एनसा प्रतिगतः प्रत्येनाः (आदिः प्रत्येनसि ६।२।२७ सूत्रे वृत्तौ ) । प्रत्येना नेदिष्ठी येन प्रेतस्य पित्रादेर्ऋणमपाकरणीयं भवति (१) । प्रतिभूः (२) । आगस्कृतां शासनेऽधिकृतश्च (३) ।

—ग्रह् (ग्रह उपादाने) । यद्वै ददाति विप्रेभ्यो ब्राह्मणः प्रतिगृह्य वै (भा० अनु० ६८।३०) । प्रतिगृह्य प्रतिग्रह इत्यावाय ।

—चि (चिञ् चयने)। सुदिनासु सभासु कार्यमेतत् प्रतिचिन्वीत विशेषतः स्वयं तु (पुण्यसुदिनाभ्यां क्लीवतेष्टा इत्यत्र तत्त्वबोधिन्याम्)।

—दुह् (दुह प्रपूरणे)। तस्य प्रातःसवनीयान् सोमान् प्रतिदुहा श्रीणाति (पञ्च० ब्रा० १८।४।२)। सद्यो दुग्धं पयः प्रतिधुक्। तेन प्रतिदुहा।

—दृश् (दृशिर् प्रेक्षणे)। राक्षसानां सहस्रेषु न कश्चित् प्रत्यदृश्यत (रा० ६।९०।८०)। प्रत्यदृश्यत=अभिमुखो ऽवालोक्यत।

—धा (डुधाञ् धारणपोषणयोः)। प्रजापते र्वा अक्ष्यश्वयत् तत्परापतत् ...तद् देवा अश्वमेधेन प्रत्यदधुः (पञ्च० ब्रा० २१।४।२)। प्रत्यदधुः पुनः संहितमकुर्वन्।

—पद् (पद गतौ)। अग्निमग्निम् इति प्रत्यपादि होत्रा (ऐ० ब्रा० ४।७)। प्रत्यपादि प्रारब्धम्। कियच्चिरेणार्यपुत्रः प्रतिपत्तिं दास्यतीति (शा० ३)। प्रतिपत्तिर्वार्ता। भवत्यनिष्टादपि नाम दुःसहान्मनस्विनीनां प्रतिपत्तिरीदृशी (कु० ५।४२)। प्रतिपत्तिः प्रवृत्तिराचरणम्। न मुष्टिप्रतिसन्धानं न लक्ष्यप्रतिपादनम् (रा० ६।८९।३०)। लक्ष्यप्रतिपादनं लक्ष्यभेदनम्।

—पा (पा पाने)। यवागूं प्रतिपीतस्य शोणितं मोक्षयेद् भिषक् (सुश्रुत० सूत्र० १४।२५)। प्रतिरानन्तर्ये इति डल्लनः। मात्रार्थे इत्यन्ये। यवागूपानानन्तरम् इत्यर्थः। अल्पाया यवाग्वाः पाने सतीति वार्थः।

—युध् (युध सम्प्रहारे)।...धृष्टकेतुं च चेदिपम्। मांसशोणितभृन्मर्त्यः प्रतियुध्येत को युधि (भा० उ० ८०।१३)॥ प्रतियुध्येत (तेन) सङ्ग्रामयेत। सोपसर्गको युधिः सकर्मकः।

—वस् (वस आच्छादने)। यन्नः प्रव्राजयेः सौम्य अजिनैः प्रतिवासितान् (भा० उ० ३१।१५)। प्रतिशब्दो धात्वर्थानुवादी।

—श्रि (श्रिञ् सेवायाम्)। प्रतिश्रयप्रदानाच्च (भा० अनु० ६६।२९)। प्रतिश्रयो गृहनिर्माणार्था भूमिः, वास्तुरित्यर्थः। भवांश्चाप्यार्जवपरः पूर्वं कृत्वा प्रतिश्रयम्। राजवृत्तं न लभते...(भा० अनु० १४८।३७)॥ प्रतिश्रयं साहाय्यम्।

—श्रु ( श्रु श्रवणे ) । मनुष्यसम्भवा वाचो विधर्मिण्यः प्रतिश्रुताः (भा० वन० ३।३।६) । प्रतिश्रुता अभ्युपेताः प्रतिपन्नाः । तत्र विवादो नेत्यर्थः । विधर्मिण्यो विरुद्धस्वभावाः, विप्लुतार्थाः । अनृता इत्यर्थः ।

—ष्ठिव् (ष्ठिवु निरसने) । यो ब्राह्मणं प्रत्यष्ठीवन् (अथर्व० ५।१९।३) । उपरि निष्ठीवन्नित्यर्थः ।

—सिध् (षिध गत्याम्) । विश्ववेदग्निः प्रति रक्षांसि सेधति (ऋ० ८।२३।१३) । दूरमुत्सारयतीत्यर्थः ।

—हन् (हन हिंसागत्योः) । विदन्वान्वै भार्गव इन्द्रस्य प्रत्यहन् (पञ्च० ब्रा० १३।११।२०) । इन्द्रस्य साहाय्येन (शत्रून्) प्रत्यहन् परागुदत्, दूरमुदसारयत् । तिग्मं न क्षोदः प्रति घ्नन्ति भूर्णयः (ऋ० ८।२५।१५) । प्रतिघ्नन्ति-प्रतिरुन्धन्ति वारयन्ति । सृके यत्त्वा प्रत्यहन् देव एकः (ऋ० १।३२।१२) । सृके वज्रे । प्रत्यहन् प्रतिकूलत्वेन प्रहृतवान् ।

—हृ (हृञ् हरणे) । मनसा हिङ्करोति मनसा प्रस्तौति मनसोद्गायति मनसा प्रतिहरति (पञ्च० ब्रा० ४।६।६) । प्रतिहरति प्रतिहारं साम गायति ।

## प्रत्यव (प्रति+अव)

—इ (इण् गतौ) । इति पञ्चानामह्नामनुरूपैः प्रत्यवयन्ति यथाभ्यारुह्य प्रत्यवरोहेत्तथा (पञ्च० ब्रा० १५।७।६) । प्रत्यवयन्ति पुनरवतरन्ति ।

—धा ( डुधाञ् धारणपोषणयोः ) । हृदयं प्रवृह्योत्तम प्रत्यवदधाति ( श० ब्रा० ३।८।५।८ ) । प्रत्यवदधाति प्रतिदधाति, भूयः स्वे स्थाने योजयति ।

— सो ( षो अन्तकर्मणि ) । आभीलानि प्राणिनः प्रत्यवस्यन् कालो नूनं व्याददावाननानि (शिशु० १८।७८) । प्रत्यवस्यन् अभ्यवहरन् निगिलन् ग्रसमानः । अभ्यवहारः प्रत्यवसानं भोजनं जग्धिरिति हलायुधः । गतिबुद्धि-प्रत्यवसानार्थेति सूत्रे भगवता पाणिना प्रत्यवसानशब्दो भक्षणार्थे प्रयुक्तः । साहित्ये तु दुर्लभः, तथापि कवयः पाण्डित्यप्रकर्षाभिव्यक्तये प्रयुञ्जते । तत्राप्येषोऽप्रयुक्तानां बलात्प्रयोगे प्रसिध्यतितमां कविर्माघः, यद्विषय आभणति लोकः—नवसर्गे गते माघे नवशब्दो न विद्यत इति ।

### प्रत्याङ् (प्रति+आङ्)

—इ (इण् गतौ)। अग्नीधे पयसी प्रदाय यथेतं प्रत्येत्य (सत्या० श्रौ० २४।४।४)। प्रत्येत्य प्रत्यावृत्य।

—ख्या (ख्या प्रकथने, चक्षिङ आदेशो वा)। दोषान् प्रत्याख्याय ज्वरादयो न भवन्ति (सुश्रुत० सूत्र० २४।११)। प्रत्याख्याय निरस्य परित्यज्य।

### प्रत्युद् (प्रति+उद्)

—ग्रह् (ग्रह उपादाने)। बलवद् गेयं वज्रमेषं प्रत्युद्गृह्णाति (पञ्च० ब्रा० ७।७।१०)। ऊर्ध्वं स्तभ्नातीत्यर्थः।

## परि

—इ (इण् गतौ)। कस्मात्सामान्यादिति कालानुवादं परीत्य (नि० १२।१३।३)। परीत्य परिज्ञाय।

—काल् (काल क्षेपणे)। परिकाल्य कुरून् सर्वान् शरवर्षैरवाकिरन् (भा० भीष्म० ११६।८४)। परिकाल्य पराणुद्य प्रद्राव्य।

—खन् (खनु अवदारणे)। कण्टकिक्षीरिणस्तु समूलान् परिखायोद्वासयेत् (आश्व० गृ० २।६।५)। परिखाय परित उत्खाय। परितः खननेनोत्पाट्येत्यर्थः।

—गम् (गम्लृ गतौ)। मेरुं गिरिमसङ्गेन परिगन्तुं सहस्रशः (रा० ४।६७।११)। परिगन्तुं परिभ्रमितुम्। असङ्गेन=अविलम्बेन।

—ग्रह् (ग्रह उपादाने)। अटवीपर्वताश्चैव नद्यस्तीर्थानि यानि च। सर्वाण्यस्वामिकान्याहुर्नहि तत्र परिग्रह (भा० अनु० ६६।३५-३६)॥ परिग्रहः स्वामित्वम्। अयं चाद्य मया दृष्टः परदारपरिग्रहः (रा० ५।११। ३६)। परदारा एव परिग्रहोऽवरोधः। शुभं वा यदि वा पापं यो हि वाक्यमुदीरितम्। सत्येन परिगृह्णाति स वीरः पुरुषोत्तमः (रा० ४।३०। ७२)॥ परिगृह्णाति पालयति रक्षति। उभयतोऽध्वर्युं पात्रेण परिगृह्णाति (का० श्रौ० ६।१३।११)। पात्रमादाय परिगच्छतीत्यर्थः।

—छद् (छद अपवारणे)। बाला एव तास्त्यक्त्वा वैराग्येण पितुर्गृहम्। श्मशानं शिश्रियुः पृष्टा जगदुश्च परिच्छदम् (कथा० २८।१४)॥

—तन् (तनु विस्तारे)। अहतपक्षेण (=अहतवस्त्रैकदेशेन) परितत्य (का० श्रौ० २१।३।६)। परितत्य सर्वतो वेष्टयित्वा।

—तप् (तप सन्तापे)। परितापेन समृद्धिभावम्···वाञ्छन्ति (तन्त्रा० १।१३।१५३)। परितापेन परपीडया।

—दा (डुदाञ् दाने)। जवस्ते···श्येने वात उत योऽचरत् परीत्तः(अथर्व० ६।९२।२)। रक्षणार्थं दानं परिदानम्। परीत्तः(=यो जवः) रक्षणाय दत्तः।

—धा (डुधाञ् धारणपोषणयोः)। परि वो विश्वतो दध ऊर्जा घृतेन पयसा (ऋ० १०।१९।७)। परिदधे परिपुष्णाति।

—वृत् (वृतु वर्तने)। वर्वर्ति चक्रं परि द्यामृतस्य (ऋ० १।१६४।११)। परिवर्वर्ति सततं परिवर्तते।

—श्रि (श्रिञ् सेवायाम्)। परिश्रितेषु देयः स्यान्मधुपर्क इति ध्रुवम् (गृह्यासङ्ग्रहे २)।

—सद् (षद्लृ विशरणगत्यवसादनेषु)। परिषीदन्ति परितः सीदन्त्यत्रेति परिषत्।

—स्कृ (डुकृञ् करणे, सुट्)। गोभिर्भगं परिष्कृतम् (ऋक्तन्त्रे ४।५।८)। परिष्कृतं प्रचुरम्। पर्युप भूषणप्राचुर्यवाक्येषु।

—स्पन्द् (स्पदि ईषच्चलने)। सुखसाधनानि च प्रार्थयमानः कायेन वाचा मनसा च परिस्पन्दते (यो० सू० भा० २।१५)। परिस्पन्दते चेष्टते।

—हृ (हृञ् हरणे)। अलोभशीलमपरिहार्यम् (का० सू० १।५।३३)। अपरिहार्यं परेण हर्तुं न शक्यते ऽनुरक्तत्वात्।

## उप

—आप् (आप्लृ व्याप्तौ)। तां नाम्नोपैप्सन् (मै० सं० २।१।११)।

प्राप्तुमिच्छन्ति स्म । वशोऽचिकीर्षन्नित्यभिप्रायः । तां देवा एतेन यजुषा-वृञ्जतेति श्रवणात् ।

—क्रम् ( क्रमु पादविक्षेपे ) । यत्तु सम्यगुपक्रान्तं कार्यमेति विपर्ययम् (का० नी० सा० १२।१६) । उपक्रान्तमारब्धम् ।

—ग्रह् (ग्रह उपादाने) । प्रियोपग्रहैश्च तामुपगृह्णीयात् (का० सू० ५।२।२६) । उपगृह्णीयाद्वशे कुर्यात् ।

—दा ( डुदाञ् दाने ) । दुर्वासाः सुरवनिताप्तदिव्यमाल्यं शक्राय स्वयमुपदाय (नारा० २७।१) । उपदाय उपदामुपहारं कृत्वा ।

—धा ( डुधाञ् धारणपोषणयोः ) । हृदयदेशेऽस्योर्ध्वाङ्गुलिं पाणिमुपद-धाति (आश्व० गृ० १।२१।७) । उपदधाति समीपे स्थापयति । भावदोष उपधाऽदोषोऽनुपधा (वै० सू० ६।२।४) । निगदव्याख्यातम् । यथा प्रधिर्यथो-पधिर्यथा नभ्यं प्रधावधि (अथर्व० ६।७०।३) । प्रधिर्नेमिः, तत्समीपे धीयत इत्युपधिः, नेमिसम्बद्धोऽराणां सम्बन्धको वलयः ।

—नी (णीञ् प्रापणे) । अश्वस्य पुरस्ताल्ललाट उपनये बन्धनीयः (वा० सं० २४।१ महीधरभा०) । तत्र उपनये इति सप्तम्यन्तः पाठः स्थितः । तत्र ललाटमुपनय इत्यनर्थान्तरम् ।

—पद् (पद गतौ) । क्षेत्रं हि रसवच्छुद्धं कर्मणैवोपपादितम् । ऋते वर्षान्न कौन्तेय जातु निर्वर्तयेत् फलम् (भा०) ।। उपपादितं सम्पादितं साधितं कृतम् । कर्मणा कर्षणेन वाप्यादिजलदानेन च ।

—मा (मा माने) । अस्मभ्यं चित्राँ उप माहि वाजान् (ऋ० ४।२२।१०) । उपमाहि देहि ।

—युज् ( युजिर् योगे ) । नैव प्राज्ञा गतश्रीकं भर्तारमुपयुञ्जते (भा० वन० २६७।१८) । उपयुञ्जते तत आददतेऽर्थम् । न स्वामिनं भुञ्जते ।

—वच् (व्यक्तायां वाचि, ब्रूञ आदेशो वा) । तनूपानं परिपाणं कृण्वाना यदुपोचिरे ( अथर्व० ५।८।६ ) । उपोचिरे प्रोत्साहनमुद्धर्षणं चक्रिरे । द्विता यदीं कीस्तासो अभिद्यवो नमस्यन्त उपवोचन्त भृगवः ( ऋ० १।१२७।७ ) ।

उपवोचन्त उपेत्य ब्रुवन्ति इति सायणः। यथान्यत्र ब्रुवः प्रयोग उपशब्द आधिक्यमाचष्टे तथेहापि कुतो न ? वेपि ह्यध्वरीयतामुपवक्ता जनानाम् (ऋ० ४।६।५)। उपवक्ताऽधिकवक्ता, प्रेरकः प्रोत्साहकः। उदू अयाँ उपवक्तेव बाहू (ऋ० ६।७१।५)। उक्तोऽर्थः। इष्यन्वाचमुपवक्तेव होतुः (ऋ० ६।६५।५)। उपवक्ता योऽध्वर्युं प्रतिगरं कुर्वन् प्रोत्साहयति।

—श्रु (श्रु श्रवणे)। उप नः सूनवो गिरः शृण्वन्त्वमृतस्य ये (वा० सं० ३३।७७)। उपशृण्वन्तु समीपमेत्य शृण्वन्तु।

—सद् (षद्लृ विशरणगत्यवसादनेषु)। देवानां सख्यमुप सेदिमा वयम् (वा० सं० २५।१५)। उपसेदिम प्राप्नुयाम।

—स्था (ष्ठा गतिनिवृत्तौ)। सवत्सां धेनुं वृषभं च प्रदक्षिणीकृत्योपस्थानं गच्छेत् (कौ० अ० १।१६।२४)। उपस्थानमास्थानमण्डपम्।

—हस् (हसे हसने)। न जातलोम्न्योपहासमिच्छेत् ( इदं ब्राह्मण आहृतम्)। उपहासो मैथुनम्।

उपाङ् (उप+आङ्)

—कृ (डुकृञ् करणे)। एतानि सर्वाणि स्थानानि तूर्णमुपाकुरुते (नि० ५।२५।२)। उपात्याभिमुख्येन कुरुष इत्यर्थः।

—क्रम् (क्रमु पादविक्षेपे)। ततः सत्त्वान्युपाक्राम बहूनि (भा० वन०)। उपाक्रामन् उपरि पतन्। पश्चात्तप्यसे तदुपाक्रम्य वाक्यम् (भा० सभा० ५६।१५)। उपाक्रम्य संस्मृत्य।

—ख्या (ख्या प्रकथने, चक्षिङ आदेशो वा)। यदुताहं त्वया पृष्टो वैराजात् पुरुषादिदम्। यथासीत्तदुपाख्यास्ये प्रश्नानन्यांश्च कृत्स्नशः (भा० पु० २।६।४५)॥ उपाख्यास्य वर्णयिष्ये प्रतिवक्ष्ये। ज्ञानविज्ञानयुक्तानां निरुपाख्या निरञ्जना। कैवल्या या गतिर्देव परमा सा गतिर्भवान् (भा०अनु० १६।६४)॥ निरुपाख्या द्रष्टुमशक्या। दृशोरगोचरः। द्वितीये चानुपाख्ये (पा० ६।३।८०)। उपाख्यायते प्रत्यक्षत उपलभ्यत इत्युपाख्यः। घञर्थे कविधानम्। ततोऽन्योऽनुपाख्यो ऽनुमेयः। नाचिकेतसमुपाख्यानम्। अल्पपरिमाणमाख्यानम् उपाख्यानम्।

## उपसम् (उप+सम्)

—ऊह् (ऊह वितर्के) । प्रजाभ्यस्त्वेत्युप समूहति (तैं० सं० ६।१।६) । उपसमूहति एकराशी करोति । वयांसि यदैव पक्षा उपसमूहन्ते ( श० ब्रा० १०।२।१।१) । उपसमूहन्ते प्रतिसंहरन्ते संकोचयन्ति ।

—कृ ( डुकृञ् करणे ) । जन्यार्थमन्नं द्रुपदेन राज्ञा विवाहहेतोरुपसंस्कृतं च (भा० आदि० १९४।१) । उपसंस्कृतं संस्कृतम्, सुष्ठु संस्कृतम् ।

—क्रम् ( क्रमु पादविक्षेपे ) । एतमानन्दमयमात्मानमुपसङ्क्रामति (तै० उ० २।८) । उपसङ्क्रामति प्राप्नोति ।

## उपसम्प्र (उप+सम्+प्र)

—आप् (आप्लृ व्याप्तौ) । जिघांसूनुपसम्प्राप्तान् देवान् दृष्ट्वा (भा०)।

—इ (इण् गतौ) । न हि सा विलपन्तं मामुपसम्प्रैति लक्ष्मण (रा० ३। ६२।६) । उपसम्प्रैति उपैति । नार्थः सम्प्राभ्याम् ।

इति श्रीचारुदेवशास्त्रिणः कृतावुपसर्गार्थचन्द्रिकायां सानुबन्धायां
पञ्चमः खण्डः पूर्त्तिमगात् ।

सम्पूर्णश्चायङ् ग्रन्थः ।

शुभं भूयादध्यापकानामध्यायकानां च ॥

एकायनः समुद्यच्छन्नष्टौ होरा अहर्दिवम् ।
हायनैः पञ्चभिः पूर्णैः कृतिमेतामपूपुरम् ॥ १ ॥

गच्छंस्तिष्ठन्निषीदन्वा स्वपन्वा जाग्रदेव वा ।
जक्षद्वापि पिबन्वापि कृत्यमेतद् व्यचिन्तिषम् ॥ २ ॥

अद्योदितानि पुण्यानि सिद्धानि प्रार्थितानि मे ।
दैवतानि प्रसन्नानि यदारब्धं समापिपम् ॥ ३ ॥

कार्त्स्न्याय प्रतिपाद्यस्य प्रायस्यं प्रचुरं किल ।
कियदात्तं कियच्छिष्टं प्रमाणं त्वत्र सूरयः ॥ ४ ॥

उपसर्गार्थरत्नानां मञ्जूषयं कृता मया ।
लब्धवर्गैर्महार्घाणां रूपतर्कैः परीक्ष्यताम् ॥ ५ ॥

# अथ परिबृंहणम्

**अपरेऽपि केचिदल्पे रुचिरा उपसर्गार्थयोगा ग्राह्या इतीह संगृह्यन्ते—**

## प्र

—कृ (डुकृञ् करणे)। देवाः प्रकृतसर्वाङ्गा ये म उच्छेषणं ददुः (भा० पु० ४।७।४)। प्रकृतानि प्रकृतिमापन्नानि। नूत्नोत्प्रेक्षा कवेः। अन्यत्र प्रकृतं प्रारब्धं साधितं वा भवति। क्वचित्प्रचुरमपि। प्राचुर्येण प्रस्तुतमपि यथा तत्प्रकृतवचने मयट् (५।४।२१) इत्यत्र। तैत्तिरीयिका हि समामनन्ति सत्यं ज्ञानमनन्तं ब्रह्म इति प्रकृत्य(ब्र० सू० शां० भा० २।३।२)। प्रकृत्य प्रारभ्य।

—कॄ (कॄ विक्षेपे)। प्रकीर्णका विप्रकीर्णाश्च राजन् प्रवालमुक्तातरलाश्च हाराः (भा० कर्ण० ९४।१९)। प्रकीर्णकाश्चामराणि।

—ज्ञा (ज्ञा अवबोधने)। दिशो यश्चक्र प्रज्ञानीः (अथर्व० १०।७।३४)। प्रज्ञानीः प्राग्वेदनीरित्यूहते ह्विटने भाषान्तरकारः। मम तु भाति प्रज्ञान-साधनानीन्द्रियाणीह विवक्षितानि।

—दा (डुदाञ् दाने)। कामोदकं सखि प्रत्तास्वस्रीयश्वशुरर्त्विजाम् (याज्ञ० ३।४)। प्रत्ता परिणीता। दत्तेति त्वक्षरार्थः। कामोदकं कार्यं कामे प्रेताभ्युदयकामनायां सत्यामिति मिताक्षरा।

—नी (णीञ् प्रापणे)। रामेण सार्धं मथुरां प्रणीते श्वाफल्किना मयि··· (भा० पु० ११।१२।१०)। प्रणीते नीते। प्रशब्दो धात्वर्थानुवादी।

—वह् (वह प्रापणे प्रापणमिह गतिः) प्रवहो गमनं बहिः (अमरः)। बहिर्गमनं बहिर्यात्रा।

—वे (वेञ् तन्तुसन्ताने)। प्र वयाप वयेत्यासते तते (ऋ० १०।१३०।१)। प्रवाणं भोक्तव्यप्रपञ्चस्य निर्माणम्। मूले प्रवय इति समुच्चये ऽन्यतरस्याम् (३।४।३) इत्यनेन लोट्।

—व्रज् (वज व्रज गतौ)। द्विप्रव्राजिनी (आश्व० गृ० १।५।६)। द्वौ प्रव्रजतीति। पुंश्चलीति यावत्।

—सञ्ज् (षञ्ज सङ्गे) । यदि वयं स्वतन्त्रां काञ्चित् प्रागवस्थां जगतः कारणत्वेनाभ्युपगच्छेम प्रसञ्जयेम तदा प्रधानकारणवादम् (ब्र० सू० शां०भा० १।४।३) । प्रसञ्जयेम उपस्थापयेम ।

—सिच् (षिच क्षरणे) । सकृत्प्रसिञ्चन्त्युदकं नामगोत्रेण वाग्यताः (याज्ञ० ३।५) । प्रसिञ्चन्ति परासिञ्चन्ति ।

—सू (षूङ् प्राणिप्रसवे) । तरवो भूरिवर्ष्माणः प्रासूयन्त मधुच्युतः (भा० पु० ४।१९।८) । प्रासूयन्त पुष्पफले उदपादयन्नित्यर्थः । तथा चामरः पठति—स्यादुत्पादे फले पुष्पे प्रसवो गर्भमोचने इति ।

—स्ना (ष्णा शौचे) । प्रस्ना यस्मिन्निति प्रस्नः । स्नानीयं बृहद् भाजनम् । घञर्थे क विधानं स्थास्नापाव्यधिहनियुध्यर्थम् इति स्नातेः कः ।

—वद् (वद व्यक्तायां वाचि) । पराङेव परा वद पराचीमनु संवतम् (अथर्व० ६।२९।३) । परावद दूरे वद ।

—अज् (अज गतिक्षेपणयोः) । अप ज्योतिषा तमो अन्तरिक्षादुद्नः शीपालमिव वात आजत् (ऋ० १०.६८।५) । अपाजत् अपागमयत्, अपानुदत्, अपाकरोत् । शीपालं शेवाल शैवलम् ।

—उभ् (उभ उम्भ पूरणे) । यमदूता अपोम्भत (अथर्व० ८।८।११) । अपोम्भत नियच्छत ।

## अप

—कृष् (कृष विलेखने) । धातूपप्लव आसन्ने व्यक्तं द्रव्यगुणात्मकम् । अनादिनिधनः कालो ह्यव्यक्तायापकर्षति (भा० पु० ११।३।८) । अव्यक्ताय व्यक्तकारणभूताय अपकर्षति पृष्टतः कर्षति । हारी खलूपसर्गस्य प्रयोगोऽपस्य ।

—गुह् (गुहू संवरणे) । आविष्कृणुष्व रूपाणि मात्मानमप गूहथाः (अथर्व० ४।२०।५) । माऽपगूहथा माऽपगूहिष्ठा मा तिरोधाः, मा संवृथाः, मा संवरिष्ठाः, मा संवरीष्ठाः ।

—चाय् (चायृ पूजानिशामनयोः) । इतस्ताः सर्वा नश्यन्तु वाका अपचितामिव (अथर्व० ६।२५।१) । अपचितां पूजितां पतिव्रतां स्त्रियम् (प्राप्य) ।

—वृज् (वृजि वृजी वर्जने) । सोऽयमुभयथा वर्तमानो गृह्यते—अपवृक्तो व्यपवृक्तश्च अतीतानागताभ्याम् (न्याभा० २।१।४३) । अपवृक्तः सम्बद्धः । व्यपवृक्तोऽसम्बद्धः । विर्नञर्थे ।

—वृत् (वृतु वर्तने)। सूर्यापवृत्तौ विनिवर्तते (रुक्) (सुश्रुत० उत्तर० २५।१२)। अपवृत्तिः परावृत्तिः, पश्चिमाशावलम्बित्वम्।

—सद् (षद्लृ विशरणगत्यवसादनेषु)। विप्रस्य त्रिषु वर्णेषु नृपतेर्वर्णयो-र्द्वयोः। वैश्यस्य वर्णे चैकस्मिन् षडेतेऽपसदाः स्मृताः॥ (मनु० १०।१०)। अपसदा अवसन्ना निकृष्टाः (सवर्णपुत्रकार्यापेक्षया)।

## सम्

—अस् (असु क्षेपे)। तद्यत्रैतत् सुप्तः समस्तः सम्प्रसन्नः स्वप्नं न विजानात्येष आत्मा (छां० उ० ८।११।१)। समस्तः समुपसंहृतकरणग्रामः।

—इ (इण् गतौ)। गुणानां समितिर्हि सा (भा० पु० ११।२५।८)। समितिः संनिपातः, व्यतिकरः।

—गम् (गम्लृ गतौ)। यथा नः सर्व इज्जनः सङ्गत्यां सुमना असत् (अथर्व० ३।२०।६)। संगत्यां संगमने प्राप्तौ।

—ग्रह् (ग्रह उपादाने)। आयामतो विस्तरतः स्वमानदेहेन लोकत्रय-सङ्ग्रहेण (भा० पु० ३।८।२५)। लोकत्रयसङ्ग्रहेण लोकत्रयं सङ्गृह्यत मीयतेऽत्रेति तेन देहेन। एष वै परमो योगो मनसः संग्रहः स्मृतः (भा० पु० ११।२०।२१)। सङ्ग्रहो निग्रहः संयमः।

—तन् (तनु विस्तारे)। ब्रह्मन् सन्तनु शिष्यस्य कर्मच्छिद्रं वितन्वतः (भा० पु० ८।२३।१४)। सन्तनु=संसीव्य। लोण्मध्यमैकवचने रूपम्।

—दिह् (दिह उपचये)। चतुर्विश्वरूपः प्राणः पृथग्वर्त्मात्मा सन्देहो बहुलः (छां० उ० ५।१८।२)। सन्देहो देहस्य मध्यभागः।

—पद् (पद गतौ)। एवं भगवतो रूपं सुभद्रं ध्यायतो मनः।···सम्पन्नं न निवर्तते (भा० पु० ४।८।५२)। सम्पन्नमेकत्वमापन्नं तत्र लीनम्।

—भू (भू सत्तायाम्)। न चेत्तस्य (ज्येष्ठप्राणस्य) तदानीं वृत्तिलाभः स्याद्योनौ निषिक्तं शुक्रं पूयेत न संभवेद्वा (ब्र० सू० शां भा० २।४।८)। न संभवेन्न जीववत्स्यात्। यस्ते अग्नौ महिमा तेन सम्भव (पञ्च० ब्रा० ७।७।१६)। समर्धितं प्रवृद्धं भवेति सायणः। सम्भवेति सम्पूर्वाद्भवते र्लोट्।

—भृ (भृञ् भरणे)। यथा मधु मधुकृतः संभरन्ति यथाविधि (अथर्व० ६।१।१६)। संभरन्ति संहरन्ति समाहरन्ति।

—या (या प्रापणे, प्रापणमिह गतिः) । यत्त्वं राघवनन्दनम् । वहेर्लोकस्य संयानं गच्छस्व विगतज्वरः (रा० ७।४१।८) । पुष्पकं प्रति धनदस्योक्तिः । समीचीनं यानं संयानम् ।

—युज् (युजिर् योगे) । संयुज्यस्व मया राजन्निति याज्यं सोऽब्रवीत् (बृ० दे० ५।५५) । विवाहसम्बन्धं कुरु ।

—रभ् (रभ राभस्ये) । मयि संरभ्य विपुलमदाच्छापं सुदुःसहम् (भा० पु० ४।२७।२२) । मयि संरभ्य मह्यं क्रुद्ध्वा ।

—विश् (विश प्रवेशने) । प्राणेनोदीर्य तत्राथ पुनः संवेशयेत्स्वरम् (भा० पु० ११।१४।३३) । संवेशयेत् स्थिरी कुर्यात्, व्यवस्थापयेत् ।

—शास् (शासु अनुशिष्टौ) । वीणागाथिनौ संशास्ति (आश्व० गृ० १।१४।६) । संशास्ति सम्प्रेष्यति ।

—सु (षुञ् अभिषवे) । न पूर्वदीक्षिणः संसवोऽस्ति (ऐ० ब्रा० १।३) । द्वयो र्बहूनां वा यजमानानां स्पर्धमानानां सम्भूय सोमाभिषवः संसवः (आश्व० श्रौ० ६।६।११) ।

### समव (सम्+अव)

—स्रु (स्रु गतौ) । समवस्रवे भक्तशरणं कारयेत् (आश्व० गृ० २।७।७) । येन पथाऽऽपो निर्गच्छन्ति स देशः समवस्रव इति नारायणो वृत्तिकारः ।

## अनु

—क्रम् (क्रमु पादविक्षेपे) । द्रव्यस्य त्यागो न जातेः, अमूर्त्तत्वात्, प्रतिक्रमानुक्रमानुपपत्तेश्च (न्याभा० २।२।६२) । त्यागो दानम् । अनुक्रम. संश्लेषः संयोगः । प्रतिक्रमो विश्लेषो वियोग ।

—पठ् (पठ व्यक्तायां वाचि) । श्रुतोऽनुपठितो ध्यातः (भा० पु० ११।२।१२) । अनुपठितोऽसकृत् पठितः ।

—बन्ध् (बन्ध बन्धने) । अनुबन्धः सरूपप्रजननसन्तानः (न्याभा० २।२।६२) ।

—भू (भू सत्तायाम्) । मरुतस्तत्सुतोऽपुत्रः पुत्रं पौरवमन्वभूत् (भा० पु० ९।२३।१७) । पुत्रमिवाचरदित्यर्थः ।

—वद् (वद व्यक्तायां वाचि) । पूर्वमु चैव तद्रूपमपरेण रूपेणानुवदति (पञ्च० ब्रा० १३।१।९) । अनुवदति संवदति ।

—वृत् (वृतु वर्तने)। धीमता तदनुष्ठेयं स्वास्थ्यं येनानुवर्तते (वृन्दमाधवे)। अनुवर्ततेऽविच्छिन्नं स्थिरं भवति।

## अनुसमाङ् (अनु+सम्+आ)

—हृ (हृञ् हरणे)। होतृपदनाद्धैवापि दुरुद्गीथमनुसमाहरति (छां० उ० १।५।५)। प्रतिसमादधाति, अदुष्टं करोति।

## अव

—ग्रह् (ग्रह उपादाने)। दासानो दक्षिणानवगृहाण (पञ्च० ब्रा० १।७।६)। अवगृहाण नियच्छ। दासानुर्देवविशेष इति सायणः।

—दृ (दृ विदारणे)। द्रुतावदीर्णे इत्यमरः। एतौ विलीनेऽर्थे पर्यायौ।

—धा (डुधाञ् धारणपोषणयोः)। दासा वद्ध्वा नदीतोये दृष्टिहीनमवादधुः (बृ० दे० ४।२१)। अवादधुः=अधः क्षिप्तवन्तः।

—मिह् (मिह सेचने)। नरो हितमव मेहन्ति पेरवः (ऋ० ६।७४।४)। अवस्तान्नीचैर्वर्षन्ति।

—मुच् (मुच्लृ मोक्षणे)। अवमुच्य स्ववक्षोभ्यो रुक्मं तस्मै तदा ददुः (बृ० दे० ५।७२)। अवमुच्य अवतार्य।

—सो (षो अन्तकर्मणि)। यत्कामस्तदवस्यति (भा० पु० ११।१५।५)। तस्य कामस्य परां सीमानमधिगच्छतीत्यर्थः।

—स्कन्द् (स्कन्दिर् गतिशोषणयोः)। रथादवस्कन्द्य (भा० पु० १०।३८।२६)। अवस्कन्द्य=अवप्लुत्य। नद्यवस्कन्दमुपास्पृशच्च (भट्टि० २।११)। नद्यवस्कन्दमिति णमुलन्तम्। अवस्कन्द्य=अवतीर्य।

— स्ना (ष्णा शौचे)। अन्यस्य चावस्नातं दूरतः परिवर्जयेत् (भा० अनु० १०४।५६)। अवस्नातं यत्रान्येन पूर्वं स्नातम्।

—हा (ओ हाक् त्यागे)। तुग्रो ह भुज्युमश्विनोदमेघे रयिं न कश्चिन्ममृवाँ अवाहाः (ऋ० १।११६।३)। अवाहाः=अवस्तादहासीत्।

## निस् (निर्)

—चर् (चर गतिभक्षणयोः)। तत्रैतच्चिरनिश्चरिते मनसि नोपपद्यते (न्याभा० ३।२।३१)। निश्चरिते निष्क्रान्ते।

—चि (चिञ् चयने)। निष्पूर्वश्चिनोतिः स्तेये वर्तते (पा० ३।३।५८ सूत्रे भाष्ये)।

—बन्ध् (बन्ध बन्धने)। न निर्बद्धा उपसर्गा अर्थान्निराहुः। निः पृथगर्थे। बन्धिः प्रयोगेर्थे इति स्कन्दस्वामी।

—भुज् (भुजो कौटिल्ये)। भुजोऽनवने। अनवनकौटिल्ययोरिति वक्तव्यम्। इहापि यथा स्यात्—निर्भुजति जानुशिरसी। (पा० १।३।६६ सूत्रे भाष्ये)।

—लिख् (लिख अक्षरविन्यासे)। निर्लिखेदनुसुखं जिह्वां जिह्वानिर्लेखनेन च (वाग्भटः)।

—व्यध् (व्यध ताडने)। छिद्रं निर्व्यधनं रोकम् (अमरः)। स्पष्टम्।

## वि

—इ (इण् गतौ)। पुत्रदाराप्तबन्धूनां सङ्गमः पान्थसङ्गमः। अनुदेहं वियन्त्येते स्वप्नो निद्रानुगो यथा (भा० पु० ११।१७।५३)॥ वियन्ति पृथग्भवन्ति।

—ऋध् (ऋधु संराद्धौ)। यं कामयेताङ्गैरेनं व्यर्धयानीति (ऐ० ब्रा० ३।३)। व्यृद्धिर्वियोग इति गोविन्दस्वामी।

—क्लृप् (कृपू सामर्थ्ये)। येनास्योष्ट्रस्य भक्षणं न विकल्पयति स्वामी (सिंहः) (पञ्चत० १।४०१ इतो नातिदूरे)। न विकल्पयति न सन्दिग्धे, न सन्देहविषयी करोति।

—गै (कै गै शब्दे)। सत्यपि प्रतिवेदान्तं सृज्यमानेष्वाकाशादिषु क्रमादिद्वारके विगाने न कर्तरि किञ्चिद् विगानमस्ति (ब्र० सू० शां० भा० १।६।१४)। विगानं विरोधोक्तिः।

—ग्रह् (ग्रह उपादाने)। पवित्रं विगृह्णन्ति (पञ्च० ब्रा० ६।६।१२)। दशापवित्रं विस्तारयन्तीत्यर्थः।

—चि (चिञ् चयने)। सर्वाणि रूपाणि विचित्य धीरो नामानि कृत्वाऽभिवदन्यदास्ते (तै० आ० ३।१२।७)। विचित्य निर्माय।

—धृ (धृञ् धारणे)। यथोदकसन्तानस्य विधारयिता लोके सेतुः क्षेत्रसम्पदामसम्भेदाय (ब्र० सू० शां० भा० १।३।१६)। विधारयिता विरमयिता।

—पच् (डुपचष् पाके)। सर्वाणि पूर्वकर्माणि ह्यन्ते जन्मनि विपच्यन्ते (न्याभा० ४।१।६४)। विपच्यन्ते परिणमन्ते, फलन्ति, फलानि प्रसुवते।

—प्रु (प्रुङ् आप्रवणे)। तस्य धनुर्विप्रवमाणं शिर उदवर्तयत् (तै० आ० ५।१।५)। विप्रवमाण वियुतार्टनीकं भवत्।

—मृज् (मृजू शुद्धौ)। हलश्च (पा० ३।३।१२१) इत्यत्र वीमार्ग इत्युदाहरणं वृत्तौ स्थितम्। वीमार्गः समूहनीति पदमञ्जरी।

—वस् (वस निवासे)। निरोग्य पानं मदनी मुत्तमं निशाविवासेषु चिराद् विमाद्यति (सौन्दर० ६।२६)। विवासः समाप्तिरवसानम्।

—शी (शीङ् स्वप्ने)। तत् किं जीवो वेदितव्येनोपदिश्यत उत मुख्यः प्राण उत परमात्मेति विशय (ब्र० सू० शां०भा० १।४।१६)। विशयः संशयः।

—सि (षिञ् बन्धने)। वि मृडीकाय ते मनो रथीरश्वं न सन्दितम्। गीर्भिर्वरुण सीमहि (ऋ० १।२५।३)॥ विसीमहि विषितं शिथिलं कुर्मः।

—स्फुर् (स्फुर ईषच्चलने)। विस्फारो धनुषः स्वान इत्यमरः।

—हृ (हृञ् हरणे)। यदिदं बहुधाऽग्निर्विह्रियते (पञ्च० ब्रा० १०।१२।१०)। अन्यत्रान्यत्र च प्रणीयत इत्यर्थः।

## व्यभि (वि+अभि)

—चर् (चर गतिभक्षणयोः)। इममभ्युपगमं तदीययैव प्रक्रियया व्यभिचारयति (ब्र० सू० शां० भा० २।२।१०)। व्यभिचारयति व्यभिचारमस्याचष्टे।

## व्याङ् (वि+आ)

—कुप् (कुप क्रोधे)। उत्क्रान्तिगत्यागतिश्रुतिव्याकोपः स्यात् (ब्र० सू० शां भा० २।४।७)। व्याकोपो विरोधः।

—पद् (पद गतौ)। त एव (वातपित्तश्लेष्माणः) व्यापन्नाः प्रलयहेतवः (सुश्रुत० सूत्र० २१।३)। व्यापन्ना विकृताः। न च सन्धयः। व्यापादितास्तथा हन्युः··· (सुश्रुत० शरीर० ५।३५)। व्यापादिता आहताः।

## व्युद् (वि+उद्)

—पद् (पद गतौ)। नारदं स्वयमेव सनत्कुमारो व्युत्पादयति (ब्र० सू० शां० भा० १।३।८)। प्रबोधयतीत्यर्थः।

## विनिर् (वि+निर्)

—बन्ध् (बन्ध बन्धने)। वैरं विनिर्बन्धम् (            )। अनन्तरायमित्यर्थः। वनवास-विनिर्बन्धं नोपसंहरते यदा (मार्क० १०६।४६)। विनिर्बन्धो निर्बन्धोऽभिनिवेशो हठः।

## आङ्

—दा (डुदाञ् दाने)। वसुदेवसुतौ वीक्ष्य प्रीता दृष्टिं न चाददुः (भा० पु० १०।४१।७)। आददुः=आददिरे=प्रत्याजह्रुः।

—यज् (यज देवपूजासंगतिकरणदानेषु)। आ हि ष्मा सूनवे पितापिर्यजत्यापये सखा सख्ये वरेण्यः (ऋ० १।२६।३)। आयजति ददाति।

—वृत् (वृतु वर्तने)। आनुपूर्वी स्त्रियां वाऽऽवृत् परिपाटी अनुक्रम इत्यमरः।

—सद् (षद्लृ विशरणगत्यवसादनेषु)। एदं बर्हिर्यजमानस्य सीद (ऋ० ३।५३।३)। आसीद निषीद।

—सिच् (षिच क्षरणे)। आसेचनवन्ति पृषदाज्यस्य पूरयन्ति (आश्व० गृ० ४।३।१६)। आसेचनवन्ति बिलवन्ति (पात्राणि)।

—सृ (सृ गतौ)। अज्ञातविविधासारतोयशस्यः (पञ्चत० ३।३९)। आसारो भोज्यभक्ष्यसामग्री।

—स्था (ष्ठा गतिनिवृत्तौ)। वरुणाय देवता राज्याय नातिष्ठन्त (पञ्च० ब्रा० १५।३।३०)। राज्यं दातुं नाभ्युपागमन् इत्यर्थः।

—हृ (हृञ् हरणे)। ऋत्विजो वृत्वा मधुपर्कमाहरेत् (आश्व० गृ० १।२४।१)। आहरेदुपहरेत्।

### आङ् अव (आ+अव)

—सो (षो अन्तकर्मणि)। ऋद्धमावसितं धान्यम् इत्यमरः। वसेराच्छादनार्थकादपि व्युत्पादयन्ति।

## नि

—ग्रह् (ग्रह उपादाने)। उद्ग्राभं च निग्राभं च ब्रह्म देवा अवीवृधन् (३।३।३५ सूत्रे भाष्ये)। निग्राभं स्रुग्निपातनं कृत्वा।

—धृ (धृञ् धारणे)। ऋबीसे ह विनिक्षिप्य स्कन्नं रात्रौ न्यधारयत् (बृ० दे० ५।८४)। न्यधारयत् अधोऽधात्।

—मे (मेङ् प्रणिदाने)। (या शक्तिः) कुण्डलाभ्यां निमायाथ दिव्येन कवचेन च (भा० द्रोण० १८०।२१-२२)। निमाय प्रणिदाय।

—रुध् (रुधिर् आवरणे)। उत्तरस्मिन्क्षणे उत्पद्यमाने पूर्वः क्षणो निरुध्यते (ब्र० सू० शां० भा० २।२।२०)। निरुध्यते नश्यति।

—व्ये (व्येञ् संवरणे)। निवीतं कण्ठावलम्बितम् इत्यमरः। करद्वये वहिष्कृते ऋजुभावेन गले लम्बितं यज्ञसूत्रं निवीतमुच्यते।

—सृज् (सृज विसर्गे)। निसृष्टः किल मे मृत्युः (भा० पु० १०।३६।३१)। निसृष्टो निश्चितः, निर्णीतः।

## अधि

—ऊह् (ऊह वितर्के)। ग्राव्णः संसाद्य द्रोणकलशमभ्यूहन्ति (पञ्च० ब्रा० ६।६।१)। अभ्यूहन्ति स्थापयन्ति।

—वास् (वास उपसेवायाम्)। संस्कारो गन्धमाल्याद्यैर्यः स्यात्तदधिवासनम् इत्यमरः।

## अपि

—इ (इण् गतौ)। वृषेव वाजी शिशुमतीरपीत्या (ऋ० २।४३।२)। अपीत्य व्यवायार्थमुपगम्य। सांहितिको दीर्घः।

—स्था (ष्ठा गतिनिवृत्तौ)। एको वो देवोऽप्यतिष्ठत् स्यन्दमाना यथावशम् (अथर्व० २।१३।४)। अप्यतिष्ठत् अभ्यतिष्ठत्। अध्यर्थेऽपिः।

## अति

—नी(णीञ् प्रापणे)। पुरा द्वादश्या दीक्षेत यद् द्वादशीमतिनयेदन्तर्धीयेत (पञ्च० ब्रा० ९।९।१५)। अतिनयेत् अतिक्रामेत् अतीयात्।

—पद् (पद गतौ)। अनिधनमन्ततो भवति स्वर्गस्य लोकस्यानतिपादाय (पञ्च० ब्रा० ६।३)। अतिपादो विनाशः।

—मन् (मन ज्ञाने)। अतीव यो मरुतो मन्यते नः (अथर्व० २।१२।६)। अतिमन्यतेऽतिक्रान्तान्मन्यते।

## उद्

—आस् (आस उपवेशने)। यदा यजमानः समे यियक्षते तदा समे यजेतेति वचनमुदास्ते। स्वार्थस्य प्राप्तत्वात् (याज्ञ० १।८१ मिताक्षरायाम्)। उदास्ते प्रचोदनापराङ्मुखमवतिष्ठते। प्रेरकं न भवतीत्यर्थः।

—इ (इण् गतौ)। श्रीमद्भिरुदितोदितैः (हरि० २।२२।१६)। उदितेन कथाप्रसङ्गेन उदितैरुद्भटैः प्रकाशैरिति नीलकण्ठः।

—क्रम् (क्रमु पादविक्षेपे)। उत्तरेणोत्क्रमयेत् (आश्व० गृ० १।८।३)। (वधूमुदकात्)। उत्तारयेदित्याह।

—क्लिश् (क्लिश उपतापे)। यत्किञ्चिद् दोषमुत्क्लेश्य भक्तं कायान्न निर्हरेत् (सुश्रुत० सूत्र० २०।२०)। उत्क्लेश्य प्रकुपितं कृत्वा।

—गै (कै गै शब्दे)। बृहस्पतिर्वै देवानामुदगायत् (पञ्च० ब्रा० ६।७। १)। उदगायत् औद्गात्रमकरोदित्यर्थः।

—ग्रह् (ग्रह उपादाने)। उद्ग्राभं च निग्राभं च ब्रह्म देवा अवीवृधन् (पा० ३।३।३५ सूत्रे भाष्ये)। स्रुगुद्यमनं कृत्वेत्यर्थ।

—तस् (तसि भूष अलङ्करणे)। पुंस्युत्तंसावतंसौ द्वौ कर्णपूरे च शेखरे इत्यमरः। इह उच्च वश्च समानार्थकाविति विस्पष्टम्।

—दिश् ( दिश अतिसर्जने, दिशिरुच्चारणक्रिय इति भाष्यम् )। सचैल-मुद्दिष्टं तस्य पापप्रशान्तये (पञ्चत० ३।११७)। उद्दिष्ट कथितं स्मृतम्।

—मस्ज् (टु मस्जो शुद्धौ)। दन्तोलूखलिनश्चैव तथैवोन्मज्जकाः परे (रा० ३।६।३)। उन्मज्जकाः कण्ठदघ्नजले हेमन्तेषु स्थित्वा तपः साधकाः।

—मा (मा माने माङ् माने)। स्वशब्दोन्मानाभ्यां च (ब्र० सू० २।३।२२)। उद्यम्य मानमुन्मानम्।

—वस् (वस निवासे)। रूपं तमुदवासयत् (भा० पु० १०।१६।१)। उदहरत्, निरगमयत्, निरक्रमयत्। आत्मनियमाः सहयमा कतिपयाहर्गणेन वियुज्यमानाः किल सर्व एवोदवसन् (भा० पु० ५।८।८)। उत्सन्ना अभूवन्।

—शास् (शासु अनुशिष्टौ)। नू मे ब्रह्माण्यग्न उच्छशाधि (ऋ० ७।१। २०)। उत्कर्षेण शोधितानि कुरु।

—सिध् (षिध गत्याम्)। उत्सेधेन वै देवाः पशूनुदसेधन् निषेधेन पर्यगृह्णन् (पञ्च० ब्रा० १५।६।११)। उत्सेध उन्नतप्रदेशः। उदसेधन् अपाक्रमयन्।

—हन् (हन हिंसागत्योः)। सङ्घोद्घौ गणप्रशंसयोः (पा० ३।३।८६)। उद्धन्यत उत्कृष्टो ज्ञायत इत्युद्घः। योऽस्य मूर्धानमुदहन् (पञ्च० ब्रा० ६।५।१)। उदहन् ऊर्ध्वं आहतवान्।

## अभि

—इ (इण् गतौ)। तासामेकामभिगच्छन्नंहस्वान् भवति (नि० ६।२७। २)। अभिगच्छन्नतिक्रामन्। अत्यर्थेऽभिः।

—धा ( डुधाञ् धारणपोषणयोः )। मालेति चेद् ब्रूयुः स्रगित्यभिधापयीत (अश्व० गृ० ३.८।१३) । अभिधापयीत अभिधापयेत् उच्चारयेत् ।

—पद् (पद गतौ) । ज्ञातीनां हि मिथो भेदे यन्मित्रं नाभिपद्यते (भा० उ० ६३।१५) । नाभ्युपपद्यते, नानुगृह्णाति । उत्तर प्रत्युवाचेदमभिपन्नो युधिष्ठिरे (भा० वि० ७१।२२) । अभिपन्नोऽपराद्धः, अपराधं कृतवान् ।

—भू (भू सत्तायाम्) । वैशाखशुक्लद्वादश्यां स्वप्ने योऽभिभवं तव । करिष्यति स ते भर्ता रजिपुत्रि भविष्यति (वि० ३२।५।१४) ॥ अभिभवो हठात् संभोगः ।

—हृ ( हृञ् हरणे )। लोहाभिहारोऽस्त्रभृतां राज्ञां नीराजनाविधिः (अमरः) । लोहस्य शस्त्रस्याभितो हरणम् ।

## अभ्युद् (अभि+उद्)

—स्मि (ष्मिङ् ईषद्धसने )। कुमुदोत्फुल्लमुदकं ताराभिश्चित्रमम्बरम् । सममभ्युत्स्मयन्तीव शर्वरीष्वितरेतरम् ( हरि० ३।१६।२० ) ॥ अभ्युत्स्मयन्ति गर्वमाविष्कुर्वन्तीत्यर्थः ।

## प्रति

—इ (इण् गतौ) । एकदा पाण्डवान्द्रष्टुं प्रतीतान्पुरुषोत्तमः (भा० पु० १०।५८।१) । प्रतीतान् प्रकटान् अज्ञातवासान्निर्गत्य सर्वत्र प्रकाशान् । नैनमेते रश्मयः प्रत्यायर्यान्ति (छां० उ० ५।५।२) । न परावर्तयन्ति । अप्रतिरोधका भवन्तीत्यर्थः ।

—ईक्ष् (ईक्ष दर्शने) । कुम्भकर्णं प्रतीक्ष्यैव हरयोय प्रदुद्रुवुः (रा० ६।६।३१) । प्रतीक्ष्य अभिमुखे वीक्ष्य ।

—ऊह् (ऊह वितर्के)। अहत्वा समरे कृष्णमप्रत्यूह्य च रुक्मिणीम् (भा० पु० १०।५४।२० ) । अप्रत्यूह्य अप्रत्यावर्त्य । अप्रतिहृत्येति त्वक्षरार्थः ।

—ग्रह् (ग्रह उपादाने) । शूद्राः प्रतिग्रहीष्यन्ति (भा० पु० १२।३।३८) । दानं ग्रहीष्यन्तीत्यर्थः । प्रेत्र रिच्यते यो याजयति प्रति वा गृह्णाति (तै० ब्रा० २।१६) । उक्तोऽर्थः ।

—पद् ( पद गतौ )। यस्मिन्कृष्णो दिवं यातस्तस्मिन्नेव तदाहनि । प्रतिपन्नं कृतयुगमिति प्राहुः पुराविदः ( भा० पु० १२।२।३३) । प्रतिपन्नं

प्रारब्धम् । प्रतिपद् हि चान्द्रमासस्य प्रथमा तिथिर्भवति । को धिष्ण्यां प्रति वाचं पपाद (ऋ० १०।११४।६) । प्रतिपपाद प्रतिपादयति करोति ।

—भा ( भा दीप्तौ ) । देव मम सन्धिविग्रहयानानि त्रीण्यपि न प्रति भान्ति (पञ्चत० ३।४३ इत्यतोऽनन्तरम्) । प्रतिभान्ति रोचन्ते ।

—स्था (ष्ठा गतिनिवृत्तौ) । तस्माद् वयः पुच्छेन प्रतिष्ठायोत्पतति पुच्छेन प्रतिष्ठाय निषीदति (पञ्च० ब्रा० ५।१।१७) । प्रतिष्ठाय आश्रयमवष्टभ्य ।

### प्रत्याङ् (प्रति+आ)

—ह्वे (ह्वेञ् स्पर्धायां शब्दे च) । छायाप्रत्याह्वयाभासा ह्यसन्तोऽप्यर्थकारिणः (भा० पु० ११।२८।५) । प्रत्याह्वयः प्रतिध्वनिः ।

### प्रत्युद् (प्रति+उद्)

—यम् ( यम उपरमे ) । सतोबृहतीषु स्तुवन्ति पूर्वयोरह्नोः प्रत्युद्यमाय (पञ्च० ब्रा० १२।४।२२) । प्रत्युद्यमाय प्रतिरूपवेनोच्छ्रयणाय ।

## परि

—अस् (असु क्षेपे) । एवं सुहृद्भिः पर्यस्तः पुण्यश्लोकशिरोमणिः (भा० पु० १०।७१।३१) । पर्यस्तः परिवेष्टितः । इदं नु माथिनं हुव इति पर्यासः (ऐ० ब्रा० ५।४) । पर्यासः समाप्तिः ।

-इ (इण् गतौ) । प्रभुर्गात्राणि पर्येषि (पञ्च० ब्रा० १।२।८) । पर्येषि व्याप्नोषि । वैदिक तूदाहरणं पर्येष्यं यद्यस्ति क्वचित् । (नि० १।५) इत्यत्र स्कन्दस्वामी । पर्येष्यं मृग्यम् ।

—नी ( णीञ् प्रापणे ) । मुखत एवैनान् यज्ञस्य परिणयति (पञ्च० ब्रा० १७।३।२) । परिणयति प्रापयति (ब्राह्मणत्वम्) इति सायणः ।

—भी (ञिभी भये) । अथापि नेत्येष इदित्येतेन सम्प्रयुज्यते परिभये (नि० १।११) । परिशब्द ईषदर्थः । तद्यथा परिमधुरमपर्याप्तमिति दुर्गः ।

—स्था ( ष्ठा गतिनिवृत्तौ ) । याश्चिद् (अपः) वृत्रो महिना पर्यतिष्ठत् (ऋ० १।३२।८) । परिक्रान्तवान् अरुणद्वा ।

### पर्याङ् (परि+आ)

—गम् ( गम्लृ गतौ ) । वर्जनीयं फलं सर्वमपर्यागतमेव च ( सुश्रुत० सूत्र० ४६।२१० ) । अपर्यागतमपुष्टम् ।

## उप

—आस् ( आस उपवेशने ) । यथा द्वे नार्यावेकं नृपतिमुपासाते छत्रेणैका चामरेण चान्या (ब्र० सू० शां० भा० ३।३।१२) । उपासाते सेवेते ।

—चर् ( चर गतिभक्षणयोः ) । अवन्नवन्तीरुप नो दुरश्चर ( ऋ० ७।४६।२) । उपचर अन्तिक एहि ।

—दा (डुदाञ् दाने) । तस्यैवं वितथे वंशे तदर्थं यजतः सुतम् ।··· भारद्वाजमुपाददुः (भा० पु० ६।२०।३५) ।। भारद्वाजनामानं सुतमुपदामकुर्वन्नित्यर्थः ।

—युज् (युजिर् योगे)। यामन्यामन्नुपयुक्तं वहिष्ठं कर्मन्कर्मन्नाभगमग्निमीडे (अथर्व० ४।२३।३) । उपयुक्तं (होमाधारत्वेन) विनियुक्तम् ।

—वा (वा गतिगन्धनयोः) । तद्वायुरुपयाति (श० ब्रा० १३।३।८।६) । तस्योपरि वातीत्याह ।

—सद् ( षद्लृ विशरणगत्यवसादनेषु ) । य आसुतं कुर्वते यथा दुग्धामुपसीदेदेवं तत् (पञ्च० ब्रा० ४।४।११) । उपसीदेत् उपविशेत् ।

### उपाङ् (उप+आ)

—धा (डुधाञ् धारणपोषणयोः) । कुटुम्बव्यापृतस्तु यः । स्याद् अभ्यागारिकस्तस्मिन्नुपाधिश्च पुमानयमित्यमरः ।

### उपप्र (उप+प्र)

···युज् (युजिर् योगे) । कुमारीशब्दः पुंसा सहासम्प्रयोगमात्रमुपप्रयुक्तो वृद्धादिभिर्वयोविशेषवचनैः समानाधिकरणो भवति ( काशिका ६।२।९५ ) । उपादाय प्रयुक्त उपप्रयुक्तः ।

### उपसम् (उप+सम्)

—चक्ष् ( चक्षिङ् व्यक्तायां वाचि ) । तथा सूचिसूत्रिमूत्रीणामिन्नन्तानामनेकस्वरत्वाद्यशब्दो न सिध्यतीत्याचार्या उपसंचक्षते (शिष्यहितान्यासे ( ३।१। ४३) । अधिकं पठन्तीत्युक्तं भवति ।

इति परिबृंहणम् ।

# अथाशुद्धशोधनम्

कृतेपि भूरिपरिश्रमेऽनक्षरा अक्षरयोजकाः शोधनमबुध्यमाना आकुलं कुर्वन्तीति तत्र किं कुर्मः । इह भ्रान्तिं सम्भावयन्तस्तत्कृताः केचन प्रमादाः सहशोधना न्यस्यन्तेऽनुक्रमेण—

| पृष्ठे | पङ्क्तौ | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| ८२० | २६ | = | विषयार्जन तृष्णेत्यधिकं पाठ्यम् |
| ८४६ | १७ | पुषरहितौ | पुरुषरहितौ |
| ८७१ | १ | नो अक्रन् | नो अक्रन् |
| ८८७ | २५ | अमुमन्यते | अनुमन्यते |
| ८६५ | १७ | नैत्वके | नैत्यके |
| ८६६ | २० | इदमुपलपते | इदमुपकल्पते |
| ६२६ | १६ | हविदान० | हविर्दान० |
| ६२६ | १७ | उपयमः प्रतिपादनम् | उपयमो निबन्धः प्रतिपादनम् |
| ६३५ | ६ | सादयनि | सादयति |
| १०१७ | २१ | ०त्यवंश्यम० | ०त्यवश्यम० |
| १०२५ | ६ | संवेशसं | संवेशनं |
| १०६७ | २२ | कोटृय | कोट्या |
| १०७६ | ७ | विष्फरन्ती | विष्फुरन्ती |
| ११११ | २२ | समुपस्थानान्न | समुपस्थानान्मा |

इयं मे विज्ञप्तिः—प्रथमखण्डे किञ्चित्प्रास्ताविकम् इत्यत्र वर्षपूगमिति प्रयुञ्जानः प्रामदम् । तन्मे मर्षणीयम् । पूगः पुमान् भवति न नपुंसकम् । प्रथमखण्डे (पृ० १५५) त्रयोविंश्यां पङ्क्तौ इष्वन्त इति प्रयोगो मत्कृतः । तत्र इषा तद्वन्त इति पाठ्यम् । तादृशस्य प्रयोगस्याभावात् ।